

UNIVERSITY OF TRAVANCORE.

SANSKRIT SERIES No. CXLIX.






# AITAREYA BRĀHMAṆA

WITH THE VṚTTI SUKHAPRADĀ

OF

## ṢAḌGURUŚIṢYA.

EDITED BY

R. Anantakṛṣṇa Śāstri.

VOL. I. 1—15 ADHYAYAS.

TRIVANDRUM.

1942.

 [Price Rs. 6-8-0



UNIVERSITY OF TRAVANCORE.

SANSKRIT SERIES No. CXLIX.





# AITAREYA BRĀHMAṆA - Vol. I

WITH THE VṚTTI SUKHAPRADĀ

OF

## ṢAḌGURUŚIṢYA

EDITED BY

R. Anantakrisna Śāstri.



VOL. I. 1—15 ADHYAYAS.

TRIVANDRUM.

1942.

 [Price Rs. 6-8-0.

# प्रथमसंपुटविषयानुक्रमणिका ।



---

| विषयः | पृष्ठम्. |
|---|---|
| **पञ्चमोऽध्यायः ।** | |
| सोमक्रयणमारभ्याग्निप्रणयनान्त- | |
| ग्रुपांशुवचनार्थाख्यायिका | १६७ |
| अग्निप्रणयनीयर्ग्विधिः | १७१ |
| तत्र क्षत्रियवैश्ययोर्विशेषेण | |
| प्रथमर्ग्विधिः | १७२ |
| सामान्येनाग्निप्रणयनीया ऋचः | १७४ |
| वाग्विसर्गविधिः | ,, |
| अग्निप्रणयनीयर्क्प्रशंसा | १८१ |
| हविर्धानप्रवर्तनीयर्ग्विधिः | १८२ |
| तत्र चोद्यपरिहारौ | १८३ |
| उत्तमया परिधाने कालविधिः | १८७ |
| परिश्रयस्य शङ्कुनिखातान्तत्वम् | १८८ |
| हविर्धानीयानामष्टानामृचां प्रशंसा | १८९ |
| प्ररोचनापूर्वकमग्नीषोमप्रणयनीय- | |
| सप्तदशर्ग्विधिः | १९० |
| तत्र चोद्यपरिहारौ | ,, |
| उत्तमया समापने नैमित्तिक- | |
| ऋगन्तरविधिः | १९७ |
| सप्तदशर्चां प्रशंसा | ,, |
| **षष्ठोऽध्यायः ।** | |
| यूपार्थाख्यायिका | २०० |
| यूपशब्दनिर्वचनम् | ,, |
| यूपस्थापनविधिः | २०२ |
| यूपस्याष्टाश्रित्वम् | ,, |
| यूपस्तवः | २०३ |
| कामनानुसारेण यूपप्रकृतिद्रव्यविधिः | २०४ |
| प्ररोचनापुरस्सरं होत्रानुवक्तव्य- | |
| यूपाञ्जनोच्छ्रायपरिव्याणाभि- | |
| धायिनीनामृचां विधिः | २०७ |
| अमतिशब्दनिर्वचनम् | २१० |
| उक्तर्क्प्रशंसा | २१६ |
| पशुसमाप्त्यनन्तरं यूपस्त्याज्यो | |
| वा नवेति विचारः | २१७ |
| पशुकामस्येतिहासपुरस्सरं | |
| यूपावस्थानविधिः | ,, |
| स्वर्गकामस्य प्रक्षेपविधिः | २१८ |
| अर्वाचीनमते यूपस्थाने स्वरुप्रक्षेप- | |
| विधिः | २१९ |
| अग्नीषोमीयपश्वालम्भविधिः | २२० |
| पीनाङ्गपशुग्रहणे हेतुकथनम् | २२१ |
| ब्रह्मवादिमतनिराकरणपूर्वकं पशोः | |
| हुतशेषभक्षविधिः | २२२ |
| आप्रीयागविधिः | २२४ |
| नराशंसशब्दनिर्वचनम् | २२६ |
| त्वष्टृशब्दनिर्वचनम् | २२८ |
| यथर्ष्याप्रीसूक्तविधिः | २२९ |
| पर्यग्निकरणविधिः | २३१ |

---

## सप्तमोऽध्यायः ।

नवमोऽध्यायः ।



दशमोऽध्यायः ।

---

## एकादशोऽध्यायः ।

---

## द्वादशोऽध्यायः ।

---

## त्रयोदशोऽध्यायः ।

विषयः. पृष्ठम्.

## टिप्पणीस्थ सांकेतिकसूची ।

| | | |
|---|---|---|
| अथर्वसं० | = | अथर्वसंहिता |
| आप० श्रौ० सू० | = | आपस्तम्बश्रौतसूत्रम् |
| आ० श्रौ० सू० | = | आश्वलायनश्रौतसूत्रम् |
| ऋक्प्रा० | = | ऋक्प्रातिशाख्यम् |
| ऋक्सं० | = | ऋक्संहिता |
| ऐ० आ० | = | ऐतरेयारण्यकम् |
| ऐ० ब्रा० | = | ऐतरेयब्राह्मणम् |
| कौषी० उ० | = | कौषीतक्युपनिषत् |
| गो० ब्रा० | = | गोपथब्राह्मणम् |
| ताण्ड्यब्रा० | = | ताण्ड्यब्राह्मणम् |
| तै० आ० | = | तैत्तिरीयारण्यकम् |
| तै० प्रा० | = | तैत्तिरीयप्रातिशाख्यम् |
| तै० ब्रा० | = | तैत्तिरीयब्राह्मणम् |
| तै० सं० | = | तैत्तिरीयसंहिता |
| नृसिंहपूर्व० | = | नृसिंहपूर्वतापिन्युपनिषत् |
| पा० सू० | = | पाणिनिसूत्रम् |
| पा० सू० वा० | = | पाणिनिसूत्रवार्त्तिकम् |
| बृह० उप० | = | बृहदारण्यकोपनिषत् |
| मार्क० पु० | = | मार्कण्डेयपुराणम् |
| या० निघ० | = | यास्कनिघण्टुः |
| या० निरु० | = | यास्कनिरुक्तम् |
| (शु० ब्रा०) शत० ब्रा० | = | शतपथब्राह्मणम् |
| शा० ब्रा० | = | शाङ्खायनब्राह्मणम् |
| सर्वा० | = | सर्वानुक्रमणी |
| सर्वा० परि० | = | सर्वानुक्रमणीपरिभाषा |

# शुद्धिपत्रिका ।

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७ | १४ | अभिप्रैति | अभि प्रति |
| ४२ | १३, १४ | विचक्षणः | विचक्षणम् |
| " | १४ | रुक्तो | रुक्तं |
| ४२ | १५ | हरामः | हराम |
| " | १९ | इति वाजसनेयिनः | (प्रमादपतितमिदम्) |
| ४८ | २, १८ | जानीथ | जानीत |
| ५९ | १८ | गायत्र्य | गायत्र |
| ५६ | ४ | भवत्येवं | भवन्त्येवं |
| " | १७ | प्राणापानौ | प्राणोऽपानौ |
| ६१ | १६ | त | ता |
| ६२ | ८ | सर्वे छन्दो | सर्वच्छन्दो |
| ६३ | २० | २-१-२ | २-१-२९ |
| ७७ | ४ | तस्माद् | कस्मात् |
| ८४ | ९ | सुन्लोपश्छान्दसः(!) | सुलोपश्छान्दसः |
| ८८ | १५ | ६-३-२-८ | ६-३-२८-३ |
| ८९ | ७ | यदाह (पूर्वपङ्क्तौ मूलवाक्येन योजनीयमिदम्) | |
| ९० | १ | वाचं | वाचा |
| १०० | २० | रभेदा | रभेदा |
| ११६ | २२ | शा० ब्रा० | शत० ब्रा० |
| ११८ | १६ | गणान् | गणात् |
| १२३ | २२ | १-९-२-१४ | १९-२-१४ |
| १३६ | ३ | दुहा | दुघा |

| पार्श्वम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३७ | १८ | मघर्मे | मा वर्मे |
| १४९ | ,, | प्रणुदते | प्रणुदते इति तै० सं० ६-२-२ |
| १५६ | ,, | इति इत्येके | इत्येके |
| १६६ | १९, २० | निह्ववते, निह्ववन्ते | निह्नुवते |
| १६९ | १४ | स्कन्ना | स्कन्नां |
| १८२ | १२ | ६-४-४१ | ६-४-१११ |
| १८८ | ९ | यः | ये |
| ,, | २० | विष्णा | विष्ण |
| २२१ | १ | मेचयति | मोचयति |
| २३२ | १६ | अजैर | अजेद |
| २३८ | ९ | सृजत | सृजतात् |
| २४४ | २४ | राविष्ठेति | राविष्टेति |
| २५५ | १८ | दिष्ट | दिळा |
| २५६ | २१ | पूर्वा | पूर्वां |
| २६४ | ७ | स्वनतात् | खनतात् |
| ३०१ | १८ | दूर | दुर |
| ३०९ | १७ | वसतीवरीः | वसतीवरी |
| ३१२ | ७ | बृहस्पतिवते | बृहस्पतिमते |
| ३१९ | ११ | सारिण | सारिणा |
| ३४६ | १७ | मवे | मेव |
| ३५४ | १ | रेळा | रेळां |
| ३५६ | ४ | तष्णीं | तूष्णीं |
| ३५८ | १७ | अषण | अण् न |
| ४१९ | ,, | पादमद | पादं मद |
| ४४२ | १८, १९ | तै० ब्रा० २-४-७ अनुवाके द्रष्टव्याः | (प्रमादपतितमिदम्) |

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४४६ | ९ | न्तर्वे | न्तदे |
| ४४७ | १५ | पादे | पदे |
| ४५४ | १३ | गरं शस्त्वा | गरशस्त्वा |
| ४६४ | ९ | गृहीतं | ग्रहीतुं |
| ४८१ | १९ | मरुतस्त्वथा | मरुतस्तथा |
| ,, | २० | शुद्रो | शूद्रौ |
| ४८४ | १८ | इममेवार्थ | इममेवार्थं |
| ५४३ | ११ | धाय्या | धाय्यां |
| ,, | १९ | याज्या | याज्याः |
| ५४४ | ९ | जनास्ततः | जनात् ततः |
| ,, | ,, | स्वार्थे कृत | स्वार्थेऽण् कृत |
| ५५१ | २१ | तदुद्गातारो | तमुद्गातारो |
| ५५२ | १६ | वक्तारो | पक्तारो |
| ५५७ | १९ | गर्हितमभूत् | गर्हितं भूत् |
| ५६१ | २३ | ७–१६ | ७–९६ |
| ५६३ | ,, | १, २ | २, १ |

---

॥ श्री ॥

। ॐ ।

# ऐतरेयब्राह्मणं

## श्रीषड्गुरुशिष्यविरचितसुखप्रदाख्यवृत्तिसहितम्

श्रीगणपतये नमः

सुखप्रदा

विनायकः शूलपाणिर्मुकुन्दः सूर्यो व्यासः शिवयोगीति ये षट् ।
तेभ्यो नमः सप्तविद्यामृतस्य प्रदातृभ्यः स्वाश्रितवत्सलेभ्यः ॥

आद्या सर्वानुक्रमणी द्वितीया महाव्रतं चोपनिषद्द्वयं च ।
*माहाव्रतं सूत्रमासां तृतीया चात्वारिंशं ब्राह्मणं वै चतुर्थी ॥
सूत्रं पञ्चम्यत्र षष्ठी तु सूत्रं शाकल्यस्य संहिता सप्तमीति ।
इत्येतद्वै सप्तविद्यामृताख्यं दत्तं स्वयं गुरुभिः षड्भिरेतैः ॥

---

* पञ्चममिदमारण्यकमैतरेयारण्यकस्य माहाव्रतं सूत्रमिति । तथाच सायणाचार्यः— "ननु प्रथमारण्यकेऽपि 'अथ महाव्रतम् इन्द्रो वै वृत्रं हत्वा' इत्यादिना महाव्रतप्रयोगोऽभिहितः । पञ्चमेऽपि तस्यैवाभिधाने पुनरुक्तिः स्यात् । नायं दोषः । सूत्रब्राह्मणरूपेण तयोर्विभेदात् । पञ्चमारण्यकमृषिप्रोक्तं सूत्रम् । प्रथमारण्यकं त्वपौरुषेयं ब्राह्मणम् । अत एव तत्रार्थवादप्रपञ्चेन सहिता विधयः श्रूयन्ते । पञ्चमे तु न कोऽप्यर्थवादोऽस्ति । शाखान्तरगताश्च मन्त्रा बहव उदाह्रियन्ते । तस्माद् 'अथातस्य समाम्नायस्य' इत्यादिद्वादशाध्यायवत् 'महाव्रतस्य पञ्चविंशतिम्' इत्यादि पञ्चमारण्यकं सूत्रमेव" इति ।

वेदानङ्गोपाङ्गपूर्णांस्तु वन्दे यजुस्सामाथर्वबाह्वृच्यरूपान् ।
तेषां प्रवक्तॄनपि शौनकादीन् ब्रह्मादिका देवता ब्राह्मणांश्च ॥
छन्दश्शास्त्रं व्याकरणं निरुक्तं शीक्षा ज्योतिश्शासनं कल्पसूत्रम् ।
अङ्गानि षट् न्यायविद्या पुराणं मीमांसनं स्मृतयश्चेत्युपाङ्गम् ॥

विनायको गुहप्रियो गिरीन्द्रजेशनन्दनः ।
सुरेन्द्रवृन्दवन्दितस्त्रिशूलपाणिरिन्दुभृत् ॥
श्रुतीस्तु गा ररक्ष यः स देवकीसुतः प्रभुः ।
समस्तलोकलोचनं च[1] सूर्य इष्टदृष्टिदः ॥
प्रणीतभारतामृतः पराशरात्मजो मुनिः ।
वरप्रदः स्मिताननः शिवादियोगिनामकः ॥
इमे हि षट् प्रपान्तु मां सदा नमामि तानहम् ।
इमे हि मामयूयुजन् यथाश्रुतं वदेदिति[2] ॥
तदैतरेयकं महत् प्रवर्त्यते यथामति ।
यथाश्रुतं यथास्मृतं महात्मनां प्रसादतः ॥
महिदासैतरेयर्षिसंदृष्टं ब्राह्मणं तु यत् ।
'अग्निर्वा'इतिहारभ्य 'स्तृणुतेस्तृणुते'ऽन्तकम् ॥
चात्वारिंशाख्यमध्यायाश्चत्वारिंशदिहेति डण् ।*
प्रतायते तस्य वृत्तिर्नाम्ना चैषा सुखप्रदा ॥
गोविन्दस्वामिकृष्णादिभाष्यदृष्टार्थभाषिणी ।
नास्या वृत्तेरर्थवत्त्वमनुक्तार्थोपवर्णनात् ॥

---

१. 'स' ख पाठः. २. 'वदेदिति' क. पाठः.

---

* 'त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्' पा० सू० ५-१-६२.

अनुक्तानामभावेन किंत्वेकत्रोपदर्शनात् ।
नद्यां काशाः कण्टका वृद्धगुल्मे पत्रस्तत्त्वं रम्भमारामदेशे ।
तटाकादौ पुष्पजातं विचित्रं तैः शेखरः कुशलैर्वैव साध्यः ॥

भाष्यकारैर्ब्राह्मणार्थे व्याख्यातेऽन्यो वदेत् कथम् ।
समुद्धृते महावातैर्मुखवातः करोति किम् ॥

उक्तज्ञानेऽप्यशक्तानामनुक्तोक्तौ तु का कथा ।
न ह्यलब्धानुगमनः क्रोडारोहाय रोदिति ॥

उक्तोक्तिश्च गुणायैव सतां दोषाय चासताम् ।
प्रकल्पते भावभेदाद् भावा भिन्ना भवन्ति हि ॥

जातो गोविन्द इत्यर्थः सदसद्भावितो यथा ।
मोक्षाय नरकायापि भावभेदात् प्रकल्पते ॥

किञ्चिदुक्त्यभिसन्तुष्टा दोषान्धा गुणचक्षुषः ।
क्लेशज्ञाः पण्डिताः सन्ति वक्तुरत्र परायणम् ॥

अतः खल्वेषु सत्स्वेव वृत्तिरेषा प्रवर्तते ।
*नहि भिक्षुकसत्त्वेन स्थालीनामनधिश्रयः ॥

न चामयभयाल्लोके त्यज्यते भोजनं जनैः ।
सत्स्वेव मृगसंघेषु प्रोप्यन्ते कर्षकैर्यवाः ॥

न तरङ्गनपोवैव स्नायते सागरे जनैः ।
न चाङ्गुलीनां पञ्चानां साम्यमापाद्यते जनैः ॥

वात्स्यायनीये सत्येव मोक्षधर्मः प्रवर्तते ।
येषामेषासम्मता स्यात् तेषां नैषा प्रदर्श्यते ॥

---

* 'नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न च मृगाः सन्तीति यवा नोप्यन्ते' इति ङ्याप्प्रातिपदिकादिति सूत्रे महाभाष्यम् ।

न्यत्वं किं सृगालानामपतो दक्षिणानिलः (?) ।
किं वा कामक्रोधलोभाः शास्त्राणां प्रतिषेधताम् ॥
किं वा पिपासतामर्थे स्वादुतायेति सागरः ।
सुदुष्करतमं चेदं ब्राह्मणार्थोपवर्णनम् ॥
मातुरङ्के निषण्णेन यथा बालेन चन्द्रमाः ।
आहूयमानो नाभ्येति तद्वद् वेदार्थ ईप्सितः ॥
तथापि गुरुपद्कोक्तेरेषा वृत्तिः प्रवर्तते ।
ब्राह्मणारण्यकद्रष्ट्रे मातृशोकौघहारिणे ॥
महिदासैतरेयाय नमो भूयो नमो नमः ॥
अत्रैतरेयर्षिमहेतिहासं पुराणवेदोदितमाहुरार्याः ।
*आसीद् विप्रो यज्ञवल्को द्विभार्यस्तस्य द्वितीयामितरेति चाहुः[1] ॥
स ज्येष्ठयाकृष्टचित्तः प्रियां तामुक्त्वा द्वितीयामितरेति ह्योचे ।
तस्यां जातोऽथ शिशुः संरुदन् स प्रोक्तो मात्रा दुष्ट तूष्णीं भवेति ॥
अनेकजन्मस्मृतियोगभाजा मूकायितं तेन महात्मनापि ।
यद् वासुदेवेति महच्च नाम विष्णोः प्रवक्ष्यामि तदेव मौनी ॥
अन्यैः प्रलापैः किमिहेति मत्वा जजाप जप्यं परमं मुमुक्षुः ।
ज्येष्ठासुता वाग्मिनो दर्पयुक्ताश्चेरुः सपुत्रामितरां प्रहस्य ॥
आहूतास्ते याजनायान्यदेशे यियक्षुणा केनचिद् ब्राह्मणेन ।
प्रयोगेषु कुशला दर्पयुक्ताः समं पित्रायाजयंस्तं समेत्य ॥

१. 'द्वितीया महिषीतरेति' म. पाठः.

* यज्ञवल्ककथायं पुराणादावन्वेष्टव्यः । सायणाचार्यस्तु 'कस्यचित् खलु महर्षेर्बह्व्यः पत्न्यो विद्यन्ते स्म । तासां मध्ये कस्याश्चिदितरेति नामधेयम्' इत्याह ।

तस्माद् देशादागताः केचिदत्र गृहे यज्ञं तं प्रवृत्तं शशंसुः ।
स्वपुत्रपूजाश्रवणेन हृष्टां ज्येष्ठां सपत्नीमितरा निरीक्ष्य ॥
स्वमूकपुत्रस्य समीपमेत्य स्वजन्म पुत्रं च विगर्हयन्ती ।
उवाच शोकाग्निविदीप्तदेहा[1] स्वभर्त्रार्थैः[2] स्वावमानं विचिन्त्य ॥
किं जीविते मे मरणं वरेण्यमकालतो दुर्मरं खल्वहो धिक् ।
वन्ध्या कृतार्था खलु नैव यस्यास्त्वं मूकरूपो भवसीह[3] पुत्रः ॥
भर्त्रा सपत्न्या तनयैश्च तस्यास्त्वां मूत्वाहं बाधिता मुञ्च वाचम् ।
यमोऽपि मां जीवयन पापकारी नैवंविधं नरके दुःखमाहुः ॥
इति श्रुत्वा वचनं सोऽपि तस्या उवाच तां हर्षयन शोकतप्ताम् ।
आत्मारामो नैव मूकोऽहमम्ब जपं तु मोक्षाय करोमि मौनी ॥
रुदंस्तूष्णीं भव दुष्टेति चोक्तस्तथाभवं नैव मूकोऽहमम्ब ।
सम्प्रत्युक्तो मुञ्च वाचं सुतेति वक्ष्यामि वाचं तव हर्षवृद्ध्यै ॥
यत्रासते भ्रातरो मे पिता च गत्वा वदिष्यामि तु तत्र वाचम् ।
इत्युक्त्वागान्मूकरूपो महात्मा भक्तिं वहन पुण्डरीकायताक्षे ॥
मेघौघसंछन्नदिवाकराभो भस्मप्रतिच्छन्नहुताशनाभः ।
यज्ञे स्थिता भ्रातरो दर्पयुक्ता आयान्तमालक्ष्य[4] च मूकमेनम् ॥
मूकस्य यज्ञे किमिहेति दन्तान प्रकाश्य ते चक्रुरथाट्टहासम् ।
स चापि तं यज्ञमनुप्रविश्य त्वारोढुमङ्कं पितरं प्रपेदे ॥

---

१. 'तथा' ख. पाठः. २. 'स्वभर्त्रान्यैः' क. ख. पाठः ३. 'भवतीह' ख. पाठः. ४. 'आयान्तमालोक्य' क. पाठः.

मा[1] मा स्पृशो मूक दुरेति चोक्ता क्रुद्धः पिता न्यरुधच्चैतरेयम् ।
ब्रह्मादिभूतानि तृणावराणि न सेहिरे तस्य तदावमानम् ॥

*विष्णुप्रियद्वादशवर्णमन्त्रजपप्रसंक्षालितदुःखराशेः ।
ब्रह्मर्षिमुख्यस्य समस्तवेदवेदाङ्गनिष्णातविशुद्धबुद्धेः ॥

†क्षमागुणाधारभूतापि[2] देवी वसुन्धरा नाशकत् तद्धि सोढुम् ।
सदोहविर्धानतलं विदार्य सहस्रधुर्योद्गमतुल्यरूपा ॥

ऊर्ध्वं जगामात्मविभूषणैश्च[3] महाद्भुतैः[4] शोभितसर्वदेहा ।
सुवर्णमुक्तामणिरत्नचित्रं सिंहासनं सर्वतोभद्रमाशु ॥

स्वयं कराभ्यां कमलोपमाभ्यां तस्मै ददौ सासनं दिव्यरूपा ।
पित्रा सपत्नीतनयैः सदस्यैर्दृष्टा सुरर्षिप्रमुखैश्च भूतैः ॥

उवाच चैनं स्मितशोभिवक्त्रा विष्णोः प्रिया सा धरणीवरस्य ।
कुमार किं ते पितुरङ्ककेन सुतैः सपत्न्याः परिमर्दितेन ॥

ब्रह्मादिपित्रा खलु विष्णुना त्वं संलालितो[5] मां धरणीति विद्धि ।
मयोपनीतं त्वधिरोह पुत्र सिंहासनं सर्वतोभद्रमाशु ॥

---

१. 'मां' क. पाठः. २. 'भूता तु' ध. पाठः. ३. 'विभूषणैस्तु' क. पाठः. ४. 'महारत्नभिः', ५. 'सुलालितो' ध. पाठः.

---

* 'ओं नमो भगवते वासुदेवाय' इति विष्णुद्वादशाक्षरी. † 'कस्यांचिद् यज्ञसभायां महिदासमवज्ञायान्यान् पुत्रान् स्वोत्सङ्गे स्थापयामास । तदानीं खिन्नवदनं महिदासमवगम्येतराख्या तन्माता स्वकीयकुलदेवतां भूमिमनुसस्मार । सा च भूमिर्देवता दिव्यमूर्तिधरा सती यज्ञसभायां समागत्य महिदासाय दिव्यं सिंहासनं दत्त्वा तत्रैनमुपवेश्य सर्वेष्वपि कुमारेषु पाण्डित्याधिक्यमवगमय्यैतद्ब्राह्मणप्रतिभासनरूपं वरं ददौ' इत्येवं भूमिमितरायाः कुलदेवतामाह सायणः ।

अत्राधिरूढस्य[1] तव प्रसादं करिष्यति ब्रह्मगर्भोऽब्जनाभः।
श्रुत्वा धरित्र्या वचनं स चापि सर्वैर्द्दृष्टस्त्वारुरोहासनं तत् ॥

अथाधिरूढस्य तदाविरासीदग्न्यादिकं द्विःस्तुतेन्तकं च।
चात्वारिंशं ब्राह्मणं प्रायणीयाद्यहां चतुर्विंशतिकेन युक्तम् ॥

एषामङ्गैर्दीक्षणीयादिभिश्च प्रासङ्गिकैः राजधर्मादिभिश्च।
समाप्य स ब्राह्मणं सर्वमन्ते[2] कृत्वोंकारं विरतो ब्रह्मनिष्ठः ॥

ब्रह्मादिभिश्चोदितो मा विरंसीर्ब्रह्मर्षासि[3] त्वैतरेयो महात्मा।
आरण्यकं त्रिविधं वै ददर्श महाव्रतं चोपनिषद्द्वयं च ॥

ततः सर्वेऽपूजयंस्तं समेताः पित्रादयः सह देवर्षिसंघैः।
आरण्यकान्ते प्रणवं स कृत्वा ह्यवारोहदासनाद् भूमिदत्तात् ॥

ततो देवी धरणी सा तिरोभूत् तच्चासनं ते च सुरर्षिसंघाः।
सदोहविर्धानतलं विदीर्णं[4] सुश्लिष्टमासीद् वदतेश्च यज्ञः ॥

अथेतरा सर्वलोकप्रसिद्धं तद् ब्राह्मणारण्यकदर्शनं वै।
श्रुत्वा जहर्षाथ पिता समेत्य सहैव पुत्रैरितरां सपुत्राम् ॥

अपूजयत् सा सपत्नी तथैनामसान्त्वयत् तत्सुतं चैतरेयम्।
स चापि मातुः प्रियकृन्महर्षिः पित्रादिभिः समनुज्ञात एव ॥
वनं प्राप्य तत्र तप्त्वा तपश्च प्राप ब्रह्म दुर्वचं सूरिदृश्यम्।

---

१. 'तत्राधिरूढस्य' ग. पाठः. २. 'सर्वमाशु' ग. पाठः. ३. 'ब्रह्मर्षिरिति' क. पाठः. ४. 'विदीर्णं' ग. ङ. पाठः.

स चैतरेयस्त्वितरासुतत्वात्[*] स्त्रीभ्यो ढक्[†] महिदासस्तथैषः[‡] ॥
महीप्रणीतासन आसनाच्च स्वाम्यासपर्य्यामदनाशनाच्च ।
महादानाद् वेदरूपाच्च नाम त्रिधा निरुक्तं तु पृषोदरादि[§] ॥

---

* भट्टभास्करस्त्वैतरेयपदमेवं निर्ब्रूते—'इतरस्य ऋषेरपत्यमैतरेयः । शुभ्रादिभ्यश्च (४-१-१२३) इति ढक्' इति ।

ऐतरेयारण्यकव्याख्याने खल्वौ मोक्षप्रदाख्ये 'एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः' इत्यस्य व्याख्यानावसरे षड्गुरुशिष्य एवमाह—

'ऋषिर्दृष्टा स्वमात्मानं पारोक्ष्येणाह चान्यवत् ।
एतन्नामाम्यहं नान्यदित्यात्मानं विभावयन् ॥
इतराख्यास्य माताभूत् स्त्रीभ्यो ढक्यैतरेयगीः ।
महिदासो महीदत्तमहासनसमासनात् ।
अवोचाम ब्राह्मणादौ माहिदासेतिहासकम्' ॥ इति ।

†. पा० सू० ४-१-१२०.

‡ ऐतरेयोपनिषन्माध्वभाष्ये —
'प्रादुर्बभूव भगवांस्तपसेतरायां नारायणोऽव्ययमुतस्य विशालनाम्नः ।
तस्मिन् गतेऽम्बरमभूत् सुरविप्रसंघो निश्चेतनस्तदनु पद्मभवोऽसुमस्तौत् ॥
तेन स्तुतः स भगवान् गिरिशेन्द्रमुख्यान् सर्वानथो पदजेन सहैव तेऽथ ।
दासत्वमापुरत एव महत्सुराणां दासत्वतः स महिदास इति प्रसिद्धः ॥
श्रुण्वत्सु तेषु भगवानवदद् रमायै दिव्यां श्रुतिं स परमोऽतिमुदैतरेयीम् ।
सा षड्गुणैः प्रपठिता चतुराननास्याद् यस्यां रहस्यमुदितं परमं हि विष्णोः ॥'
इति, माध्वब्रह्मसूत्रभाष्ये प्रथमाध्यायप्रथमपादान्त्यसूत्रभाष्ये —

'महिदासाभिधो जज्ञे इतरायास्तपोबलात् ।
साक्षात् स भगवान् विष्णुर्यस्तन्त्रं वैष्णवं व्यधात् ॥

इति ब्रह्माण्डे' इति च दृश्यते ।

§ १. महि+दा+आस्=महिदासः । 'मह पूजायां' चुरादिरदन्तः । तस्मात् 'अच इः' महिः भूमिः 'दाण् दाने'. 'आस उपवेशने'.

२. मद+अस्. मध्ये हिरागमः=महिदासः. 'असु क्षेपणे' । यद्वा महिला+मद+अस्. आकारमकारयोर्लोपः.

३. महि+दास्=महिदासः. 'मह पूजायाम्' इति पूज्यत्वाद् महिर्वेदः. 'दासृ दाने'.

कथा चैषा माहिदासैतरेयी श्रुता प्रोक्ता संस्मृता पूजिता च ।
श्रद्धान्वितै[1]रास्तिकैः सर्वसिद्धयै प्रकल्पेतेत्येवमाहुर्महान्तः ॥

प्रथमं तावद् दीक्षणीयां ज्योतिष्टोमाङ्गभूतामिष्टिं विधातुं तद्देवते अग्राविष्णू स्तौति—

॥ ॐ अग्निर्वै देवानामवमो विष्णुः परमः ॥

अवमः[*] प्रथमः मुख्यमित्यर्थः । 'यदिन्द्राग्नी अवमस्यां पृथिव्याम्'[†] इति यथा। वक्ष्यति च—'अग्निर्वै देवानां मुखं सुहृदयतमः'[‡] इति। मन्त्रश्च भवति—'अग्निर्मुखं प्रथमो देवतानाम्'[§] इति।

निरुक्ते पार्थिवे काण्डे पठ्यते चाग्निरादितः । [¶]

वैशब्दः प्रसिद्ध्यर्थः । देवानामिन्द्रादीनां मध्ये । विष्णुः परमः । वै देवानामित्येव । परमः उत्तमः । 'देवतानां सङ्गतानामुत्तमो विष्णुरासीद्' इति हि मन्त्रः ।

विष्णुश्च देवताकाण्डे द्युस्थाने तूत्तमः[2] स्थितः । [‖]

किञ्च,

ज्योतिष्टोमान्त्यसंस्थायामप्तोर्यामे महाक्रतौ ।
त्रयस्त्रिंशच्छस्त्रयुते विष्णुः शस्त्रेऽन्तिमे स्थितः ।
ज्योतिष्टोमादियज्ञेषु सर्वत्रैवाग्निरादितः ।
आद्यन्तशस्त्रस्थितयोस्तयो[3]रुत्तममुख्यता ॥

---

१. 'श्रुतान्वितैः' क. पाठः. २. 'उत्तमे' ग. पाठः. ३. 'आद्यशस्त्रे स्थित इति तयो' क. पाठः.

---

* 'अवमः अन्तिमः, परमः प्रथमः' इति गोविन्दस्वामिभाष्यम्. † ऋक्सं० १-७-२७-४. ‡ ऐ० ब्रा० ३३-४. § आ० श्रौ० ४-२-३. ¶ 'अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामः' यास्कनिरुक्तम् ७-१४. ‖ आ० श्रौ० ४-२-३.

॥ तदन्तरेण सर्वा अन्या देवताः ॥

तत् औटो लुक् । तावन्तरेण तयोर्मध्ये सौमिक्योऽन्याः सर्वा देवताः ।

तस्मादाद्यन्तयोगेन सर्वा[1] इष्टा भवन्ति हि ।

इति भावः ॥

॥ आग्नावैष्णवं पुरोळाशं* निर्वपन्ति† दीक्षणीयमेकादशकपालम् ॥

‡लिङर्थे लेट्[2] । निर्वपेयुः ।

§अण् सास्य देवताद्वन्द्वादानङ्§ वृद्धिः पदद्वये¶ ।

इद्वृद्धौ‖ विष्णौ निषेध इत्यानङिह वार्त्तिकात् ।

दीक्षतेः संकल्पनार्थात् करणेऽनीयरा पदम् ।

‖छो वा भावे ल्युटोऽनुप्रवचनादेः प्रयोजने ।

एकादशकपालेषु पुरोळाशस्तु संस्कृतः ।

‡द्विगोर्लुगनपत्येऽणः *संस्कृतं भक्षसूत्रतः ।

अल्पमध्यडढयोः स्थाने ळह्ळौ प्राहुस्तु[3] बह्वृचाः ।

ईळिमूळपुरोळाशदृह्ळासाह्ळा निदर्शनम् ॥

---

१. 'सर्वे' ख. ङ. पाठः. २. 'लट्'. ३ 'प्राहुश्च' क. पाठः.

---

* पुरस्तात् पूर्वस्यां दिशि आहवनीये दीयते हूयते इति पुरोडाशः पिष्टमयो हविर्विशेषः । † शकटावस्थापितव्रीहिसंपात्रिकृत्य मुष्टिचतुष्टयपरिमितानां व्रीहीणां शूर्पे प्रक्षेपो निर्वापः । ‡ पा० सू० ३-४-७. § 'सास्य देवता' पा० सू० ४-२-२४. § 'देवताद्वन्द्वे च' पा० सू० ६-३-२६. ¶ 'देवताद्वन्द्वे च' पा० सू० ७-३-२१. ‖ पा० सू० ६-३-२८. ‖ 'अनुप्रवचनादिभ्यश्छः'. पा० सू० ५-१-१११. ‡ पा० सू० ४-१-८८. * पा० सू० ४-२-१६.

ततश्च,

॥ सर्वाभ्य एवैनं तद्देवताभ्योऽनन्तरायं निर्वपन्ति ॥

एनं पुरोडाशम् । अनन्तरायं निर्विघ्नम्[1] । तत् दाशुक् । तेन ॥
कथम् ,

॥ अग्निर्वै सर्वा देवताः ॥

सर्वदेवतानां मुखत्वात् ॥

॥ विष्णुः सर्वा देवताः ॥

वै इत्येव । परमत्वात् ॥

पुनः स्तौति—

॥ एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्च ॥

चशब्दाभ्यामन्ययोगो विष्णोरग्नेश्च सूच्यते ।
*'अहं च त्वं च वृत्रहन्' धर्मे चार्थे च वै यथा ॥

अन्ते भवा अन्त्या । दिगादित्वाद्यत्[†] । अन्त्या चान्त्या चान्त्ये । एकोऽन्त्याशब्द[2] आद्यार्थे, आद्यान्त्ये तन्वौ द्वे शरीरे । यत् यौ ॥

ततः किं,

॥ तद्यदाग्नावैष्णवं पुरोळाशं निर्वपन्त्यन्तत एव तद्देवानृध्नुवन्ति[‡] ॥

तदिति वाक्योपन्यासे । यद्यस्मात् अन्तत आद्यन्तयोः । तत् तस्मात् । ऋध्नः स्वादिः परिचरणार्थः । परिचरन्ति ॥

---

१. 'निरवशेषं' क. पाठः. २. 'अन्त्यशब्द' ग. ङ. पाठः.

---

* 'ऋक्सं॰' ६-४-२३-५. † 'दिगादिभ्यो यत्' पा॰ सू॰ ४-३-५४.
‡ 'यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्य यजमानोऽवरुन्धे' इति तैत्तिरीयश्रुतिः ।

॥ तदाहुः ॥

तत् तत्राहुश्चोद्यमिति सर्वत्रास्यार्थ इष्यताम् ॥

चोद्यस्वरूपमाह—

॥ यदेकादशकपालः पुरोळाशो द्वावग्नाविष्णू कैनयोस्तत्र कॢप्तिः का विभक्तिरिति ॥

यद् यदि एतयोर्देवतयोः । तत्र पुरोळाशे । क्लृप्तिः सङ्गमः संश्लेषः । विभक्तिर्विभागः पृथक्कारः ।

कपालानामयुक्त्वेन समसंख्या न युज्यते[1] ।
इति भावः ॥

इतिश्चोद्यसमाप्त्यर्थः[2] ॥

परिहारं ब्रवीत्यथ—

॥ अष्टाकपाल आग्नेयः ॥

कपालाष्टकसम्बद्धो भागः स्यादग्निदेवतः ॥

कुत एतत्,

॥ अष्टाक्षरा वै गायत्री ॥

वक्ष्यति हि[3]—'ततो वा अष्टाक्षरा गायत्र्यभवद्'* इति ।

गायत्र्या ये त्रयः पादास्ते ह्यष्टाक्षरसंयुताः ॥

ततः किं,

॥ गायत्रमग्नेश्छन्दः ॥

गायत्र्येव गायत्रम् । स्वार्थिकोऽण् । 'स गायत्रीमेवाग्नये वसुभ्यः†' इति वक्ष्यति ।

---

१. 'नियते' ग. पाठः  २. 'समाप्त्यर्थः । परिहरति अथा' घ. पाठः. ३. 'च' घ, ङ, पाठः.

---

* ऐ० ब्रा० १३–४. † ऐ० ब्रा० १२–२.

स्वच्छन्दोक्षरगाहत्वं स्वकपालेऽपि[1] गृह्यताम् ।

इति भावः ॥

अथावशिष्टः,

॥ त्रिकपालो वैष्णवः ॥

कपालत्रयसम्बद्धो भागः स्याद् विष्णुदेवतः ॥

एतदपि कुतः,

॥ त्रिर्हीदं विष्णुर्व्यक्रमत* ॥

'वेः पादविहरणे'† इति तङ् ।

त्रिभिः पदैर्जगदिदं पुरा विष्णुर्विचक्रमे ॥
कथं विष्णोर्विक्रमणं बभूव समस्तलोकैकधुरन्धरस्य ।
अत्रेतिहासं कथयन्ति वृद्धाः[2] शक्रे जिते बलिना त्यक्तराज्ये ॥
अदित्यभिप्रार्थनया तु[3] तस्यां जातो हरिर्वामनो लोकभूत्यै ।
रूपेण तेनैव च शोभमानो यस्याङ्गुल्यः षोडशासन् प्रमाणम् ॥
दर्भैर्वसिष्ठादिमहर्षिभिस्तु युक्तोऽजिनाद्यैः प्रथमाश्रमाङ्गैः ।
उच्चैर्वदन्नृग्यजुषं ससाम सन्नादयन् ब्रह्मघोषेण लोकान् ॥
गत्वा बलेर्यज्ञवाटं प्रविश्य स्तुत्वा यज्ञमृत्विजोऽग्नीन् सदस्यान् ।
पदत्रयं सोऽथ बलिं ययाचे वह्नेरेकं समिदर्थं तथैकम् ॥
ममाप्येकमिति स स्माह किं ते त्रिपद्यान्यद्[4] ध्रियतां[5] गोधनादि ।
तदर्थिभ्यो दीयतामित्यनेन प्रोक्तः सोऽस्मै त्रिपदीमेव चादात् ॥
पाणौ तोये पतिते वामनोऽथ भूत्वा महान् व्यक्रमताखिलं सः ।
सपातालां पदमाद्यं धरित्रीं द्वितीयं वै खं तृतीयं स्वरादि ॥

---

१. 'कपालेषु' ख. ङ. पाठः. २. 'विप्राः' क. ख. पाठः.
३. 'प्रार्थनयाशु' क. पाठः. ४. 'त्रिपदाम्यद्' ख. पाठः. ५. 'ध्रियतां' ख. पाठः.

---

* 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्' १-२-७-२, 'त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः' १-२-७-३. इति च ऋक्संहिता. † पा० सू० १-३-४१.

चतुर्दशैवं भुवनानि जित्वा दत्त्वेन्द्राय सुतले तं बलिं च ।
वसेत्युक्त्वा देववेदद्विजांश्च यज्ञान्वितान् कृतवान् वै पुरेति ॥
अथापरे वर्णयन्तीतिहासमुभा जिग्येत्यादिके वक्ष्यमाणम् ।
इन्द्राविष्णू युधि जित्वा तु[1] दैत्यानवोचतामाचरामात्र[2] क्ष्लृप्तिम् ॥
युद्धेनालमिति स सेन्द्र आह यावद्[3] विष्णुर्विक्रमते त्रिरेषः ।
तावन्नोऽस्तु युष्मदीयं ततोऽन्यदिति प्रोक्तं तैस्तथेत्येव दैत्यैः ॥
ततो विष्णुर्व्यक्रमत त्रिरेव लोकान् वेदान् वाङ्मयं च त्रिपद्या ।
सर्वे लोकाः पदमाद्यं द्वितीयं सर्वे वेदा वाङ्मयं वै तृतीयम् ॥
एवं विष्णोर्विक्रमाद् दैत्यसंघे पराजिते त्यक्तवाग्लोकवेदे ।
ततो देवा वाङ्मयलोकवेदान् लब्ध्वा हृष्टाः सुखमापुः पुरेति ।
इत्थं विष्णोर्विक्रमणं बभूव समस्तलोकैकधुरंधरस्य ॥

॥ सैनयोस्तत्र क्लृप्तिः सा विभक्तिः ॥

उक्तार्थम् ॥

अथात्रैव पुरोळाशस्थाने चरुमाह—

॥ [†]घृते चरुं निर्वपेत योऽप्रतिष्ठितो मन्येत ॥

दीक्षणीयमाग्नावैष्णवमित्येव । स प्रतिष्ठावान् स्यादिति शेषः । वपिः स्वरितेत् ।

यो मन्येताप्रतिष्ठोऽहं स्यां प्रतिष्ठान्वितस्त्विति ।
सोऽग्नाविष्णू यजेताज्ये पक्केन चरुणा हुतम् ॥

---

१. 'जित्वाशु' क. पाठः. २. 'चरामात्र', ३. 'स स्माह इन्द्रो यावत्' घ. ङ. पाठः.

---

* ऐ० ब्रा० २८-७. † 'आग्नावैष्णवमेकादशकपालं निर्वपत्याग्नावैष्णवं वा घृते चरुं पुरोडाशो ब्रह्मवर्चसकामस्य घृते चरुः प्रजाकामस्य पशुकामस्य वा' इत्याप-स्तम्बश्रौतसूत्रम् १०-४-२-३.

एनां घृतचर्विष्टिं स्तौति—

॥ अस्यां वाव स न प्रतितिष्ठति यो न प्रतितिष्ठति ॥

अकृतायामिति शेषः । वावेति प्रसिद्ध्यर्थो निपातः । अस्यां तु कृतायां प्रतिष्ठितः स्यादेवेति भावः[1] ॥

विविच्य स्तौति—

॥ तद् यद् घृतं तत् स्त्रियै पयः ॥

तत् तत्र । स्त्रियै । ङसो ङे । स्त्रियाः । पयः शोणितम् । प्रजनार्थाद् वयतेः करणेऽसुन् । वकारस्य पकारः ॥

॥ ये तण्डुलास्ते पुंसः ॥

पय इत्येव । रेतः ।

घृततण्डुलयोस्तुल्ये वर्णतो रक्तरेतसी ॥

॥ तन्मिथुनम् ॥

[1]तद् घृततण्डुलरूपं वस्तु स्त्रीपुंसयुगलम् ॥

ततः किम्,

॥ मिथुनेनैवैनं[2] तत् प्रजया पशुभिः प्रजनयति ॥

एनं यष्टारं तद् घृततण्डुलरूपं[3] कर्मकर्तृ प्रजया पुत्रादिकया पशुभिर्गवादिभिः प्रजनयति । जनिर्वृद्ध्यर्थः । प्रवर्द्धयति ॥

अथ विदुषः फलमाह—

॥ प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद ॥

प्रजात्यै समृद्ध्यै प्रजायते सम्पद्यते ॥

अत्र द्वौ कल्पौ । आधानानन्तरं सोम इत्येकः, दर्शपूर्णमासावेवेत्यपरः । तत्र द्वितीयं कल्पमाश्रित्याह—

---

१. 'भावः । तद् यद्' घ. ङ. पाठः. २. 'मिथुनेनैव वैनं' घ. पाठः. ३. 'कर्मकर्तृ' घ. ङ. पाठः.

॥ आरब्धयज्ञो वा एष आरब्धदेवतो यो
दर्शपूर्णमासाभ्यां यजते ॥

सर्वेष्टिप्रकृतित्वाद् दर्शपूर्णमासयोः ॥

ततश्च,

॥ आमावास्येन वा हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव
हविषि तस्मिन् बर्हिषि दीक्षेत ॥

वाशब्दौ समुच्चयार्थे । सूत्र्यते हि—'*ऊर्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्यैके प्रागपि सोमेनैके' इति । अमावास्यायां भवमामावास्यम् । तथा पौर्णमास्यां भवं पौर्णमासम् । हविषि इष्टे सति बर्हिषि स्तीर्णे प्रहृते सत्येव अनन्तरं दीक्षेत दीक्षणीयेष्टिं कुर्यात् ॥

॥ एषो एका दीक्षा ॥

एषा उ अपि एका काचित् ॥

अथ सर्वत्राह—

॥ सप्तदश सामिधेनीरनुब्रूयात् ॥

†'समिधामाधाने षेण्यण्' । ङीप् ।

‡'प्रवो वाजे'ति सूक्तोक्ता ऋचः पञ्चदशात्र तु ।
समिध्यमानवत्याश्च समिद्धायाश्च मध्यतः ।
'पृथुपाजाः' 'तं सबाध' इति द्वे आवपेदृचौ ॥

---

* आ० श्रौ० ४-१-२, 'अथ दर्शपूर्णमासावारभते ताभ्यां संवत्सरमिष्ट्वा सोमेन पशुना वा यजते' इति चापस्तम्बश्रौतसूत्रम् ५-२३-२. † पा० सू० वा० ४-३-१२०. ‡ ऋक्सं० ३-१-२८-१.

सप्तदशसंख्यां स्तौति —

॥ *सप्तदशो वै प्रजापतिः[1] ॥

प्रजापतिरिति संवत्सर उच्यते । सप्त च दश चेति द्वन्द्वान्मत्वर्थे डट् टिलोपश्च ॥

कथम्,

॥ द्वादश मासाः ॥

चैत्राद्याः ॥

॥ पञ्चर्तवः ॥

ननु षट् ते वसन्ताद्याः पञ्चता कथमुच्यते—

॥ हेमन्तशिशिरयोः समासेन[2] ॥

पञ्चेत्येव । समसनं समासः, मेळनम् । एतच्च हिमशीतवत्त्वैकगुणयोगकृतम् ।

तयोर्भेदेन संख्यान ऋतूनां षट्त्वमिष्यते ॥

॥ तावान् संवत्सरः ॥

तावान् तत्परिमाणः ॥

॥ संवत्सरः प्रजापतिः ॥

प्रजाः पाति रक्षति । पातेर्डतिः† ॥

---

१. 'पतिः । अत्र प्रजा' घ. ङ. पाठः. २. 'समानेन' इति मुद्रितपाठः.

---

* 'सप्तदशावयवाः परिमाणमस्येति छान्दसो डः. यद्वा, सप्तदशानां पूरणाः सप्तदशाः अवयवाः अस्य सन्तीति अर्शआदिलक्षणो मत्वर्थीयोऽच्प्रत्ययः' इति भट्टभास्करः. † उणादिसू० ४·५८.

॥ प्रजापत्यायतनाभिरेवाभी राध्नोति ॥

आभिः सामिधेनीभिः सप्तदशसंरूपावत्त्वेन प्रजापतिस्थानभूताभिः यजमानो राध्नोति श्रियं प्राप्नोति ॥

॥ य एवं वेद ॥ .

सोऽपि राध्नोति ॥

प्रथमः खण्डः ।

---

अथ दीक्षणीयेष्टिप्रसङ्गादिष्टिशब्दं निराह—

॥ यज्ञो वै देवेभ्य उदक्रामत् ॥

वै पुरा । देवेभ्यः अनुष्ठातृभ्यो यज्ञ उत्क्रान्तवान् ॥

अथ ते देवाः,

॥ तमिष्टिभिः प्रैषमैच्छन् ॥

तमुत्क्रान्तं यज्ञम् । प्रैषम् । इषेस्तुमर्थे णमुल् । अन्वर्थे प्रशब्दः । अन्वेष्टुमैच्छन् ॥

॥ यदिष्टिभिः प्रैषमैच्छंस्तदिष्टीनामिष्टित्वम् ॥

*इषेरिष्टिशब्दो न तु यजेरित्यर्थः ॥

अन्विष्य च,

॥ तमन्वविन्दन् ॥

तं यज्ञम् । विदिर्लाभे । लब्धवन्त इत्यर्थः ॥

---

* 'इच्छन्ति यज्ञमाभिरितीष्टिशब्दव्युत्पत्तिः, यजतिधातोरिष्टिशब्दः प्रसिद्धः सर्वत्र, अत्र त्विच्छतिधातोरिति विशेषः' इति सायणः.

अथ विदुषः फलमाह—

॥ अनुवित्तयज्ञो राध्नोति य एवं वेद ॥

अनुवित्तो लब्धो यज्ञो यस्य स एवंभूतः सन् राध्नोति ॥

अथाहुतिशब्दं ब्रुवन्नो निराह—

॥ *आहूतयो वै नामैता यदाहुतयः ॥

यद् याः आहूतयः, ता एता आहुतयः। †परोक्षत्वाय दीर्घस्य ह्रस्वः ॥

कुत एतत्,

॥ एताभिर्वै देवान् यजमानो ह्वयति ॥

वै यस्मात् ॥

॥ तदाहुतीनामाहूतित्वम् ॥

तत् तस्मात् ॥

अथाहूतिशब्दे ऊतिशब्द एवार्थवान्। आहित्ययं[1] शब्दस्तूपजन इत्याह—

॥ ‡ऊतयः खलु वै ता नाम ॥

ता आहुतयः ऊतयः खलु ॥

---

1. 'आहु इत्ययं' ख. पाठः

---

* 'ह्वयतेः करणे क्तिन्' इति महभास्करः. 'ह्वयन्त्याभिरिति तद्व्युत्पत्तिः। जुहोतिधातोरुत्पन्नः शब्दः पूर्वं प्रसिद्धः। अयं तु ह्वयतिधातोरुत्पन्न इति विशेषः' इति सायणः. † 'परोक्षप्रियत्वाद् देवानाम्। कथं पुनरस्यामाहुतित्वमित्याह—एताभिरिति। परोक्षत्वाय ह्रस्वत्वं कृत्वा आहुतय इति भावः' इति भट्टभास्करः. ‡ 'अवतेर्गतिकर्मण आङ्पूर्वस्यार्थवृत्तेः करणे क्तिनि ज्वरत्वरादिना ऊठि रूपम्' इति भट्टभास्करः। 'अवन्ति रक्षन्तीत्यवतेर्धातोरूतिशब्दः प्रसिद्धः। आवन्त्यागच्छन्ति याभिरित्याङ्पूर्वकस्यावतिधातोर्वा वर्णविकारेणोतिशब्दः' इति सायणः.

एता ऊतय इत्याह—

॥ याभिर्देवा यजमानस्य हवमायन्ति ये वै पन्थानो
याः स्रुतयस्ता वा ऊतयः ॥

*हवं यज्ञमायन्ति आगच्छन्ति । ऊतय इत्यस्य विवरणं स्रुतय इति । अस्य च पन्थान इति । याभिर्देवा यजमानस्य हवमायन्ति यज्ञमागच्छन्ति । ता ऊतयः† । ताः स्रुतयस्ते पन्थान इत्यर्थः ॥

किञ्च,

॥ त उ एवैतत् स्वर्गयाणा यजमानस्य भवन्ति ॥

ते पन्थानः । उ अपि । एतत् एते । स्वर्गयाणाः यातेः करणे ल्युट् । स्वर्गप्राप्तिहेतवो भवन्ति सम्पद्यन्ते ॥

अथ होतृशब्दं सचोद्यपरिहारं निर्वक्तुमाह—

॥ तदाहुः ॥

चोद्यस्वरूपमाह—

॥ यदन्यो जुहोत्यथ योऽनु चाह यजति च कस्मात्
तं होतेत्याचक्षत इति ॥

यत् यदि । अथेत्यसङ्गत्यर्थः । अन्वाह च अनुवाक्यां ब्रवीति । यजति च याज्यां ब्रवीति । होमस्य कर्ता हि होता, नत्वनुवक्ता यष्टा चेति भावः ॥

---

* हूयन्ते देवा अस्मिन्निति हवो यज्ञः. † 'ये केचित् पन्थान इहिरूपाः स्वर्गस्य प्राप्तिमार्गाः सन्ति, याश्च स्रुतयस्तन्मार्गाविषयवत्या आहुतयः सन्ति, ता द्विविधा ऊतय इत्युच्यन्ते' इति च सायणः.

परिहरति—

॥ यद्वाव स तत्र यथाभाजनं देवता अमुमावहामुमावहेत्यावाहयति तदेव होतुर्होतृत्वम् ॥

सः अनुवक्ता यष्टा च । तत्र कर्मणि । यथाभाजनं यथास्थानम् । अमुमित्यग्न्यादेरुपलक्षणम् । आवाहयति यत् तदेव होतृशब्दस्य प्रवृत्तिनिमित्तम् । *वाहेस्तृचि पृषोदरादिर्होतृशब्द इति भावः ॥

विदुषः फलमाह—

॥ होता भवति होतेत्येनमाचक्षते य एवं वेद ॥

एनं वेदितारमाचक्षते वदन्ति । †होतृत्वे योग्यत्वं प्रसिद्धिश्चास्यैवेत्यर्थः ॥

द्वितीयः खण्डः ।

---

अथ दीक्षितसंस्कारानाह—

॥ पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति ॥

गर्भं कुक्षिस्थम् । लुप्तोपमम् । गर्भमिव ॥

कथम्,

॥ ‡अद्भिरभिषिञ्चन्ति ॥

ऋत्विजोऽद्भिः स्नापयन्ति ॥

---

* 'ण्यन्तस्य वहधातोश्छान्दस्या प्रक्रियया होतृशब्दनिष्पत्तिर्नतु जुहोतिधातोः । तस्माद्धोमकर्तृत्वाभावेऽप्यावाहयितृत्वसद्भावाद्धोतृत्वमुपपन्नम्' इति सायणः. † 'अयमेव धर्मोचीनो होता, अन्ये तु होतृपार्श्वाः' इति भट्टभास्करः. ‡ 'अङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन् । अप्सु स्नाति साक्षादेव दीक्षातपसी अवरुन्धे' इति तैत्तिरीयश्रुतिः ६-१-१.

ततः किं,

॥ *रेतो वा आपः ॥

प्रजाख्या रेतःकारणत्वादपाम्। स्मर्यते हि—

'†आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः।'

इति ॥

ततः किं,

॥ सरेतसमेवैनं तत् कृत्वा दीक्षयन्ति ॥

तत् तेन स्नापनेन ॥

किञ्च,

॥ नवनीतेनाभ्यञ्जन्ति ॥

अथ नवनीतस्य गर्भाभिरूप्यमाह—

॥ आज्यं वै देवानां सुरभि ॥

सुरभि योग्यं प्रियमित्यर्थः ॥

॥ घृतं मनुष्याणाम्[1] ॥

सुरभीत्येव ॥

॥ आयुतं पितॄणाम् ॥

सुरभीत्येव ॥

---

१. 'मनुष्याणाम्। आयुतं पितॄणाम्। नवनीतं गर्भाणाम्। सर्वत्र सुरभीत्येव। सर्पिः' ख. ङ. पाठः.

---

* मनुष्यादिशरीरगतं रेतोमूत्रादिकमपां कार्यम्। तथाच गर्भोपनिषत्—'अस्मिन् पञ्चात्मके शरीरे यत् कठिनं सा पृथिवी यद् द्रवं तदापः' इति।

† मनुस्मृतिः ३–७६.

॥ *नवनीतं गर्भाणाम् ॥

सुरभीत्येव।

'सर्पिर्विलीनमाज्यं स्याद् घनीभूतं घृतं विदुः।
विलीनार्धमाज्यं तु नवनीतं यतो घृतम्'॥

इत्याहुः॥

॥ तद्यन्नवनीतेनाभ्यञ्जन्ति स्वेनैवैनं तद्भागधेयेन समर्धयन्ति ॥

तत् तत्र। एनं दीक्षितमभ्यञ्जन्तीति यत्। समर्धयन्ति वर्धयन्ति तद्भागधेयेन। 'नामरूपभागेभ्यः स्वार्थे धेयः†'। भागेन॥

॥ आञ्जन्त्येनम् ॥

एनमाञ्जन्ति। ‡अस्य नेत्रयोरञ्जनं निदध्युः[1]॥

आञ्जनं स्तौति—

॥ तेजो वा एतदक्ष्योर्यदाञ्जनम् ॥

तेजः शोभाकरम्। अक्ष्योः अक्ष्णोः। 'ई च द्विवचने'§।

॥ सतेजसमेवैनं तत् कृत्वा दीक्षयन्ति ॥

तत् तत्र॥

॥ एकविंशत्या दर्भपिञ्जूलैः ¶पावयन्ति ॥

कुशपिञ्जैः शोधयेयुरेकविंशतिसंख्यकैः॥

---

१. 'दध्युः' क. पाठः

---

* 'नवनीतेन हि गर्भा वर्धन्त इत्युत्तरापथनिवासिनां प्रसिद्धम्' इति गोविन्दस्वामिभाष्यम्। † 'भागरूपनामभ्यो धेय' इति मुद्रितपाठः. पा० सू० वा० ५-४-३६. ‡ आञ्जनप्रकारश्च तैत्तिरीयश्रुतौ—'दक्षिणं पूर्वमाङ्क्ते सव्यं हि पूर्वं मनुष्या आञ्जते' ६-१-१ इति। § पा० सू० ७-१-७७. ¶ 'अथैनमुत्तरेण वेदिः प्राग्वंशाद् दर्भपिञ्जूलैः पवयति' आप० श्रौ० सू० १०-७-५.

॥ शुद्धमेवैनं तत् पूतं दीक्षयन्ति ॥

तत् तेन कुशपिञ्जशोधनेन । पूतमिति व्याचष्टे शुद्धमिति ॥

॥ दीक्षितविमितं प्रपादयन्ति ॥

*दीक्षितविमितमिति वेदिनाम । प्रवेशयेयुः ॥

कस्मादेवं,

॥ योनिर्वा एषा दीक्षितस्य यद्दीक्षितविमितम् ॥

योनिः स्थानम्[1] ।

'योनिः स्त्रीणां भगे स्थाने कारणे ताम्रकेऽप्यपण्' ।

इति हि निखण्टुः† ॥

ततश्च,

॥ योनिमेवैनं तत् स्वां प्रपादयन्ति ॥

स्वामात्मीयाम् ॥

॥ तस्माद् ध्रुवाद्योनेरास्ते च चरति च ॥

ल्यर्थे ङसित्रयम् । तस्मिन् ध्रुवे स्थिरे वेद्याख्ये स्थाने स दीक्षित आसनचरणे कुर्यात् ॥

॥ तस्माद् ध्रुवाद्योनेर्गर्भा धीयन्ते च प्र च जायन्ते ॥

तस्मादिति निपातोऽयं तथाहीत्यर्थवाच्यपि ।
तथाहि गर्भा धीयन्ते योनौ वर्धन्त एव च ॥
धीयन्ते च प्रजायन्ते च ल्यर्थेऽत्र ङसिद्वयम् ॥

---

१. 'स्थानम् । ततश्च' ख. ङ. पाठः.

---

* 'दीक्षितस्य प्रवेशार्थं विशेषेण निर्मितः प्राचीनवंशो दीक्षितविमितः' इति सायणः. तत्प्रवेशश्च—'बहिः पवयित्वाऽन्तः प्रपादयति मनुष्यलोक एवैनं पवयित्वा पूतं देवलोकं प्रणयति' इति तैत्तिरीयश्रुत्याम्नातः. (६-१-२.) 'आ वो देवास ईमह इति पूर्वया द्वारा प्राग्वंशं प्रविश' इतिच आप॰ श्रौ॰ सू॰ १०-८-१. † वैजयन्ती (अक्षरकाण्डे नानालिङ्गाध्याये श्लो॰ ६६.)

॥ [*]तस्माद् दीक्षितं नान्यत्र दीक्षितविमितादादित्यो-
ऽभ्युदियाद्वाभ्यस्तमियाद्वापिवाभ्याश्रावयेयुः ॥

तस्मादिति । किञ्चेत्यर्थः । दीक्षितविमितादन्यत्र वेद्या बहिर्वर्तमानम्[1] । अभि प्रति । श्रूयते हि —'[†]न चैनान् बहिर्वेदि सतो[2]ऽभ्याश्रावयेयुर्नोदक्यात्रो एवाभ्युदियान्नाभ्यस्तमियात्' इति ।

उदयेऽस्तमये भानोर्न बहिर्वेदि सञ्चरेत् ।
नास्मिन् बहिर्वेदिगते कुर्युराश्रावणादिकम् ॥

॥ वाससा प्रोर्णुवन्ति ॥

एनं वस्त्रेण छादयेयुः ॥

कुतः,

॥ उल्बं वा एतद्दीक्षितस्य यद् वासः ॥

उल्बमिति गर्भवेष्टननाम ॥

॥ [‡]उल्बेनैवैनं तत् प्रोर्णुवन्ति ॥

एव इव । तत् तेन वाससा ॥

॥ कृष्णाजिनमुत्तरं भवति ॥

वाससः उपरि ॥

---

1. 'वेद्या अन्यत्र वर्तमानम्' ब ङ पाठः. 2. 'बहिर्वेदिषदो' मुद्रितपाठः.

---

* 'गर्भो वा एष यद् दीक्षितो योनिर्दीक्षितविमितं यद् दीक्षितो दीक्षितविमितात् प्रवसेद् यथा योनेर्गर्भः स्कन्दति तादृगेव तत् प्रमत्तव्यमात्मनो गोपीथाय' ६-२-४ इति तैत्तिरीयश्रुतिः. † आ० श्रौ० सू० १२-८. आपस्तम्बोऽप्याह —'नैनमन्यत्र दीक्षितविमितादभिनिम्रोचेदभ्युदियाद्वा' १०-१५-५. इति. ‡ गर्भो वा एष यद् दीक्षित उल्बं वासः प्रोर्णुते तस्माद् गर्भाः प्रावृता जायन्ते' ६-१-३. इति तैत्तिरीयश्रुतिः.

॥ उत्तरं वा उल्बाज्जरायु* ॥

उल्बेन वेष्टितो गर्भस्तज्जरायुत्वभिर्वेष्टितम् ॥

एवञ्च,

॥ जरायुणैवैनं तत् प्रोर्णुवन्ति ॥

उल्बस्य जरायुवद् वाससः कृष्णाजिनमिति भावः ॥

किञ्च,

॥ मुष्टी कुरुते ॥

†दीक्षितस्तु सदा कुर्यात् पाणी संवलिताङ्गुली ॥

कस्मादेवम्,

॥ मुष्टी वै कृत्वा गर्भोऽन्तः शेते ॥

अन्तः मातुरुदरे ॥

कथमवगम्यते,

॥ मुष्टी कृत्वा कुमारो जायते ॥

मुष्ट्योः करणमन्तस्यं जन्मकाले हि दृश्यते ॥

॥ ‡तद् यन्मुष्टी कुरुते यज्ञं चैव तत् सर्वाश्च देवता मुष्ट्योः कुरुते ॥

तदिति वाक्योपन्यासे । मुष्टी कुरुते इति यत् तत् सर्वा देवता यज्ञं च मुष्ट्योः संगृह्णाति ॥

---

* 'येनावेष्टितो जायते गर्भस्तदुल्बं भवति । यत् पुनर्गर्भावरणं गर्भाशय एव तिष्ठति तज्जरायुर्भवति' इति गोविन्दस्वामी । † तत्प्रकारश्चापस्तम्बसूत्रे— 'अथाङ्गुलीर्न्यञ्चति । स्वाहा यज्ञं मनस इति द्वे । स्वाहा दिव इति द्वे । स्वाहा पृथिव्या इति द्वे । स्वाहोरोरन्तरिक्षादिति द्वे । स्वाहा यज्ञं वातादारभ इति मुष्टी करोति' १०-११-३-४. इति. ‡ 'मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्यै' ६-१-४. इति तैत्तिरीयश्रुतिः.

॥ तदाहुः ॥

तत् तत्र मुष्टीकरणे । आहुः ब्रह्मवादिनो दृष्टान्तमाहुरित्यर्थः ॥

कथं,

॥ न पूर्वदीक्षिणः संसवोऽस्ति परिगृहीतो वा एतस्य यज्ञः परिगृहीता देवता नैतस्यार्तिरस्त्यपरदीक्षिण एव यथा तथेति ॥

*संसवो नाम दोषोऽस्ति द्वयोर्वै सुन्वतोः सह ।

स्मर्यते हि—'†संसवोऽनन्तर्हितेषु नद्या वा पर्वतेन वाप्येकेऽन्तर्हितेष्वपि । तथा सति सन्त्वरा देवतावाहनाद्' इत्यादि । पूर्वदीक्षी पूर्वकारी । अपरदीक्षी पश्चात्कारी । परिगृहीतः परिगृह्यते । एतस्येति ‡'क्तस्य च वर्तमाने' इति षष्ठी । एतेन पूर्वदीक्षिणा । आर्तिः संसवदोषः । तथा तद्वदेव ॥

किञ्च क्रत्वन्ते,

॥ उन्मुच्य कृष्णाजिनमवभृथमभ्यपैति[1] ॥

उन्मुच्य त्यक्त्वा । अपैति गच्छेत् । अवभृथमभियैति ॥

॥ तस्मान्मुक्ता गर्भा जरायोर्जायन्ते ॥

तस्मात् तथाहि ॥

॥ सहैव वाससाभ्यपैति[2] ॥

---

१, २. 'अभ्यवैति' मुद्रितपाठः

---

* द्वयोर्बहूनां वा यजमानानां समानानां सम्भूय सोमाभिषवः संसवः

† आ० श्रौ० सू० ६-६-११, १२, १३. ‡ पा० सू० २-३-६७.

अवभृथमित्येव ॥

॥ तस्मात् सहैवोल्बेन कुमारो जायते ॥

तस्मात् तथाहि ॥

तृतीयः खण्डः ।

---

इति दीक्षितसंस्कारा यथावत् प्रतिपादिताः ।
अवस्थानादिकं संस्थाजपान्तं तन्त्रमैष्टिकम् ॥
तत्राज्यभागपर्यन्तं पुरस्तात्तन्त्रमुच्यते ।
उपरिष्टात्तन्त्रमपि भवेत् स्विष्टकृदादिकम् ॥
आज्यभागस्विष्टकृतोः प्रधानं स्यात्तु मध्यतः[1] ।
तत्राज्यभागयोः सम्यग्विशेषं प्रब्रवीत्यथ[2] ॥

॥ *त्वमग्ने सप्रथा असि †सोम यास्ते मयो भुव इत्याज्यभागयोः पुरोनुवाक्ये अनुब्रूयाद् यः पूर्वमनीजानः स्यात् तस्मै ॥

याज्यायाः पुरस्तादनुवक्तव्या पुरोनुवाक्या । ईजानः इष्टवान् । '‡लिटः कानच्' । ततोऽन्यः अनीजानः अकृतसोमयागः । तस्मै । ङसो ङे । तस्य ॥

आभिरूप्यमाह—

---

१. 'मध्यमम्' ग. ङ. पाठः. २ 'प्रब्रवीम्यथ' क. पाठः, इत उत्तरं खण्डसमाप्तिपर्यन्तं ङ पाठे लुप्तम् ।

---

* ऋक्सं० ४-१-५-४, † ऋक्सं० १-६-२०-४, ‡ पा० सू० ३-२-१०६.

॥ त्वया यज्ञं वितन्वत इति ॥

अत्रास्ति ॥

॥ यज्ञमेवास्मा एतद् वितनोति ॥

एतत् पदम् । अस्मै अस्य । यज्ञं विस्तारयति ।

स्यातां याज्ये जुषाणाख्ये सर्वत्रैवाज्यभागयोः ।

"'तयोर्जुषाणेनैवे'ति ह्युत्तरत्रात्र वक्ष्यते ॥

॥ †अग्निः प्रत्नेन मन्मना ‡सोम गीर्भिष्ट्वा वयमिति
यः पूर्वमीजानः स्यात् तस्मै ॥

तस्मै तस्य ईजानस्य कृतसोमयागस्य[1] । आज्यभागयोः पुरोनुवाक्ये अनुब्रूयादित्येव ॥

अत्र च,

॥ प्रत्नमिति पूर्वं कर्माभिवदति ॥

पुराणनाम प्रत्नेति[2] पूर्वं कर्म ब्रवीति[3] तत् ॥

उक्तं युगळद्वयं दूषयति—

॥ तत् तन्नादृत्यम् ॥

तत् तत्र ईजानानीजानयोः । तत् अनुवाक्यायुगळद्वयं न आदृत्यमादरणीयम् ।

---

१. 'कृतपूर्वयागस्य', २. 'प्रत्नमिति', ३. 'कर्माभिवदति' प. पाठः.

---

* ऐ० ब्रा० ३-६. † ऋक्सं० ६-३ ३८-२. ‡ ऋक्सं० १-६ ११-१

एतिस्तुशासुवृक्ष्यापि[*] तुक इक आद्यन्तनिर्वचः ॥

कथं तर्हि,

॥ [†]अग्निर्वृत्राणि जङ्घनत् [‡]त्वं सोमासि सत्पतिरिति वार्त्रघ्नावेव कुर्यात् ॥

'वृत्राणि जङ्घनत्' 'उत वृत्रहा' इति च वृत्रकर्मकहननयुक्तानुवाक्यावन्तावाज्यभागौ कुर्यादित्यर्थः। वृत्रहनोऽपि [§]'पपूर्वहन्—' इत्यल्लोपः ॥

स्तौति—

॥ वृत्रं वा एष हन्ति यं यज्ञ उपनमति ॥

वृत्रं[¶] पापम्। उपनमः संप्राप्तिः। हन्ति त्यजति ॥

॥ तस्माद् वार्त्रघ्नावेव कर्तव्यौ ॥

इत्याज्यभागयोरुक्त्वा प्रधानस्य ब्रवीत्यथ—

॥ अग्निर्मुखं प्रथमो देवतानामग्निश्च विष्णो तप उत्तमं मह इत्याग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवतः आग्नावैष्णव्यौ रूपसमृद्धे ॥

एते च सूत्रपठिते[§] ॥

रूपसमृद्धिः श्रद्धेयेत्याह—

॥ एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धम् ॥

भावे क्तः। समृद्धिः।

---

[*] पा० सू० ३-१-१०९. [†] ऋक्सं० ४-५-२७-४. [‡] ऋक्सं० १-६-१९-५. [§] पा०सू० ६-४-१३५. [¶] 'वृत्रमिति मेघनाम अपां वरणात्। यज्ञेन वृष्टिरूपां जायते इति तदिदं कर्म कृतम्' इति श्रुतेः। एवं वृत्रहननं यजमानस्य भवति इति वार्त्रघ्नाज्यभागप्रशंसा। अपिच। 'वृत्रं पापम्' इति गोविन्दस्वामिभाष्यम्। [§] आ० श्रौ० सू० ४-२-३.

एषा समृद्धिर्यज्ञस्य यद् रूपेण समृद्धता ॥

का पुनरियं,

॥ यत् कर्म क्रियमाणमृगभिवदति ॥

एषा समृद्धिर्यज्ञस्य यदृक्कर्म प्रकाशयेत् ॥

स्तौति—

॥ अग्निश्च ह वै विष्णुश्च देवानां दीक्षापालौ ॥

व्याचष्टे—

॥ तौ दीक्षाया ईशाते ॥

ईश्वरौ भवतः ॥

॥ तद्यदाग्नावैष्णवं हविर्भवति यौ दीक्षाया ईशाते तौ प्रीतौ दीक्षां प्रयच्छतां यौ दीक्षयितारौ तौ दीक्षयेतामिति ॥

प्रयच्छतां दानं कुरुताम् । दाणो लोटि शपि यच्छादेशः* । दीक्षयेतामित्येवमर्थम् ॥

ते च,

॥ त्रिष्टुभौ भवतः ॥

छन्दसः त्रिष्टुप्त्वं च,

॥ सेन्द्रियत्वाय† ॥

स्यात् ।

बलं धनं प्रजातिर्वा ज्ञानं वेन्द्रियमुच्यते ॥

चतुर्थः खण्डः ।

---

* 'पाघ्रा—' इति पा॰ सू॰ ७-३-७८. † 'त्रिष्टुप्छन्दस इन्द्रियसाधनत्वे-नेन्द्रियरूपत्वं श्रुत्यन्तरे श्रुतम् इन्द्रियं वै त्रिष्टुप्' इति सायणः । 'त्रिष्टुबिन्द्रिययोः प्रजापतेरुरसा सृष्टत्वात् साधर्म्यादिन्द्रियहेतुत्वं त्रिष्टुभः' इति गोविन्दस्वामी ।

अथ स्विष्टकृतो याज्यानुवाक्यायुगळे त्विह ।
छन्दोविशेषान् फलदान् प्रब्रवीति प्ररोचयन् ॥

॥ गायत्र्यौ स्विष्टकृतः संयाज्ये कुर्वीत तेजस्कामो ब्रह्मवर्चसकामः ॥

तेजो दीप्तिर्वेदवृत्तसम्पत्तिर्ब्रह्मवर्चसम् ।
*ब्रह्महस्तिभ्यां वर्चसः समासान्तोऽच् कृतस्त्विह ॥
कामस्तु यजमानस्य स्वत एव सदा भवेत् ।
अन्तर्णीतण्यर्थकः कुर्व् ते होत्रा कारयेदिति[1] ।
स्विष्टकृद्युगळस्याख्या †संयाज्ये इति सूच्यते ॥

‡'संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्' इति। ते च §'स हव्यवाळ-मर्त्यः', ¶'अग्निर्होता पुरोहित' इति द्वे ॥

॥ तेजो वै ब्रह्मवर्चसं गायत्री ॥

साध्यसाधनयोरैक्यमिदमायुर्घृतं यथा ॥

ततश्च,

॥ तेजस्वी ब्रह्मवर्चसी भवति ॥

यजमानः ॥

किञ्च,

॥ य एवं विद्वान् गायत्र्यौ कुरुते ॥

सोऽपि होता भवेत् तेजोब्रह्मवर्चससंयुतः ॥

---

१. 'कारयेदिह' घ. ङ. पाठः.

---

* पा॰ सू॰ ५-४-७८. † सर्वेभ्यो हविर्भ्यः समवदाय यजतीति संयाज्या। ‡ आ॰ श्रौ॰ सू॰ २-१-२१. § ऋक्सं॰ ३-१-९-२. ¶ ऋक्सं॰ ३-१-९-१.

एवमुत्तरत्रापि ॥

॥ [*]उष्णिहावायुष्कामः कुर्वीत ॥

स्विष्टकृतः संयाज्ये इत्येव । ते च [†]' अग्ने वाजस्य गोमतः' इति द्वे ॥

॥ आयुर्वा उष्णिक् ॥

पूर्ववत् ॥

॥ सर्वमायुरेति ॥

यजमानः । सर्वं शताब्दरूपम् ॥

किञ्च,

॥ य एवं विद्वानुष्णिहौ कुरुते ॥

पूर्ववत् ॥

॥ अनुष्टुभौ स्वर्गकामः कुर्वीत ॥

ते च [‡]' त्वमग्ने वसून्' इति द्वे ॥

अनुष्टुब्भ्यां कथं स्वर्गप्राप्तिरित्यत उच्यते—

॥ द्वयोर्वा अनुष्टुभोश्चतुष्षष्टिरक्षराणि [§] ॥

चतुरष्टकत्वादनुष्टुभः ॥

॥ त्रय इम ऊर्ध्वा एकविंशा लोकाः ॥

एकविंशतेः स्वार्थे डे [¶]' ति विंशतेर्डिति ' । ये त्रय एकविंशास्ते भूर्भुवस्स्वराख्यास्त्रयो लोकाः स्युः । एकविंशस्य प्रतिष्ठात्वश्रुतेर्लोकानां [§] च प्रतिष्ठात्वात् ॥

---

[*] '(उद्दिताक्रान्ति ! उत् स्निह्यन्ति) ऊर्ध्वगामिनो भवन्त्यनया इति व्युत्पत्त्या आयुर्वृद्धिहेतुत्वमुष्णिहः ' इति भट्टभास्करः. [†] ऋक्सं० १-५-२७-४. [‡] ऋक्सं० १-३-३१-१. [§] 'द्वात्रिंशदक्षरानुष्टुप् ' २-५-१० इति तैत्तिरीयश्रुतिः. [¶] पा० सू० ६-४-१४२. [§] 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य ' २-५-१० इति तैत्तिरीयश्रुतिः.

॥ एकविंशत्यैकविंशत्यैवेमाँल्लोकान् रोहति ॥

आरुह्य च,

॥ स्वर्ग एव लोके चतुष्षष्टितमेन प्रतितिष्ठति ॥

द्वे *"विंशत्यादिभ्यस्तमट्—" ॥

॥ प्रतितिष्ठति य एवं विद्वाननुष्टुभौ कुरुते ॥

पूर्ववत् ॥

॥ बृहत्यौ श्रीकामो यशस्कामः कुर्वीत ॥

ते च †"एना वो अग्निं नमसा" इति द्वे ॥

॥ श्रीर्वै यशश्छन्दसां बृहती‡ ॥

बृहती छन्दः । स्वर्थे आम् ॥

॥ श्रियमेव यश आत्मन् धत्ते ॥

व्लुक् । आत्मनि । धत्ते स्थापयति ॥

॥ य एवं विद्वान् बृहत्यौ कुरुते ॥

सोऽपि होतात्मनि यशः श्रियं च स्थापयेदिह ॥

॥ पङ्क्ती यज्ञकामः कुर्वीत ॥

ते च §"अग्निं तं मन्ये" इति द्वे । सदा यज्ञानुष्ठानवान् भूयासमितीच्छन् यज्ञकामः ॥

---

* पा० सू० ५-२-५६. † ऋक्सं० ५-३-३१-१. ‡ 'बृहत्या बृहत्त्वहेतुत्वेन श्रीयशोहेतुत्वम्' इति भट्टभास्करः 'श्रीर्धनधान्यादिसंपत्तिः । यशः सत्कुलदानादिजन्या कीर्तिः' इति सायणः. 'श्रीकामो यशस्काम इति सामान्यविशेषभावेन सामानाधिकरण्यम् । आश्रितत्वयुक्तं यशः श्रीः । छन्दसामाश्रितत्वं बृहत्याः श्रूयते— 'तानि निर्वीर्याणि हीनान्यमन्यन्त । साब्रवीद् बृहती मामेव भूत्वा मामुपसंश्रयत' इति गोविन्दस्वामी § ऋक्सं० ३-८-२२-१

कथम्,

॥ *पाङ्क्तो वै यज्ञः ॥

†पञ्चसंख्यान्वयो ह्यस्ति पङ्क्तेर्यज्ञस्य चापि यत् ।

पङ्क्तिः पञ्चपदा पञ्च यज्ञस्यापि हि वै विधाः ॥

‡'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः' इति श्रुतेः । पञ्चशब्दाद्धि पङ्क्तिर्निरुक्ता § ॥

॥ उपैनं यज्ञो नमति ॥

§'व्यवहिताश्च' । उपनमति ।

एकाहाहीनसत्रात्मा यज्ञः संप्राप्नुयादिमम् ॥

किञ्च,

॥ य एवं विद्वान् पङ्क्ती कुरुते ॥

पूर्ववत् ॥

॥ त्रिष्टुभौ वीर्यकामः कुर्वीत ॥

ये च ¶'द्वे विरूपे' इति द्वे ॥

---

* 'पञ्चाक्षरा पङ्क्तिः । पाङ्क्तो यज्ञः । यज्ञमेवावरुन्धे' ६-१-५ इति तैत्तिरीयश्रुतिः † 'धानादिहविष्पञ्चकसम्बन्धित्वात् पाङ्क्तत्वं यज्ञस्य' इति भट्टभास्करः. 'यज्ञस्य पञ्चसंख्यायोगात् पाङ्क्तत्वम् । पञ्चसंख्यायोगश्च 'यो वै यज्ञं—' (ऐ० ब्रा० ८-६) इत्यत्र वक्ष्यते' इति गोविन्दस्वामी. तैत्तिरीयश्रुतिरपि— 'ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्तत्वमिति, धानाः करम्भः परिवापः पुरोळाशः पयस्या तेन पङ्क्तिराप्यते तद् यज्ञस्य पाङ्क्तत्वम्' ६-५-११ इति ‡ ऐ० ब्रा० २-३-३. § पञ्च पदानि परिमाणमस्येति पङ्क्तिः । पञ्चन्शब्दस्य टिलोपः तिप्रत्ययः कृत्वम् । § पा० सू० १-४-८२. ¶ ऋक्सं० १-७-१-१.

॥ ओजो वा इन्द्रियं वीर्यं त्रिष्टुप्[*] ॥

[†]बलं धनं प्रजातिर्वा ज्ञानं चेन्द्रियमुच्यते ।
ओजो दीप्तिर्भवेद् वीर्यं सामर्थ्यं सर्वसाधकम् ॥

ततश्च,

॥ ओजस्वीन्द्रियवान् वीर्यवान् भवति ॥

किञ्च,

॥ य एवं विद्वांस्त्रिष्टुभौ कुरुते ॥

पूर्ववत् ॥

॥ जगत्यौ पशुकामः कुर्वीत ॥

ते च [‡]'जनस्य गोपाः' इति द्वे ॥

॥ जागता वै पशवः ॥

कुतः । [§]'जगती हि तानाहरद्' इति वक्ष्यति ।
पशुभिश्च जगत्पोषः स्पष्टमेवोलभ्यते ॥

ततश्च,

॥ पशुमान् भवति ॥

[¶]भूम्नि मतुप् ॥

किञ्च,

॥ य एवं विद्वान् जगत्यौ कुरुते ॥

पूर्ववत् ॥

---

* 'इन्द्रियं वै त्रिष्टुप्' २-५-१० इति तैत्तिरीयश्रुतिः. † 'शारीरं बलमोजः, प्रजननकारणमिन्द्रियं, बलमात्रं वीर्यम्' इति भट्टभास्करः. 'वीर्यं शरीरबलं, तच्चौजस इन्द्रियस्य चोपलक्षणम् । ओजो बलहेतुरष्टमो धातुः । इन्द्रियं चक्षुरादिपाटवम्' इति सायणः. ‡ ऋक्सं० ४-१-३-१. § ऐ० ब्रा० १३-१. ¶ 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' पा० सू० वा० ५-२-९४.

॥ विराजावन्नाद्यकामः कुर्वीत ॥

*आद्यं भक्ष्यं प्रधानत्वादन्नस्यात्र पृथग् ग्रहः ।
ते च †'प्रेद्धो अग्ने' ‡'इमो अग्ने' इति द्वे ॥

कुतः,

॥ §अन्नं वै विराट् ॥

कथं,

॥ तस्माद्यस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजति तद्विराजो विराट्त्वम् ॥

भवति सम्पद्यते । भूयिष्ठं बहुतमम् । ¶'बहोर्लोपो भू च बहोः' । ‖'इष्ठस्य यिद् च' । विराजति दीप्यते च ।

विराजतीत्यतो हेतोर्विराट्शब्दः प्रवर्तते ॥

विराजौ कारयंश्च,

॥ वि स्वेषु राजति ॥

‡'व्यवहिताश्च' । स्वेषु ज्ञातिषु मध्ये विराजति ॥

व्याचष्टे—

॥ श्रेष्ठः स्वानां भवति ॥

इष्ठनि श्रः प्रशस्यस्य‡ श्रेष्ठः स्वैः स्तूयते सदा ॥

---

* 'अन्नादनसामर्थ्यम् अन्नाद्यम्' इति भट्टभास्करः. 'नैवा विदिवं वा इदमन्नमशनं पानं खाद इति पानखादनिवृत्त्यर्थमन्नाद्यग्रहणम्' इति गोविन्दस्वामी. † ऋक्सं० ५-१-२३-३. ‡ ऋक्सं० ५-१-२६-३. § 'अन्नं विराट् । विराजैवास्मा अन्नाद्यमवरुन्धे' २-५-१० इति तैत्तिरीयश्रुतिः. ¶ पा० सू० ६-४-१५८. ‖ पा० सू० ६-४-१५९. ‡ पा० सू० १-४-८२. ‡ पा० सू० ५-३-६०.

किञ्च,

॥ य एवं वेद ॥

सोऽपि स्वैः स्तुत्यः स्यात् ॥

पञ्चमः खण्डः ।

---

फलार्थमुक्तं वैराजं वक्तुं नित्यतयापि च ।
नानाच्छन्दोवीर्ययोगात् सम्यक् स्तौति प्ररोचयन्—

॥ अथो पञ्चवीर्यं वा एतच्छन्दो यद् विराट् ॥

पञ्चानां छन्दसां वीर्यं यत्र तत् पञ्चवीर्यकम् ॥

कथं,

॥ यत् त्रिपदा तेनोष्णिहागायत्र्यौ ॥

त्रिपात्त्वेन विराडेषा गायत्र्युष्णिक् च गृह्यताम् ।
उष्णिङ्नामोष्णिहेत्येतत् सम्यक् खल्वध्यगीष्महि ।
*'अग्नेर्गायत्र्यभवत् सयुग्वोष्णिहया सुविता' इति ॥

॥ यदस्या एकादशाक्षराणि पदानि तेन त्रिष्टुप् ॥

अस्या विराजः। पदं पादः। †'एकादशाक्षरा त्रिष्टुप्' इति वक्ष्यति ॥

॥ यत् त्रयस्त्रिंशदक्षरा तेनानुष्टुप् ॥

द्वात्रिंशदक्षरानुष्टुब् विराज्येकोनता ननु ॥

---

* ऋक्सं० ८-७-१८-४. † ऐ० ब्रा० १३-४.

अत आह—

॥ न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम् ॥

वि नाना अन्यत्वं यन्ति भजन्ते।

ऊनाधिकेन नैकेन न द्वाभ्यामपि वान्यता।
छन्दसां स्यादतो नास्या अनुष्टुप्त्वं विरुध्यते॥

॥ यद् विराट् तत् पञ्चमम् ॥

स्वयम् ॥

ततश्च उक्तानां पञ्चानां,

॥ सर्वेषां छन्दसां वीर्यमवरुन्धे ॥

रुधेर्लिङो लटस्त श्नसोरल्लोपो* श्नपस्तथोः†।
अवरोधः प्राप्तिः॥

॥ सर्वेषां छन्दसां वीर्यमश्नुते ॥

उक्तं फलमनुभवति॥

किञ्च,

॥ सर्वेषां छन्दसां सायुज्यं सरूपतां सलोकतामश्नुते ॥

तुल्ययोगः[1] सयुक् तुल्यवेषयोगः सरूपता।
तुल्यस्थानः सलोकः स्याल्लोकोऽस्तिच्छन्दसामपि॥

---

१. 'भोगः' क. पाठः.

---

* पा॰ सू॰ ६-४-१११. † पा॰ सू॰ ८-२-४०.

ऋषीणामपि यज्ञानां वेदानां च गवामिव ।
ऋषिच्छन्दोपब्रलोका ब्रह्मलोकसमीपगाः ॥

किञ्च,

॥ अन्नादोऽन्नपतिर्भवति ॥

आप्नोति चान्नस्वामित्वमुपभोगेन संयुतम् ॥

न केवलं स्वयमेव,

॥ अश्नुते प्रजयान्नाद्यम् ॥

पुत्राद्यया च प्रजया सहैवान्नाद्यमश्नुते ।
कः । यजमानः ॥

किञ्च,

॥ य एवं विद्वान् विराजौ कुरुते ॥

स होतापि ॥

॥ तस्माद् विराजावेव कर्तव्ये ॥

नित्यं स्विष्टकृतो याज्यानुवाक्ये ॥

के ते विराजौ,

॥ *प्रेद्धो अग्न †इमो अग्न इत्येते ॥

ऋचौ ।

प्रेद्धेत्यनूच्य जुषतां हविरन्त इमो यजेत् ॥
अथानृतं दीक्षितस्य न स्यादिति निषेधति—

---

* ऋसं० ५-१-२३-२. † ऋसं० ५-१-२६-१.

॥ ऋतं वाव दीक्षा ॥

व्याचष्टे—

॥ *सत्यं दीक्षा ॥

ततः किं,

॥ तस्माद् दीक्षितेन सत्यमेव वदितव्यम् ॥

दीक्षायाः सत्यरूपत्वात् सत्यमेव सदा वदेत् ॥

॥ अथोखल्वाहुः ॥

अथोखल्वपिचेत्यर्थ आहुः केचिन्मतान्तरम् ॥

कथं,

॥ कोऽर्हति मनुष्यः सर्वं सत्यं वदितुं सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इति ॥

सर्वं सत्यं मनुष्येण नैव वक्तुं हि शक्यते ।
देवा हि सत्यसम्बद्धा नरा अनृतवादिनः ॥

कथं तर्हि दीक्षितेन कर्तव्यमत उच्यते—

---

* 'मानसमर्थतथात्वम् ऋतम् । वाचिकमर्थतथात्वं सत्यम् । तदुभयहेतुका दीक्षा भवति । तद्धेतुत्वात् ताच्छब्द्यम् । तस्माद् दीक्षितेन सत्यमेव वदितव्यम् इति मनःपूर्वकं वागुत्तररूपम् इति मनोऽप्यनृतं मनुष्याणां किं पुनर्वागिति प्रतिपादनार्थम् ऋतत्वमन्तरेण वाचः सत्यत्वाभावात् सत्यग्रहणमेव कृतं न त्वनृतं ज्ञातव्यम्' इति भट्टभास्करः. 'यथार्थवादित्वम् ऋतम् । यथादृष्टार्थवादित्वं सत्यम् । अनयोर्दीक्षासिद्ध्यर्थत्वाद् दीक्षासामानाधिकरण्यम् । तत्र यथार्थवादित्वस्यानुष्ठातुमशक्यत्वाद् यथादृष्टार्थवादित्वमेव विदधाति—तस्माद् दीक्षितेनेति' इति गोविन्दस्वामी.

॥ *विचक्षणवतीं वाचं वदेत् ॥

विचक्षणोक्त्या साहित्यात् प्रोक्तं चनसितं त्वपि ।
नाम्नामन्ते तयोरुक्तिर्विप्रे चनसितं भवेत् ॥
विचक्षणं राजविशोरापस्तम्बो ह्यसूत्रयत्—

†'चनसितं विचक्षणमिति नामधेयान्तेषु निदधाति । चनसितेति ब्राह्मणम् । विचक्षणेति राजन्यवैश्यौ' इति । तद्यथा—

एहि होतश्चनसित शस्त्रं श्रोतुमिहागतौ ।
अस्मत्प्रीत्या महाराजः सार्वभौमो विचक्षणः ॥
कृतवैश्यः सोमकश्च[1] कोटिसारो विचक्षणः ।
द्रुतं प्रतिगृह्णीहि[2] त्वं ब्रह्मंश्चनसितेति च ॥

विचक्षणशब्दं स्तौति—

॥ चक्षुर्वै विचक्षणम् ॥

चक्षेर्धातोश्चक्षुरुसि ल्युटि चक्षेर्विचक्षणः ।
इत्येकधात्वन्वयेन चक्षुरुक्तो विचक्षणः ॥

कथं,

॥ वि ह्येनेन पश्यति ॥

इति । विपश्यति एनेन चक्षुषा ॥

तस्मात्,

॥ एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः ॥

---

१. 'कृते वैश्यस्तोमकश्च', २. 'द्रुतं एहीहि' घ. पाठः.

---

* 'विचक्षणेत्यक्षरचतुष्टयात्मको मन्त्रः, तद्युक्तं वाक्यं युञ्जीत' इति सायणः.
† आप० श्रौ० सू० १०-१२ ५, ८.

कथं,

॥ [*]तस्मादाचक्षाणमाहुरद्रागिति स यद्यदर्शमित्याहाथास्य श्रद्दधति ॥

तस्मात् तथाहि ।

केषांचित् सन्निधौ कश्चित् किञ्चिदेत्य प्रभाषते ।
श्रोतारस्तं वदन्त्येवमद्राक्षीः किमिदं त्विति ॥
सोऽद्राक्षमिति चेद् ब्रूयात् सर्वे श्रद्धां तु कुर्वते ।
अद्राक्षीरिति हि प्राप्तेऽद्राक्पदं छान्दसं मतम् ॥

अदर्शमिति । [†]'इरितो वा' इत्यङ् ॥

किञ्च,

॥ यद्यु वै स्वयं पश्यति न बहूनां चनान्येषां श्रद्दधाति ॥

लोको वाक्यमिति शेषः । चनेत्यप्यर्थे ।

सर्वो लोकः स्वदृष्टेन विरुद्धं न शृणोति हि ॥

॥ तस्माद् विचक्षणवतीमेव वाचं वदेत् ॥

यथोदाहरामः ॥

एवञ्च,

॥ सत्योत्तरा हैवास्य वागुदिता भवति भवति ॥

---

* 'द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति, य एव ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तद् सत्येनैवैतत् समर्धयति' इति श॰ ब्रा॰ १-३-१-२७ इति वाजसनेयिनः, 'अनृतं वै वाचा वदति अनृतं मनसा ध्यायति । चक्षुर्वै सत्यम् । अद्रागित्याह । अदर्शमिति । तत् सत्यम्' इति तै॰ ब्रा॰ १-४-४. † पा॰ सू॰ ३-१-५७.

अस्य अनेन विचक्षणचनसितवादिना दीक्षितेन वाक् सर्वा वदिता उक्ता । वदिर्यजादिः । भवति सम्पद्यते* ।

द्विरुक्तिः सूचयत्यत्र ह्यध्यायस्य समापनम् ॥

षष्ठः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ सुखप्रदायां प्रथमोऽध्यायः[1] ॥

## अथ द्वितीयोऽध्यायः ॥

दीक्षणीयेष्टिरुक्ताथ प्रायणीयाथ कथ्यते—

॥ स्वर्गं वा एतेन लोकमुपप्रयन्ति यत् प्रायणीयस्तत् प्रायणीयस्य प्रायणीयत्वम् ॥

यत् यः ।

प्रादिणः करणेऽनीयर् पुंस्त्वं यागमपेक्ष्य च ।

प्रयोक्रपेक्षं बहुत्वम् ।

†प्रायणीयेति शब्दोऽयमिष्टावेवं प्रवर्तते ।

अनयेष्ट्या स्वर्गलोकं गन्तुं प्रारभते यतः ॥

---

1 'षड्गुरुशिष्येण विरचितायां ब्राह्मणव्याख्यायां प्रथमोऽध्यायः' ख. ङ. पाठः.

---

* अत्र भट्टभास्करः —'सत्यस्य चक्षुषो वाचकस्य विचक्षणशब्दस्य मन्त्रस्थानीयस्य प्रयोगेण परस्य सत्यस्य वस्तुनः स्मरणात् सत्योत्तरैव वागनेनोदिता भवति । सत्यासत्यवदने तेन दोषेण न लिप्यते । यद्वा परवस्तुस्मरणमहिम्ना कश्चिदप्यसत्यवाङ् सोऽत्यद्यते ' इति ।

† 'प्रतियन्त्यनेनया यज्ञं दीक्षिता इति प्रायणीया ' इति भट्टगुरुदत्तः.

अथास्यास्तुल्यकर्तृत्वं ब्रवीत्युदयनीयया—

॥ प्राणो वै प्रायणीय उदान उदयनीयः समानो होता भवति ॥

उदिणः करणेऽनीयर् पुंस्त्वं त्वागमपेक्ष्य तु[1] ।
प्रशब्दोच्छब्दवत्त्वेन प्राणोदानत्ववर्णनम् * ॥

प्रदर्शनं च होतेति सर्वत्विक्तुल्यतोच्यते ।
'ते चैव कुर्युर्ये प्रायणीयामि'ति हि सूत्र्यते† ॥

॥ समानौ हि प्राणोदानौ ॥

एकशरीरवर्तित्वात् ॥

तच्च तुल्यत्वं,

॥ प्राणानां क्लृप्त्यै प्राणानां प्रतिप्रज्ञात्यै ॥

च स्यात् । क्लृप्तिः संश्लेषः । प्रतिप्रज्ञातिरसंकीर्णता ॥

विधातुं देवता इष्टेरितिहासं ब्रवीत्यथ—

॥ यज्ञो वै देवेभ्य उदक्रामत् ॥

यज्ञ उत्क्रान्ते,

॥ ते देवा न किञ्चनाशक्नुवन् कर्तुम् ॥

‡'शकधृष—' इति तुमुन् । किञ्चन किञ्चित् ॥

---

1. 'च' घ ङ पाठः

---

* 'प्राणन्ति जीवितुमारभन्तेऽनेनेति प्राणः । प्रयन्ति स्वर्गं गन्तुं प्रारभन्तेऽनेनेति प्रायणीयः । एवं व्युत्पत्त्यादिसाम्यात् प्राणस्थानीयः प्रायणीयः । तथा उदनन्ति ऊर्ध्वं जीवन्त्यनेनेत्युदानः । उद्यन्ति ऊर्ध्वं स्वर्गं यान्ति प्राप्नुवन्त्यनेनेत्युदयनीयः । एवं व्युत्पत्त्यादिसाम्याद् उदानस्थानीय उदयनीयः । यस्मादेवं तस्मात् प्रायणीयोदयनीययोः समान एक एव होता भवति ' इति भट्टभास्करः † आ० श्रौ० सू० ६-१४-५ ‡ पा० सू० ३-४-६५.

किञ्च,

॥ न प्राजानन् ॥

दिश इति शेषः ॥

॥ तेऽब्रुवन्नदितिम् ॥

ते देवाः ॥

किं,

॥ त्वयेमं यज्ञं प्रजानामेति ॥

करवाम च । दिश इति शेषः ।

करवाम त्वया यज्ञं प्रजानाम च वै दिशः ।

जानाम । लोट् आट् ॥

॥ सा तथेत्यब्रवीत् ॥

देवान् प्रति ॥

॥ सा वै वो वरं वृणा इति ॥

अब्रवीदित्येव । वः युष्मान् । वृङः कर्मण्यच् ; वरणीयम् । वृणै । इट् । *'एत ऐ' ॥

॥ वृणीष्वेति ॥

ते चोचुरिति शेषः ॥

॥ सैतमेव वरमवृणीत ॥

एतं वक्ष्यमाणम् । सा अदितिः ॥

---

* पा० सू० ३-४-९३.

॥ मत्प्रायणा यज्ञाः सन्तु मदुदयना इति ॥

उदिण् समाम्नावादौ प्रेण् करणे ल्युड्द्वयं कृतम् ।
*प्रत्ययोत्तरपदेति मपर्यन्तस्य मोऽस्मदः ।
आरम्भसाधनमहं येषां मत्प्रायणास्तु ते ॥
यज्ञाः सन्तु तद्वदेवं समाप्यन्तां मयैव ते ।
मद्देवत्ये इह स्यातां यज्ञस्याद्यन्तकर्मणी † ॥

॥ तथेति ॥

देवा ऊचुः ॥

॥ तस्मादादित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयः ॥

‡अदितेर्ण्यः ॥

॥ वरवृतो ह्यस्याः ॥

स चरुर्वररूपेण देव्यादित्या वृतो यतः ।

अस्याः अनया ॥

॥ अथो एतं वरमवृणीत ॥

चेति शेषः । एतं च वरं वक्ष्यमाणं साव्रणीत ॥

---

* पा० सू० ७-२-९८. † 'देवा वै देवयजनमध्यवसाय दिशो न प्राजानंस्तेऽन्योन्यमुपाधावंस्त्वया प्रजानाम त्वयेति । तेऽदित्याँ समध्रियन्त त्वया प्रजानामेति । साब्रवीद् वरं वृणै मत्प्रायणा एव वो यज्ञा मदुदयना असन्निति । तस्मादादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयः' ६-१-५ इति तैत्तिरीयश्रुतिः.
‡ पा० सू० ४-१-८५.

॥ मयैव प्राचीं दिशं प्रजानाथ ॥

दिशं प्राचीं प्रजानीथ[1] मया मत्स्वस्तिपथ्यया ।
छन्दस्त्वाद् *"ई इत्यघो"र्न तादेशो न च थस्य वै ॥

॥ अग्निना दक्षिणाम् ॥

दिशं प्रजानाथेत्येव ॥

॥ सोमेन प्रतीचीम् ॥

पूर्ववत् ॥

॥ सवित्रोदीचीमिति ॥

पूर्ववत् ॥

अथ विधत्ते—

॥ †पथ्यां यजति ॥

पथ्येति त्वेकदेशेन पथ्यास्वस्तिर्हि कथ्यते ।
भीमसेनो यथा भीमः सत्यभामा च भामिनी ॥
भामेति चोच्यते देवी त्रैलोक्ये गुरुवल्लभा ।
पुरस्तात्तु यजेदत्र पथ्यास्वस्तिं हि देवताम् ॥

॥ यत् पथ्यां यजति तस्मादसौ पुर उदेति पश्चास्तमेति ॥

तस्मात् तथाहि । असौ आदित्यः ।

---

1 'प्राची तु जानीथ' घ. पाठः.

---

* पा० सू० ६-४-११३. † 'अदितेरेव सत्त्वावस्थान्तरम् उपोलक्षणं पथ्यास्वस्तिरुच्यते । पथि साध्वी पथ्या शोभनविभूतिहेतुः प्रजानां स्वस्तिः । यत्र चोषा उदेति सा प्राची भवति' इति भट्टभास्करः.

पश्चादर्थे *'पश्च पश्चा च छन्दसि' निपातितौ ॥

ततः किं,

॥ पथ्यां ह्येषोऽनुसञ्चरति ॥

प्रायणीयोदयनीययोः पथ्यामाद्यन्तवर्तिनीम् ।
अनुकुर्वन् याति सूर्यः स्वां पथ्यावदहं स्विति ॥

पथ्यास्वस्तेरादित्वमन्तत्वं चाज्यहविरपेक्षम् । सूत्र्यते हि—†'पथ्यास्वस्तिरग्निः सोमः सवितादितिः' इति । ‡'पथ्यास्वस्तिरिहोत्तमाज्यहविषाम्' इति च ॥

प्रायणीयोदयनीयेष्ट्योः,

॥ अग्निं यजति ॥

दक्षिणस्यां दिशि ॥

॥ यदग्निं यजति तस्माद् दक्षिणतोऽग्र ओषधयः
पच्यमाना आयन्ति ॥

नमति ह्यग्रतः पक्वं सस्यं दक्षिणतः सदा ।
विन्ध्याद्रेर्दक्षिणा यद्वा सस्यं शीघ्रं हि पच्यते ॥

॥ आग्नेय्यो ह्योषधयः ॥

अग्नेरुत्पन्नेन जलेन सम्पाद्यत्वात् ॥

---

* पा० सू० ५-३-३३. † आ० श्रौ० सू० ४-३-२. ‡ आ० श्रौ० सू० ६-१४-३.

॥ सोमं यजति ॥

प्रतीच्यां दिशि ॥

॥ यत् सोमं यजति तस्मात् प्रतीच्योऽप्यापो बह्व्यः स्यन्दन्ते ॥

प्रतीच्यः प्रत्यङ्मुख्यः । सह्यपर्वताद् धावन्ति ॥

॥ सौम्या ह्यापः ॥

*सोमसम्बन्धिन्यः । इदमर्थे †'सोमाट्ट्यण्' । टाप् । अमृतात्मकत्वात्[1] सोमस्य ॥

॥ सवितारं यजति ॥

उदीच्यां दिशि ॥

॥ यत् सवितारं यजति तस्मादुत्तरतःपश्चादयं भूयिष्ठं पवमानः पवते ॥

उत्तरतःपश्चात् प्रतीच्युदीच्यन्तराळे । पवमानः वायुः । भूयिष्ठं बहुतमम् । पवते आगच्छति ।

सावित्रयागे तु कृते पवमानस्य किं बभूव ॥

---

१. 'अमृताख्यजलात्मत्वात्' क. पाठः.

---

* 'अपां सौम्यत्वं सोमस्य वृष्टिहेतुतया । वृष्टिहेतुत्वं च सूर्यरश्मित्वात् सोमस्य । तथाहि श्रुतिः—'सुषुम्नः सूर्यरश्मिः' इति गोविन्दस्वामी. 'सोममण्डलप्रभवत्वाद् सर्वासामपाम्' इति भट्टभास्करः. † पा० सू० ४-२-३०.

अत आह—

॥ सवितृप्रसूतो ह्येष एतत् पवते ॥

एतत् एतर्हि प्रत्यगुदगन्तराळे । सवितृप्रसूतः सवित्रानुज्ञातः ॥

॥ *उत्तमामदितिं यजति ॥

क मध्ये । †'मध्येऽदितिं हविषा' इति आपस्तम्बः ।

पथ्याग्निसोमसवितृनाज्येनैन्द्र्यादिषु क्रमात् ।
इष्ट्वादितिं क्षीरशृतचरुणा मध्यतो यजेत् ॥

॥ यदुत्तमामदितिं यजति तस्मादसाविमां वृष्ट्याभ्युनत्ति ॥

असौ द्यौः । इमां पृथ्वीम् । उनत्ति क्लेदयति । अदितिरिति पृथिवीनामत्वाद् दिवश्चोत्तमोर्ध्वलोकत्वात् । उनत्ति । उन्देर्लट्[2] । ‡'श्नान्नलोपः' ॥

किञ्च,

॥ अभिजिघ्रति ॥

असाविमामित्येव । §अभिघ्राणमुपभोगः[3] । भूगतं हविर्यौरुप-भुङ्क्ते[4] ॥

---

१. 'क्षीरशृत' ख. पाठः. २. 'उन्देर्लट्' क. पाठः. ३. 'द्यौः' ख. पाठः. ४. 'भुङ्क्ते' क ख पाठः

---

* 'उत्तमां मूर्धावस्थिताम्' इति सायणः. तैत्तिरीयश्रुतिरपि—'पथ्यां स्वस्तिमयजन् प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणां सोमेन प्रतीचीं सवित्रोदीचीमदित्योर्ध्वाम्' ६-१-५ इति. † श्रौ० सू० १०-२१-११. ‡ पा० सू० ६-४-२३. § 'अभिघ्राणं भीमरसादानम्' इति भट्टभास्करादयः.

एवं,

॥ *पञ्च देवता यजति ॥

†प्राच्यां पथ्यां दक्षिणाग्निं प्रतीच्यां सोममेव च ॥
उदीच्यां सवितारं चेत्याज्येनेष्ट्वाथ मध्यतः ।
अदितिं चरुणेत्येव पञ्चकृत्वो यजत्ययम् ॥

॥ पाङ्क्तो यज्ञः ॥

उक्तार्थम् ॥

॥ सर्वा दिशः कल्पन्ते कल्पते यज्ञोऽपि तस्यै जनतायै कल्पते यत्रैवं विद्वान् होता भवति ॥

क्लृप्तिः कार्यक्षमत्वं स्याज्जनात् सामूहिकस्तु तल् ‡ ।

ऋत्यर्थे ङेद्वयम् । यत्र होतैवं विद्वान् भवति तस्यां जनतायां दिशः कल्पन्ते । यज्ञश्च कल्पते । अपि कल्पते । सर्वो भोग इति शेषः । सर्वोऽपि भोगः कल्पते ॥

प्रथमः खण्डः ।

---

* 'पञ्च देवता यजति पञ्च दिशो दिशां प्रज्ञात्यै' ६-१-५ इति तैत्तिरीयश्रुतिः.
† 'चतुर आज्यभागान् प्रतिदिशं यजति पथ्यां स्वस्तिं पुरस्तादग्निं दक्षिणतः सोमं पश्चात् सवितारमुत्तरतो मध्येऽदितिं हविषा' आप० श्रौ० सू० १०-२१-११.
‡ 'ग्रामजनबन्धुभ्यस्तल्' पा० सू० ४-२४-२.

अथात्रैष्टौ प्रयाजेषु गुणतः फलमाह ह—

॥ यस्तेजो ब्रह्मवर्चसमिच्छेत् प्रयाजाहुतिभिः प्राङ् स इयात् ॥

प्राङ् प्रागित्यर्थः। क्रियाविशेषणत्वात्। इयात् कारयेत्। प्रयाजान् प्रागपवर्गान् ॥

॥ तेजो वै ब्रह्मवर्चसं प्राची दिक् ॥

तेजोब्रह्मवेददायी सूर्यो यस्मादुदेत्यतः ॥

॥ तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् प्राङेति ॥

सः ॥

॥ योऽन्नाद्यमिच्छेत् प्रयाजाहुतिभिर्दक्षिणा स इयात् ॥

*'दक्षिणादाच्'। समिधादिस्वाहाकृत्यन्तान् दक्षिणापवर्गान् कारयेत् ॥

कुतः,

॥ अन्नादो वा एषोऽन्नपतिर्यदग्निः ॥

यत् यः। उक्तं हि प्राक्—†'दक्षिणतोऽग्न ओषधयः पच्यमाना आयन्त्याग्नेय्यो ह्योषधयः' इति ॥

॥ अन्नादोऽन्नपतिर्भवत्यश्नुते प्रजयान्नाद्यं य एवं विद्वान् दक्षिणैति ॥

एति कारयति ॥

---

* पा० सू० ५-३-३६. † ऐ० आ० २-१.

॥ यः पशूनिच्छेत् प्रयाजाहुतिभिः प्रत्यङ् स इयात् ॥

पूर्ववत् ॥

॥ पशवो वा एते यदापः ॥

यत् याः ।

यत्र देशे जलं पूर्णं वर्धन्ते पशवोऽत्र हि ।

*'अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकं' †'सुप्रपाणं भवत्वघ्न्याभ्यः' इति दर्शनात् ॥

॥ पशुमान् भवति य एवं विद्वान् प्रत्यङ्ङेति ॥

पूर्ववत् ॥

॥ यः सोमपीथमिच्छेत् प्रयाजाहुतिभिरुदङ् स इयात् ॥

पिबतेः क्थनि पीथस्तु पानं वंशगतं सदा ।
य इच्छति हि सोमस्य तानुदङ् संप्रवर्तयेत् ॥

कुतः,

॥ उत्तरा ह वै सोमो राजा ॥

‡उत्तरादाच् ।

---

* ऋक्सं० २-३-२१-५. † ऋक्सं० ४-४-२८-३. ‡ पा० सू० ५-३-३८.

उदीच्या हि दिशः सोमो राजा देवैः प्रकल्पितः।
किञ्च भारतवर्षस्य स्थिता सोमलतोत्तरा * ॥
† 'सोमस्येव मौजवतस्य भक्ष' इत्यध्यगीष्महि ॥

॥ प्र सोमपीथमाप्नोति य एवं विद्वानुदङ्ङेति ॥

प्राप्नोति सोमपानं स य उदक् तान् प्रवर्तयेत्।
अथ प्राग्दक्षिणाप्रत्यगुदङ्मध्येष्विति क्रमात् ॥
स्युः प्रयाजा इमं पक्षं दर्शयन् कथयत्ययम्—

॥ स्वर्ग्यैवोर्ध्वा दिक् ॥

प्रागादिपूर्विकोर्ध्वा दिक् स्वर्गसम्प्राप्तिकारणम् ॥

॥ सर्वासु दिक्षु राध्नोति ॥

‡प्राच्याद्यूर्ध्वदिगन्तं तु प्रयाजान् पञ्च कारयेत्।
सर्वासृद्धिमवाप्नोतीत्ययं पक्षो हि वै शुभः ॥

---

* तथाच सुश्रुते चिकित्सितस्थाने २९-तमाध्याये—

'हिमवत्यर्बुदे सह्ये महेन्द्रमलये तथा। श्रीपर्वते देवगिरौ गिरौ देवसहे तथा ॥
पारियात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा। उत्तरेण वितस्तायाः प्रवृद्धा ये महीधराः ॥
पञ्च तेषामधो मध्ये सिन्धुनामा महानदः। ह्रुवत् प्लवते तत्र चन्द्रमाः सोमसत्तमः ॥
तस्योद्देशेषु चाप्यस्ति मुञ्जवानंशुमानपि। काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम् ॥
गायत्र्यस्त्रैष्टुभः पाङ्क्तो जागतः शाङ्करस्तथा। अत्र सन्त्यपरे चापि सोमाः सोमसमप्रभाः ॥
न तान् पश्यन्त्यधर्मिष्ठाः कृतघ्नाश्चापि मानवाः। भेषजद्वेषिणश्चापि ब्राह्मणद्वेषिणस्तथा' ॥
इत्यादिना सोमलतायाः स्थानविशेषलक्षणादीनि स्फुटं प्रतिपादितानि.

† ऋक्सं० ७-८-३-१. ‡ 'पञ्च प्रयाजान् प्राचो यजति प्रतिदिशं वा समिधः पुरस्तात् तनूनपातं दक्षिणतः इडां पश्चाद् बर्हिरुत्तरतः स्वाहाकारं मध्ये' इत्यापस्तम्बः.

॥ सम्यञ्चो वा इमे लोकाः ॥

स्युरिति शेषः ।

*सम्यञ्चस्तु समीचीना अन्योन्यस्योपकारिणः ।
भवन्त्येवं कुर्वतो हि लोका भूस्स्वराख्यकाः ॥

व्याचष्टे—

॥ सम्यञ्चोऽस्मा इमे लोकाः श्रियै ॥

अस्मै अस्यार्थाय । श्रियै समृद्ध्यर्थम् ॥

॥ दीद्यति य एवं वेद ॥

दीद्यति दीप्यते वेदिता ।

दीदीतिधातुर्दीप्त्यर्थो लटस्तिपि श्नपीह यण् ॥

पुनः पथ्यादीन् स्तौति—

॥ पथ्यां यजति ॥

पथ्यास्वस्तिर्देवतात्र पथ्येत्युक्तैकदेशतः ॥

॥ यत् पथ्यां यजति वाचमेव तद् यज्ञमुखे सम्भरति ॥

यज्ञादौ वाचमादत्त इत्यर्थः ॥

॥ †प्राणापानावग्नीषोमौ ॥

नस्तो वहिर्गतो वायुः प्राणापानौ विशन् पुनः ।
यागोऽग्नेश्च सोमस्य स्यात् प्राणापानवृद्धये ॥

---

* 'सम्यञ्चः परस्परोपकारिणः । द्यौर्वृष्ट्योपकरोति । यामादिनेयम्' इति गोविन्दस्वामी. 'सम्यञ्चः स्वोचितभोगप्रदाः' इति सायणः. † 'मुखनासिकाभ्यां बहिः सञ्चरन्नुच्छ्वासरूपो वायुः प्राणः । स हौष्ण्यं शरीरे जनयति । ततोऽग्नेः प्राणरूपत्वम् । प्रतिनिवृत्त मुखनासिकाभ्यामन्तः संचरन् वायुरपानः । स च शरीरे शैत्यं जनयति इति निश्वासस्य सोमरूपत्वम्' इति सायणः.

भ्याम औ । प्राणापानाभ्याम् ॥

॥ *प्रसवाय सविता ॥

इज्यते सविता सम्यग् भोजनादिसमृद्धये[1] ॥

॥ प्रतिष्ठित्या अदितिः ॥

इज्यते हि प्रतिष्ठार्थं चरुणादितिरुत्तमा ॥

पुनरपि स्तौति—

॥ †पथ्यामेव यजति ॥

पथ्यां स्वस्तिम् ॥

॥ यत् पथ्यामेव यजति वाचैव तद् यज्ञं पन्थामपि नयति ॥

पन्थाम् । नशब्दलोपः । पन्थानम् । तत् तेन पथ्यायागेन । नयति प्रापयति यज्ञम् ॥

॥ ‡चक्षुषी एवाग्नीषोमौ ॥

---

1. 'प्रसिद्धये' ग. घ. पाठः.

---

* 'प्रसवाय यज्ञकर्मणि प्रेरणाय' इति सायणगोविन्दस्वामिनौ. 'अभ्यनुज्ञानाय' इति भट्टभास्करः. † 'पथ्यामेवेत्यादि । पैङ्गीयं ब्राह्मणस्य—यत्रोक्तेऽर्थे हेत्वन्तरं वक्तुमिच्छति तत्रैवकारं प्रयुङ्क्ते' इति भट्टभास्करः. ‡ 'पथ्यास्वस्ति यजति । प्राचीमेव तया दिशं प्रजानाति । पथ्यास्वस्तिमिष्ट्वाग्नीषोमौ यजति । चक्षुषी वा एते यज्ञस्य यदग्नीषोमौ ताभ्यामेवानुपश्यति । अग्नीषोमाविष्ट्वा सवितारं यजति । सवितृप्रसूत एवानुपश्यति । सवितारमिष्ट्वादितिं यजति । इयं वा अदितिरस्यामेव प्रतिष्ठायानुपश्यति ' इति तै० सं० ६-१-५. 'अग्नीषोमयोस्तेजस्वित्वाद् दिग्विशेषज्ञानहेतुत्वाच्चक्षुरिन्द्रियरूपत्वम्' इति सायणः.

ध्याम औक्षः श्री । चक्षुषोरर्थाय । इत्येते अग्नीषोमौ । द्वित्वयोगात् ॥

॥ प्रसवाय सविता ॥

प्रसवोऽत्र वशीकारस्तदर्थं सवितेत्यते ॥

॥ प्रतिष्ठित्या अदितिः ॥

स्थः क्तिन् * 'द्यतिस्यती'तीत्वं स्थादिभ्योऽङि विधीयते ॥

॥ चक्षुषा वै देवा यज्ञं प्राजानन् ॥

प्रज्ञातवन्तः ॥

॥ चक्षुषा वा एतत् प्रज्ञायते यदप्रज्ञेयम् ॥

अप्रज्ञेयं प्रयत्नादृते ज्ञातुमशक्यम् । शक्यार्थे † 'अचो यत्' ॥

॥ तस्मादपि मुग्धश्चरित्वा यदैवानुष्ठ्या चक्षुषा प्रजानात्यथ प्रजानाति ॥

तस्मात् तथाहि । अपि खलु । अथ तदा । ‡ अनुष्ठ्या अनुष्ठानेन । भावे स्थः क्तिः ॥

॥ यद् वै तद् देवा यज्ञं प्राजानन्नस्यां वाव तत् प्राजानन् ॥

यत् यदा । तत् तदा । अस्यां पृथिव्याम् । प्राजानन् प्रज्ञातवन्तः ॥

---

* पा० सू० ७-४-४०, † पा० सू० ३-१-९७, ‡ 'अनुष्ठ्या प्रयत्नेन' इति गोविन्दस्वामी । 'केनापि प्रयत्नविशेषेण पर्वतारोहणादिना' इति सायणः.

॥ अस्यां समभरन् ॥

लङ्[1] भृवादेर्भृ भरणे भृञो वा श्लुः शपो न तु ।
हृञो वा *'हृग्रहोर्भत्वं'[2] निरुक्तमभरंस्त्रिधा ॥

॥ अस्यै वै यज्ञस्तायतेऽस्यै क्रियतेऽस्यै सम्भ्रियते ॥

इत्यर्थे ङेत्रयम् । तायते विस्तीर्यते । †'तनोतेर्यकि' इत्यात्वम् । क्रियते अनुष्ठीयते । सम्भ्रियते संभ्रियते ॥

कथम्,

॥ इयं ह्यदितिः ॥

अदितिरिति भूनामसु पाठात् ॥

॥ तदुत्तमामदितिं यजति ॥

तत् तदर्थम् ॥

॥ यदुत्तमामदितिं यजति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै ॥

तत् स्यात् । प्रज्ञातिरवगतिः । ‡अनुख्यातिः सम्यगुपलम्भः ॥

द्वितीयः खण्डः ।

---

१. 'लङ्', २. 'हृग्रहोर्भश्च' क. पाठः.

---

* पा० सू० वा० ८-२-३२. † पा० सू० ६-४-४४. ‡ 'अनुख्यातिश्चानुष्ठानसौकर्यम्' इति गोविन्दस्वामी. 'अनुक्रमेण स्वर्गस्य लोकस्य कथनाय प्रकाशनाय' इति भट्टभास्करः.

पथ्यास्वस्तेस्तु युगळं विधित्सुः प्रब्रवीत्यथ--

॥ *देवविशः कल्पयितव्या इत्याहुः ॥

†विशः सेनाः ‡कल्पनं च सम्यगेव प्रपूजनम् ॥

किमर्थं,

॥ ताः कल्पमाना अनु मनुष्यविशः कल्पन्त इति ॥

कल्पमानाः अनुभूतपूजाः, अनु लक्षीकृत्य §'अनुर्लक्षणे' ¶'कर्म-प्रवचनीययुक्ते[1] द्वितीया'। कल्पन्ते सम्यग् भवेयुः ॥

ततश्चास्य यजमानस्य,

॥ सर्वा विशः कल्पन्ते ॥

विशः पुत्राद्याः ॥

---

1. 'प्रवचनीयलक्षणे' क. पाठः.

---

* 'अदितिमिष्ट्वा मारुतीमृचमन्वाह मरुतो वै देवानां विशो देवविशं खलु वै कल्पमानं मनुष्यविशमनुकल्पते यन्मारुतीमृचमन्वाह विशां क्लृप्त्यै' तै॰ सं॰ ६-१-५. 'अदितिमिष्ट्वा मारुतीमृचमनूच्याज्येन नक्तमभिपूर्वैता देवता यजति' आप॰ श्रौ॰ सू॰ १०-२१-१२. † 'देवानां विशः प्रजाः परिकरभूता मरुदादयो देवा विशः' इति भट्टभास्करः। 'विश इत्ययं शब्दः प्रजामात्रवाची वैश्यजातिविशेषवाची वा। सन्ति हि देवेष्वपि जातिविशेषाः। अग्निर्बृहस्पतिश्च देवेषु ब्राह्मणौ। 'अग्ने महाँ असि ब्राह्मण-भारत'। 'ब्रह्म वै देवानां बृहस्पतिः' इति श्रुतेः। क्षत्रियादिजातयस्तु सृष्टिप्रकरणे वाज-सनेयिभिः स्पष्टमेवाम्नाताः—'तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवताक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इति। 'स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुतः' इति। 'तमच्छौद्रं वर्णमसृजत पूषणम्' इति। एवमादित्यो वै दैवं क्षत्रमित्यादिकमुदाहार्यम्। एवं सति देवेषु विशो वैश्यजातिरूपाः प्रजा मरुदादयो याः सन्ति ता अस्मिन् यागे कल्पयितव्याः सम्पादयितव्याः'। इति सायणः. ‡ 'कल्पयितव्याः अङ्गीकर्तव्याः' इति गोविन्दस्वामी. 'कल्पयितव्याः सेवायाः सन्निधापयितव्याः' इति भट्टभास्करः. § पा॰ सू॰ १-४-८४. ¶ पा॰ सू॰ २-३-८.

॥ कल्पते यज्ञोऽपि तस्यै जनतायै कल्पते यत्रैवं विद्वान् होता भवति ॥

उक्तार्थम् ॥

॥ * 'स्वस्ति नः पथ्यासु धन्वस्वि'त्यन्वाह ॥

अनुवाक्यां ब्रूयात् पथ्यायाः स्वस्तेः ॥

॥ स्वस्त्यप्सु वृजने स्वर्वति स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातनेति ॥

मरुच्छन्दप्रदर्शनार्थः पाठः । सांहितः कम्प ऐकश्रुत्ये नास्ति । अर्थस्तु—हे मरुतः नः अस्मभ्यं † पथ्यासु गृहेषु स्वस्ति अविनाशं दधातन धत्त प्रयच्छत । राये धनाय । धन्वसु मरुषु निर्जलदेशेषु । अप्सु जलेषु । ‡ वृजने युद्धे । स्वर्वति । स्वरिति[1] सर्वस्य नाम[2] । अश्वादिसर्वोपकरणवति । पुत्रकृथेषु योनिषु । कृञोऽधिकरणे क्थन् । पुत्रोत्पत्त्यर्थेष्विति ॥

॥ मरुतो वै देवानां विशः ॥

सेनाः विशः ॥

॥ त एवैतद्यज्ञमुखेऽचीकॢपत् ॥

---

१. 'सुवरिति' क. पाठः. २. 'सर्वनाम' ग. पाठः.

---

* ऋक्सं० ८-२-५-५. † 'पथ्यासु मार्गेषु' इति सायणगोविन्दस्वामिनौ. ‡ 'वृजने वर्जिते जलशून्ये स्वर्वति स्वर्गयुक्ते मार्गे' इति सायणः. 'जलवर्जिते देशे स्वर्गसाधनभूतेष्वपि मार्गेषु' इति गोविन्दस्वामी.

एतद् वदन् देवसेना यज्ञादौ पूजयत्ययम् ।
अचीक्लृपत् । *"णौ चङ्युपधाया ह्रस्वः' । †"उरत्' ॥

अत्र,

॥ सर्वैश्छन्दोभिर्यजेदित्याहुः ॥

ब्रह्मवादिनः ॥

कुतः,

॥ सर्वैर्वै छन्दोभिरिष्ट्वा देवाः स्वर्गं लोकमजयन् ॥

स्वर्गं पुरा सुराः सर्वे छन्दोयागेन[1] चाप्नुवन् ॥

ततश्च,

॥ तथैवैतद् यजमानः सर्वैश्छन्दोभिरिष्ट्वा स्वर्गं लोकं जयति ॥

एतद् एतर्हि । अस्मिन्नपि काले ॥

कथं,

॥ ‡"स्वस्ति नः पथ्यासु धन्वसु' §"स्वस्तिरिद्धि प्रपथे श्रेष्ठे'ति पथ्यायाः स्वस्तेस्त्रिष्टुभौ ॥

आद्यानुवाक्यायो याज्येत्येवं सर्वत्र गृह्यताम् ।
एकादशाक्षरत्वं तु पादानां व्यूहनादिह ॥

---

१. 'योगेन' ब. पाठः.

---

* पा० सू० ७-४-१. † पा० सू० ७-४-६६. ‡ ऋक्सं० ८-२-५-५. § ऋक्सं० ८-२-५-६.

॥ [*]'अग्ने नय सुपथा राये अस्मान्' [†]'आदेवानामपि[1] पन्थामगन्मे'त्यग्नेस्त्रिष्टुभौ। [‡]'त्वं सोम प्रचिकितो मनीषा' [§]'या ते धामानि दिवि या पृथिव्यामि'ति सोमस्य त्रिष्टुभौ। [¶]'आ विश्वदेवं सत्पतिं' [§]'य इमा विश्वा जातानी'ति सवितुर्गायत्र्यौ। [‡]'सुत्रामाणं पृथिवीं द्यामनेहसं' [*]'महीमूषु मातरं सुव्रतानामि'त्यदितेर्जगत्यौ ॥

महीमूषु खैलिकीयं सूत्रकारेण पठ्यते ॥

॥ एतानि वाव सर्वाणि छन्दांसि गायत्रं त्रैष्टुभं जागतम् ॥

गायत्र्येव गायत्रम्। स्वार्थेऽण्[2]। एवं त्रैष्टुभं जागतं च ॥

ननु त्रीणि खलूक्तानि छन्दांस्यन्यानि सन्ति च।
कथं स्यात् त्रिषु सर्वत्वमत उत्तरमुच्यते—

॥ अन्वन्यानि ॥

कर्मप्रवचनीयोऽनु हीन इत्येव तेन हि।
अन्यच्छन्दांसि हीनानि प्रधानं त्रितयं त्विदम् ॥

कथम्,

॥ एतानि हि यज्ञे प्रतमामिव क्रियन्ते ॥

---

१. 'आदेवानामनु', २. 'स्वार्थिकोऽण्' ख. पाठः.

---

[*] ऋक्सं० २-५-१०-१, [†] ऋक्सं० ७-५-३०-३, [‡] ऋक्सं० १-६-१६-१, [§] ऋक्सं० १-६-१९-४, [¶] ऋक्सं० ४-४-२६-२, [§] ऋक्सं० ४-४-२६-४, [‡] ऋक्सं० ८-२-४-५, [*] आ० श्रौ० २-१-२.

प्रक्रियन्तेत्वमाम् । एतत् त्रिकं[1] यज्ञेषु बहुलं प्रयुज्यते । अन्यत्र क्वचित् किञ्चिदित्यर्थः ॥

ततश्च,

॥ एतैर्ह वा अस्यच्छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति ॥

अस्य अनेन यजमानेन ॥

॥ य एवं वेद ॥

तेनापि[2] ॥

तृतीयः खण्डः ।

---

पुनः स्तौति—

॥ ता वा एताः प्रवत्यो नेतृमत्यः पथिमत्यः स्वस्तिमत्य एतस्य हविषो याज्यानुवाक्याः ॥

एताः स्वस्ति न इत्याद्या ऋचः । प्रपथे प्रचिकितः सुप्रणीतिम् प्रच सु यातीति प्रशब्दवत्यः । अग्ने नय अनुनेषीति नेतृमत्यः । प्रपथे अपि पन्थाम् सुपथेति पथिश्छन्दवत्यः । स्वस्ति नः पथ्यासु[3] धन्वस्वित्यादि पञ्च स्वस्तिशब्दवत्यः । एतस्य हविषः । आग्नो रुत्म् ॥

चतुर्णामाज्यहविषां[4] चरोः पञ्चमकस्य च ।
प्रादियोगो दुर्लभोऽत्र लब्धः कर्मसमृद्धये ॥

॥ एताभिर्वा इष्ट्वा देवाः स्वर्गं लोकमजयन् ॥

अनुवाक्या अनूच्य प्राग् याज्यादिभिरिष्ट्वा स्वर्गं लोकमजयन् ॥

---

१. 'त्रितयं', २. 'तेनापि । ता वा' घ. पाठः. ३. 'पथ्यास्वित्यादि', ४. 'हविषां तु चरोः पञ्चमस्य च' क. पाठः.

॥ तथैवैतद् यजमान एताभिरिष्ट्वा स्वर्गं लोकं जयति ॥

एतद् एतर्हि ॥

अयमपरो लाभ इत्याह—

॥ तासु पदमस्ति स्वस्ति राये मरुतो दधातनेति ॥

पदं पादः ॥

ततः किं,

॥ मरुतो ह वै देवविशोऽन्तरिक्षभाजनाः ॥

विशः सेनाः । भाजनं स्थानम् ॥

ततोऽपि किं,

॥ तेभ्यो ह योऽनिवेद्य स्वर्गं लोकमेतीश्वरा हैनं नि वा रोद्धोर्वि वा मथितोः ॥

यः यजमानः तेभ्यः मरुद्भ्यः अनिवेद्य अज्ञापयित्वात्मानं स्वर्गमेति । एनमनिवेद्य गन्तारं निरोद्धुं विमथितुं वा मरुतः ईश्वराः समर्थाः स्युः । *'ईश्वरे तोसुन्कसुनौ' तुमर्थे ।

गतिभङ्गो निरोधः स्यान्मथनं देहताडनम्[1] ॥

एवमनिवेदने दोषे सति,

१. 'देहबाधनम्' ग. पाठः

* पा० सू० ३-४-१३.

स यदाह स्वस्ति राये मरुतो दधातनेति तं मरुद्भ्यो देवविड्भ्यो यजमानं निवेदयति ॥

आहेति यत् तेन वचनेन तं यजमानम् ॥

ततस्तेन,

॥ न ह वा एनं मरुतो देवविशः स्वर्गं लोकं यन्तं निरुन्धते न विमथ्नते ॥

यन्तं गच्छन्तम् । एनं यजमानम् । रुन्धेः (झल् ?) *'श्नसोरल्लोपः'। मथेः †'श्नाभ्यस्तयोरातः'॥

किञ्च,

॥ स्वस्ति हैनमत्यर्जन्ति स्वर्गं लोकमभि ॥

‡अति सुष्ठु । अर्जन्ति गमयन्ति । अभि प्रति ॥

॥ य एवं वेद ॥

तमपि ॥

अथ स्विष्टकृतो याज्यानुवाक्ये आह—

॥ विराजावेतस्य हविषः स्विष्टकृतः संयाज्ये स्याताम् ॥

संयाज्ये विराजाविति सर्वत्र स्विष्टकृदच उच्यते ॥

के ते विराजौ,

॥ ये त्रयस्त्रिंशदक्षरे ॥

ते स्याताम् ॥

---

* पा० सू० ६-४-१११. † पा० सू० ६-४-११२. ‡ 'अतिशब्दः क्षिप्रार्थे, क्षिप्रं प्रापयन्ति' इति भट्टभास्करः.

पुनरपि के ते,

॥ *'सेदग्निरग्नीँरत्यस्त्वन्यान्' †'सेदग्निर्यो वनुष्यतो निपाती'त्येते ॥

ऋचौ। सेदग्निरित्यनूच्य जुषतां हविरग्ने सेदग्निर्य इति यजेत् ॥

विराजौ स्तौति—

॥ विराड्भ्यां वा इष्ट्वा देवाः स्वर्गं लोकमजयन् ॥

वै पुरा ॥

॥ तथैवैतद् यजमानो विराड्भ्यामिष्ट्वा स्वर्गं लोकं जयति ॥

एतद् एतर्हि ॥

विराजावक्षरसंख्यया स्तौति—

॥ ते त्रयस्त्रिंशदक्षरे भवतः ॥

ततः किं,

॥ त्रयस्त्रिंशद् वै देवाः ॥

कथम्,

॥ अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च ॥

---

* ऋक्सं० ५-१-२५-८. † ऋक्सं० ५-१-२५-५.

"*"वषट्कार इन्द्र इति प्राहुर्वाजसनेयिनः †
[1]वस्वादयश्च कथिता भारतेऽर्जुनजन्मनि ॥
धरो ध्रुवश्च[1] सोमश्च आपश्चानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवश्चावतस्थिरे ॥
मृगव्याधश्च शर्वश्च निर्ऋतिश्च महायशाः ।
अजैकपादहिर्बुध्निः पिनाकी च परन्तप ॥
भवनोऽथेश्वरश्चैव कापाली च विशां पते ।
स्थाणुर्भगश्च भगवान् रुद्रास्तत्रावतस्थिरे ॥
धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ॥
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ।
इत्येते द्वादशादित्या ज्वलन्तः सूर्यवर्चसः ।
महिमानं पाण्डवस्य कुर्वन्तस्तस्थुरम्बरे" ॥ इति ॥

ततश्च विराड्भ्यां यजन् ,

॥ तद् प्रथमे यज्ञमुखे देवता अक्षरभाजः करोति ॥

तद् तत्र। प्रथमे प्रवरे उत्कृष्टे[2]। 'प्रथमौ प्रवरादिमौ' इति निघण्टुः‡। अक्षरभाजः । §'भजो ण्विः'। त्रयस्त्रिंशतापि देवता एकैकाक्षरयुक्ताः करोति ॥

---

१. 'ध्रुवश्चेत्यादिना । ततश्च विराड्भ्यां', २. 'उत्कृष्टे । अक्षरभाजः ख. पाठः.

---

* 'वषट्कारो देवताविशेषः' इति सायणः † आदिपर्व-अध्या॰ ११४ श्लो॰ ५५–५८. (Poona edition) वसूनां नामनिर्देशो मुद्रितपुस्तकेषु यद्यपि नोपलभ्यते, तथाप्यस्मदधिकरणसङ्गृहीतेषु देवनागराक्षरमिश्रकेरलीयलिपिग्रन्थेषु दृश्यते. ‡ वैजयन्ती (अव्ययकाण्डे अर्थवाक्षिताध्याये श्लो॰ १७.) § पा॰ सू॰ ३-२-६२.

व्याचष्टे—

॥ अक्षरेणाक्षरेणैव तद् देवतां प्रीणाति[1] ॥

प्रीणाति तर्पयति होता ॥

स्पष्टयति—

॥ देवपात्रेणैव तद् देवतास्तर्पयति ॥

तत् तेन ऋग्द्वयेन। *देवपात्रेण। पिबतेः करणे ष्ट्रन्। पानहेतुभूतेन ॥

चतुर्थः खण्डः।

---

॥ †प्रयाजवदननुयाजं कर्तव्यं प्रायणीयमित्याहुः ॥

प्रायणीयाख्यकर्मेदं प्रयाजैः पञ्चभिर्युतम्।
त्रिभिस्त्वक्तमनूयाजैः स्यादित्याहुस्तु केचन ॥

प्रयाजान्मतुपो वत्वम् ॥

तेषामननुयाजत्वे हेतुरयमित्याह—

॥ हीनमिव वा एतदीङ्क्षितमिव यत् प्रायणीयस्यानु-
याजा इति ॥

---

1. 'प्रीणाति। तद् तां प्रीणाति' क. पाठः

---

* 'देवयोग्यं स्थानं देवपात्रम्। तेनैव देवताः सर्वा अपि तर्पयति योग्यस्थान-लाभेनैव तृप्ताः करोति' इति भट्टभास्करः. 'देवानां पात्रं फलमैकैकमक्षरं तेनैव पात्रेण' इति सायणः. † 'ब्रह्मवादिनो वदन्ति प्रयाजवदननूयाजं प्रायणीयं कार्यमनूयाजवद-प्रयाजमुदयनीयम्' इति तै॰ सं॰ ६-१-५

यत् ये। *ईङ्कितं विलम्बनम्। भावे क्तः। हीनम्। ओ हा(क्) त्यागे। †'आशंसायां भूतवच्च' इति क्तः। इव खलु। आरिप्सितस्य सोमस्य विलम्बनरूपत्वात् प्रायणीयेऽनुयाजा (न) होतव्या इत्यर्थः॥

एतन्मतं दूषयति—

॥ तत् तन्नादृत्यम् ॥

उक्तार्थम्॥

॥ प्रयाजवदेवानुयाजवत् कर्तव्यम् ॥

प्रायणीयमित्येव। एव यतः[1]॥

कुतः,

॥ प्राणा वै प्रयाजाः ॥

‡प्रशब्दवत्त्वसामर्थ्यात्॥

॥ प्रजानुयाजाः ॥

प्रजाया अनुयाजत्वं पितरमनुजात इति वर्णव्यत्यासेन निर्वचनात्॥

तत्र,

॥ §यत् प्रयाजानन्तरियात् प्राणांस्तद् यजमानस्यान्तरियात् ॥

अन्तरयस्त्यागः। यत् यदि। तत् तेन॥

॥ यदनुयाजानन्तरियात् प्रजां तद् यजमानस्यान्तरियात् ॥

---

१. 'यथा' घ. पाठः.

---

* 'हीनं तुच्छम् ईङ्कितं चलितम्। यदा अनूयाजा अपि क्रियन्ते तदा खल्वग्निष्टोमाख्यं प्रधानकर्म विलम्बितानुष्ठानमभवत्। हीनमिव भवति। तुच्छं प्रधानकर्म यद् गुणकर्मसु विस्तारः क्रियते इत्येव हीनमिव मन्तव्यम्। तथा चलितं न्यूनं प्रधानकर्म यत् तद्धित्वा गुणकर्मसु श्रद्धां कुर्वन्ति इत्येव चलितमिव मन्तव्यम्' इति भट्टभास्करः. † पा॰ सू॰ ३-३-१३२. ‡ 'प्राणस्थानीयाः प्रयाजाः पाद्यत्वान्वयाद्' इति भट्टभास्करः. § 'तत्तथा न कार्यमात्मा वै प्रयाजाः प्रजानूयाजा यत् प्रयाजानन्तरियादात्मानमन्तरियाद् यदनुयाजानन्तरियात् प्रजामन्तरियात्' इति तै॰ सं॰ ६-१-५.

यत् यदि । तत् तेन ॥

निगमयति—

॥ [*]तस्मात् प्रयाजवदेवानुयाजवत् कर्तव्यम् ॥

एव यथा । प्रयाजवत्त्ववदनुयाजवत्त्वमप्यादरणीयमित्यर्थः ॥

तर्ह्यविलम्बः कथमित्याह—

॥ [†]पत्नीर्न संयाजयेत् ॥

पत्नीसंयाजं न कुर्यात् । तेनाविलम्बो भवतीत्यर्थः ॥

किञ्च,

॥ [‡]संस्थितयजुर्न जुहुयात् । तावतैव यज्ञोऽसंस्थितः ॥

संस्थितयजुर्नामाध्वर्यूणां प्रसिद्धम् । (संस्थितयजुः ?) । तावता संस्थितयजुरकरणेन यज्ञः असंस्थितः असमाप्त एव स्यात्[1] ॥

किञ्च,

॥ [§]प्रायणीयस्य निष्कासं निदध्यात् तमुदयनीयेनाभि निर्वपेत् ॥

स्थाल्यां लग्नः पुलाको निष्कासः । उदयनीयेन । कुर्यर्थे टा । उदयनीये कर्मणि । तमभि तस्य निष्कासस्योपरि निर्वपेत् ॥

---

१. 'स्यात् प्रायणीयस्य' प पाठः

---

[*] 'प्रयाजवदेवानूयाजवत् प्रायणीयं कार्यम् । प्रयाजवदनूयाजवदुदयनीयं नात्मानमन्तरेति न प्रजां न यज्ञः पराभवति न यजमानः' तै॰ सं॰ ६-१-५. [†] 'पत्नीस्तु न संयाजयेत्' आप॰ श्रौ॰ सू॰ १०-२१-१४. पत्नीसंयाजमन्त्राश्च— 'आप्यायस्व समेतु ते सन्ते पयांसि समुयन्तु वाजा इह त्वष्टारमग्रियं तन्नस्तुरीपमध पोषयित्नु देवानां पत्नीरुशतीरवन्तु न इति ह्वे अग्निर्होता गृहपतिः स राजा हव्यवाडग्निरजरः पिता न इति पत्नीसंयाजाः' आ॰ श्रौ॰ सू॰ १-१०-५. [‡] 'संस्थितयजुर्न जुहुयादिति । समिष्टयजुर्होमो न कर्तव्य इत्यर्थः' इति भट्टभास्करः. 'यज्ञस्य समिष्ट्यर्थानि यागहोमाः 'धाता रातिः' इत्याद्याः समिष्टयजूंषि' इति च भट्टभास्करीयतैत्तिरीयसंहिताव्याख्या ६-१-२. [§] 'प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपति सैव सा यज्ञस्य सन्ततिः' तै॰ सं॰ ६-१-५.

किमर्थं,

॥ यज्ञस्य संतत्यै ॥

व्याचष्टे—

॥ यज्ञस्याव्यवच्छेदाय ॥

॥ *अथोखलु यस्यामेव स्थाल्यां प्रायणीयं निर्वपेत् तस्यामुदयनीयं निर्वपेत् । तावतैव यज्ञः सन्ततो-ऽव्यवच्छिन्नो भवति ॥

अथोखलु अथवेत्यर्थः । एवेति निष्कासोपरि निर्वापनिवृत्त्यर्थम् । तावतैव निर्निष्कासप्रायणीयस्थालीयोगेनैव ॥

अथ किञ्चिन्मतमुपक्षिपति—

॥ अमुष्मिन् वा एतेन लोके राध्नुवन्ति नास्मिन्नित्याहुर्यत् प्रायणीयमिति निर्वपन्ति प्रायणीयमिति चरन्ति प्रयन्त्ये-वास्माल्लोकाद् यजमाना इति ॥

उदयनीयमिति शेषः । यत् यदि । प्रायणीयमित्युदयनीयं क्रियते । †'सा प्रायणीयवोक्ता' इत्यतिदेशात् तद्बुद्ध्या क्रियत इत्यर्थः । तदा एतेन उदयनीयेन यजमाना अमुष्मिन् लोके राध्नुयुः नास्मिन् । प्रयन्ति प्रेता भवन्ति । अस्माल्लोकादिति स्फुरणात् । इत्युदयनीयस्य प्रायणीयसादृश्यं निन्द्यमिति केचिदाहुरित्यर्थः ॥

दूषयति—

॥ अविद्ययैव तदाहुः ॥

अज्ञानमविद्या ॥

---

* 'तस्यामेव स्थाल्यामनिष्कासितायां श्रपयति' आप० श्रौ० सू० १३-२३-२.
† आ० श्रौ० सू० ६-१४-२. 'प्रायणीयावदुदयनीया' आप० श्रौ० सू० १३-२३-१.

अयं विशेषस्तैर्न ज्ञात इत्याह—

॥ [*] व्यतिषजेद् याज्यानुवाक्याः ॥

व्यतिषङ्गो व्यत्यासः ॥

कथं,

॥ [†] याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः कुर्याद् या उदयनीयस्य पुरोनुवाक्यास्ताः प्रायणीयस्य याज्याः कुर्यात् ॥

व्यक्तम् ॥

॥ तद् व्यतिषजत्युभयोर्लोकयोर्ऋद्ध्या उभयोर्लोकयोः प्रतिष्ठित्यै ॥

च स्यादिति शेषः । व्यतिषजति यद् तल्लोकद्वये समृद्ध्यै प्रतिष्ठायै च स्यात् ॥

ततो यजमानः,

॥ उभयोर्लोकयोर्ऋध्नोत्युभयोर्लोकयोः प्रतितिष्ठति ॥

समृद्धः प्रतिष्ठितश्च स्यात् ॥

॥ प्रतितिष्ठति य एवं वेद ॥

सोऽपि ॥

---

* 'विपरीताश्च याज्यानुवाक्याः' आ० श्रौ० सू० ६-१४-४. † 'याः प्रायणीयस्य याज्या यत्ता उदयनीयस्य याज्याः कुर्यात् पराङमुं लोकमारोहेत् प्रमायुकः स्याद् याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः करोत्यस्मिन्नेव लोके प्रतितिष्ठति' तै० सं० ६-१-५.

किञ्च,

॥ आदित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयो यज्ञस्य धृत्यै यज्ञस्य बर्सनद्ध्यै यज्ञस्याप्रस्रंसाय ॥

धृतिर्धारणम् । *बर्सो मणिबन्धः । नद्धिर्नहनम् । प्रस्रंसः स्रंसनम् । †अदितेर्ण्यः । यज्ञस्याद्यन्तयोरादित्यचरुकरणमेवमर्थं भवति ॥

अत्र दृष्टान्तमाह—

॥ तद् यथैवाद इति ह स्माह[1] ॥

तद् उक्तमर्थरूपम् । अदो वक्ष्यमाणम् । यथेत्याह स्म उक्तवान् । वक्तृनुक्तौ तु सर्वत्र स्वयं महिदासैतरेय एव वक्तेत्याह ॥

किं तदद इत्याह—

॥ तेजन्या उभयतोऽन्तयोरप्रस्रंसाय बर्सौ नह्यत्येवमेवैतद् यज्ञस्योभयतोऽन्तयोरप्रस्रंसाय बर्सौ नह्यति यदादित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयः ॥

‡तेजनी यष्टिः ।

आद्यन्तयन्धो बर्सः स्याद् रज्जुयष्टिसमाश्रयः ।
उभयतः अप्रस्रंसायाशिथिलत्वाय नह्यति बध्नाति[2] ॥

---

१. 'स्माह उक्तमर्थरूपम्', २. 'बध्नाति पश्यमैवेतः' घ. पाठः,

---

* 'बर्सेन बन्धनेन रज्ज्वादिना नार्द्धिः बर्सनार्द्धिः । यथा वंशादिकं रज्ज्वादिनो-भयोरन्तयोर्बध्यते एवमेकया देवतया उभयोरन्तयोर्यज्ञो बध्यते' इति भट्टभास्करः. 'बर्सो बन्धनविशेषः बन्धनविशेषनह्नाय' इति गोविन्दस्वामी. † पा० सू० ४-१-८५.
‡ 'तेजनी नाम रज्जुविशेषः' इति भट्टभास्करादयः.

**किञ्च,**

**॥ पथ्ययैवेतः स्वस्त्या प्रयन्ति पथ्यां स्वस्तिमभ्युद्यन्ति ॥**

प्रयन्ति आरभन्ते । उद्यन्ति समाप्तिं गच्छन्ति । अभि प्रति । प्रायणीयेष्टावादौ *पथ्यास्वस्तिरग्निः सोमः सवितादितिरिति । †उदयनीयेष्टावाज्यहविषामन्ते अग्निः सोमः सविता पथ्यास्वस्तिरदितिरिति । ‡इतः । आमर्थे तसिल् । एषाम् आज्यहविषाम् ॥

**ततश्च,**

**॥ स्वस्त्येवेतः प्रयन्ति स्वस्त्युद्यन्ति स्वस्त्युद्यन्ति ॥**

§इतः । जसस्तसिल् । एते । स्वस्तीत्यविनाशनाम ।

निर्नाशमेवारभन्ते समाप्तिं यान्ति वै तथा[1] ।

द्विरुक्तिरुक्तार्था ॥

पञ्चमः खण्डः ।

इति षड्गुरुशिष्यविरचितायां सुखप्रदायां वृत्तौ ऐतरेयब्राह्मणवृत्तौ
सुखप्रदायां द्वितीयोऽध्यायः[2] ॥



१. 'यथा', २. 'इति षड्गुरुशिष्येण विरचितायां ब्राह्मणव्याख्यायां द्वितीयोऽध्यायः' ब. पाठः.

* आ० श्रौ० सू० ४-३-२. † 'पथ्यास्वस्तिरिह्योत्तमाज्यहविषाम्' आ० श्रौ० सू० ६-१४-३. 'तथैव देवीष्वग्निमाज्यभागानां प्रथमं यजति पथ्यां स्वस्तिमुत्तमाम्' आप० श्रौ० सू० १३-२३-४. ‡ 'इतो लोकात्' इति भट्टभास्करगोविन्दस्वामिनौ. § 'इतः अस्मिन् कर्मणि' इति सायणः.

# अथ तृतीयोऽध्यायः ।

द्वितीये प्रायणीयोक्ता सहैवोदयनीयया ।
सोमक्रयविधानार्थमितिहासं ब्रवीत्यथ—

॥ प्राच्यां वै दिशि देवाः सोमं राजानमक्रीणन् ॥

अक्रीणन् स्वीकृतवन्तः । वै पुरा ॥

॥ तस्मात् प्राच्यां दिशि क्रीयते ॥

ऋत्विग्भिः ॥

॥ तं त्रयोदशान्मासादक्रीणन् ॥

देवाः । त्रयोदशो [1] मासोऽधिकमासः, तस्माद् विक्रेतुः* । तत्सकाशादित्यर्थः ॥

॥ तस्मात् त्रयोदशो मासो नानुविद्यते ॥

†सोमविक्रयित्वात् स नोपलभ्यत इत्यर्थः । वेत्तेः कर्मणि लट् । विद्यतेर्वा कर्तरि ।

---

१. 'त्रयोदशोऽधिक' ख. पाठः.

---

* 'त्रयोदशान्मासाद् विक्रेतुर्भूतात्' इति गोविन्दस्वामी. † 'पुरा संवत्सरस्य त्रयोदश मासाः सन्ति नेदानीम् । देवास्त्रयोदशस्य मासस्याभिमानिनः पुरुषात् तं सोमं क्रीतवन्तः । यस्मात् तदभिमानी पुरुषः सोमविक्रयी तस्माल्लोके तदीयत्रयोदशमासो नानुविद्यते शुभकर्मानुकूलो नास्ति । मेषादिसङ्क्रान्त्यादिरहितत्वाद् मलमास इत्यभिप्रेत्य तस्मिन् मासे शिष्टाः शुभकर्माणि वर्जयन्ति' इति सायणः. 'यद्यपि विद्यते शरीरं सोमविक्रयिणः, तथाप्युपपातकित्वाद् धर्मतो न विद्यते इत्युच्यते' इति गोविन्दस्वामी.

स्पष्टयति—

॥ न[1] वै सोमविक्रय्यनुविद्यते ॥

*'कर्मणीनि विक्रियः' इति कुत्सायामिनिः ॥

तस्मात्,

॥ पापो हि सोमविक्रयी ॥

†सोमविक्रयस्य पापत्वात् तत्कारिणो[2] नाशो युक्त एवेत्यर्थः ॥

॥ तस्य क्रीतस्य मनुष्यानभ्युपावर्तमानस्य दिशो वीर्याणीन्द्रियाणि व्युदसीदन् ॥

तस्य मनुष्यानुपावर्तमानस्य[3] प्राप्नुवतः । दिशः अभि दिक्षु । वीर्यं शौर्यम् । इन्द्रियं बलम् । व्युत्सादो विक्षेपः, विशीर्णता ॥

ततो देवाः,

॥ तान्येकयर्चाऽवारुरुत्सन्त ॥

तानि वीर्येन्द्रियाणि । अवारुरुत्सन्त । अवरोद्धुं प्राप्तुमैच्छन् । रुधेः सनि ‡'हलन्ताच्च' इति कित्त्वम् ॥

॥ तानि नाशक्नुवन् ॥

एकयर्चा प्राप्तुमिति शेषः ॥

---

१. 'न सोम', २. 'तत्कारिणे', ३. मनुष्यानभ्युपावर्तमानस्य' प. पाठः.

---

* पा० सू० ३-२-९३. † सोमविक्रयिणः पापरूपत्वे तैत्तिरीयसंहिता—'अस्मै ज्योतिः सोमविक्रयिणि तम इत्याह ज्योतिरेव यजमाने दधाति । तमसा सोमविक्रयिणमर्पयति' ६-१-१०. ‡ पा० सू० १-२-१०.

॥ तानि द्वाभ्याम् ॥

अवारुरुत्सन्तेत्येव । तानि नाशक्नुवन्निति च । एवमुत्तरत्रापि ॥

॥ तानि तिसृभिस्तानि चतसृभिस्तानि पञ्चभिस्तानि षड्भिस्तानि सप्तभिर्नैवावारुन्धत ॥

सप्तभिरपि नैवावारुन्धत प्राप्तवन्तः ॥

॥ तान्यष्टाभिरवारुन्धत ॥

ऋग्भिः ॥

॥ अष्टाभिराश्नुवत ॥

अन्वभवन् ॥

॥ यदष्टाभिरवारुन्धताष्टाभिराश्नुवत तदष्टानामष्टत्वम् ॥

अश्नोतेस्तनि कृतेऽष्टनशब्द इत्यर्थः ॥

॥ अश्नुते यद्यत् कामयते य एवं वेद ॥

अष्टनशब्दनिरुक्तं यो वेद[1] स तदनुभवति यद्यदिच्छतीत्यर्थः ॥

॥ तस्मादेतेषु कर्मस्वष्टावष्टावनूच्यन्त इन्द्रियाणां वीर्याणामवरुद्ध्यै ॥

एतेषु राजक्रयादिषु ॥

प्रथमः खण्डः ।

---

१. 'य एवं वेद' ख. पाठः

॥ सोमाय क्रीताय प्रोह्यमाणायानुब्रूहीत्याहाध्वर्युः ॥

लोट् कर्मणि वहेराने मुग्[*] यजादेः प्रसारणम्[†] ॥
तादर्थ्ये ङे प्रोह्यमाणमभिधातुं वदेतिह ।
अध्वर्युः प्रेषयत्यत्र होतारं प्रेषितः स च ॥

॥ [‡]भद्रादभि श्रेयः प्रेहीत्यन्वाह ॥

सूत्रे पठितेयम्[§] ॥

व्याचष्टे—

॥ [¶]अयं वाव लोको भद्रः ॥

भजनीयत्वात् ॥

॥ तस्मादसावेव लोकः श्रेयान् ॥

तस्माद् भूलोकादसौ द्युलोकः श्रेयान् प्रशस्यतरः ॥

ततश्च,

॥ स्वर्गमेव तल्लोकं यजमानं गमयति ॥

तत् तेन ॥

॥ बृहस्पतिः पुर एता ते अस्त्विति[1] ॥

---

1. 'अस्त्विति बृहतीं' घ. ङ. पाठः.

---

* पा० सू० ७-२-८२. † पा० सू० ६-१-१५. ‡ तै० सं० १-२-३. § आ० श्रौ० सू० ४-४-२. ¶ 'भद्राद् भजनीयाद्धविर्धानदेशात् श्रेयःसाधनभूतं प्राग्वंशदेशम् । अयं वाव लोक इति हविर्धानदेशः । तस्माद्धविर्धानादसावेव प्राग्वंशदेशः श्रेयान्' इति गोविन्दस्वामी.

व्याचष्टे—

॥ ब्रह्म वै बृहस्पतिः ॥

'बृहतां देवानां पतिः । †'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च'[1] । ब्रह्म वेदः ।

'ब्रह्मा रुद्रेन्द्रभृग्वादिविप्रर्त्विग्यज्ञधातृषु ।
पन्ने के[2] क्ली तु वेदेऽन्ने स्वाध्यात्मात्मतपस्सु च' ॥

इति हि निखण्टुः‡ ।

॥ §ब्रह्मैवास्मा एतत् पुरोगवमकः ॥

अस्मै अस्य सोमस्य । पुरोगवं पुरोगन्तृ । अकः । कृञो ॑'मन्त्रे घस—' इति च्लेर्लुक् । अकार्षीत् । ¶'गमेर्डोः' गौर्गन्ता । ‖'गोरतद्धितलुकि' इति टच्[3] ।

॥ न वै ब्रह्मण्वद् रिष्यति ॥

मतुप् । $'अनो नुट्' । ❋ब्रह्मसहितं न रिष्यति न नश्यति ॥

॥ अथेमवस्य वर आ पृथिव्या इति ॥

व्याचष्टे—

॥ देवयजनं वै वरं पृथिव्यै ॥

पृथिव्याः वरमुत्कृष्टम् ॥

---

१. 'तलोपश्च । ब्रह्म वै बृहस्पतिः । ब्रह्म वेदः । ब्रह्मैवास्मा' घ. क. पाठः. २. 'अकेऽस्रौ' मुद्रितपाठः. ३. 'टच् । कृतः । नवै' क. पाठः.

---

* 'बृहस्पतेर्ब्रह्मत्वं ब्राह्मणजातिमत्त्वं च 'ब्रह्म वै देवानां बृहस्पतिः' (तै० सं० ६-१-८.) इत्यादि श्रुत्यन्तरे प्रसिद्धम्' इति सायणः. † पा० सू० ग० ६-१-१५७. ‡ वैजयन्ती (पुष्करकाण्डे नानालिङ्गाध्याये श्लो० ५३). § 'ब्रह्मैव ब्राह्मणमेव' इति सायणः. ॑ पा० सू० २-४-८०. ¶ उणादिसू० २-७०. ‖ पा० सू० ५-४-९२. $ पा० सू० ८-२-१६. ❋ 'ब्रह्मण्वद् ब्राह्मणसद्भावोपेतम्' इति सायणः.

॥ देवयजन एवैनं तदवसाययति ॥

तत् तत्र । एनं सोमम् । देवयजने अवसाययति उपवेशयति । *'शाच्छासा—' इति स्यतेर्णौ युक् ॥

॥ आरे शत्रून् कृणुहि सर्ववीर इति ॥

व्याचष्टे—

॥ द्विषन्तमेवास्मै तत् पाप्मानं भ्रातृव्यमपबाधते ॥

द्विषन् द्वेषयुक्तः । भ्रातृव्यः शत्रुः । पाप्मा पापम् । अस्मै अस्य । तत् तत्र । अपबाधते हिनस्ति ॥

स्पष्टयति—

॥ अधरं पादयति ॥

त्वलोपः । अधरत्वं निकृष्टतां गमयेत् । पदेर्णिचो लिङो लट् ॥

॥ †सोम यास्ते मयोभुव इति तृचं सौम्यं गायत्रमन्वाह सोमे राजनि प्रोह्यमाणे ॥

प्रवेश्यमाने ॥

॥ स्वयैवैनं तद् देवतया स्वेन छन्दसा समर्धयति ॥

तत् तत्र ।

प्राग् ‡'गायत्रमग्नेश्छन्द' इत्यवोचाम यद्यपि ।

---

* पा० सू० ७-३-३७. † ऋक्सं० १-६-२०-४. ‡ ऐ० ब्रा० १-१.

*तृचोऽयं सोमदेवत्य इति स्वच्छन्द उच्यते ॥

तत्र,

॥ †सर्वे नन्दन्ति यशसागतेनेत्यन्वाह ॥

'यज्ज्योतिरजरं[1] ब्रह्म यद्योगात् समुपाश्नुते ।
तज्ज्ञानमभितुष्टाव सूक्तेनाथ बृहस्पतिः' ॥

इति देवतानुक्रमण्याम्‡ । 'बृहस्पते बृहस्पतिर्ज्ञानं तुष्टाव' इति सर्वानुक्रमण्यां च§ ॥

ज्ञानस्तुतिभूतामृचं सोमे योजयति—

॥ यशो वै सोमो राजा ॥

यशस्करत्वात् ॥

उपपादयति—

॥ सर्वो ह वा एतेन क्रीयमाणेन नन्दति यश्च यज्ञे लप्स्यमानो भवति यश्च न ॥

¶लप्स्यमानो यज्ञार्हस्त्रैवर्णिकः । शूद्रादिरयज्ञार्हो यश्च नेत्युक्तः ॥

॥ सभासाहेन सख्या सखाय इति ॥

---

१. 'यद्योनिरजरं', प. ह. पाठः. 'यज्ज्योतिरमृतं' मुद्रितपाठः.

---

* तथाचानुक्रमणी—'त्वं सोम त्र्यधिका सौम्यं पावमन्यादि गायत्र्यो द्वादश्योष्णिक् च' (म० १. सू० ९१) इति. 'अत्र नीयमानद्रव्यविशेषः सोमः मन्त्रदेवताप्यसावेव तस्मात् स्वात्मरूपत्वम् । गायत्री द्युलोकात् सोममानीतवतीति तैत्तिरीयाः 'कद्रूश्च'अनुवाके (तै० सं० ६-१-६) समामनन्ति तस्माच्छन्दसः स्वकीयत्वम्' इति सायणः. † ऋक्सं० ८-२-२४-५. ‡ बृहद्देवता अध्या० ७, श्लो० १०५. (Asiatic Society, Bengal). § म० १०. सू० ७१. ¶ 'यः पुमान् ऋत्विग् भूत्वा यज्ञे धनं लप्स्यते यश्च द्रष्टुमागतो न तु धनार्थी सर्वोऽप्यसौ' इति सायणः. 'यश्च यज्ञे भागं लभते देवतात्वेन कर्तृत्वेन वा यश्च न लभते स सर्वः' इति गोविन्दस्वामी.

व्याचष्टे—

॥ एष वै ब्राह्मणानां सभासाहः सखा यत् सोमो राजा ॥

यद् यः । सहिरभिभवे । *सभाया अभिभावकः ॥

॥ †किल्बिषस्पृदिति ॥

व्याचष्टे—

॥ एष उ एव किल्बिषस्पृत् ॥

उ खलु । एष सोमः । ‡स्पृणोतिः संश्लेषणार्थः । क्विपि तुक् ॥

किल्बिषात् पापतो भीतो यजमानोऽत्र किल्बिषम् ।
किल्बिषं किल्बिषमिति सदा कीर्तनयोगतः ॥

इत्याह—

॥ यो वै भवति यः श्रेष्ठतामश्नुते स किल्बिषं भवति ॥

भवतीति व्याचष्टे—श्रेष्ठतामश्नुते इति[1] । किल्बिषं किल्बिषशब्द-वाच्यत्वं भवति प्राप्नोति स यजमानः ॥

कुत एतत्,

॥ तस्मादाहुः ॥

तथाहि वदन्ति यजमानाः ॥

कथम्,

॥ मान्वोचो मा प्रचारीः किल्बिषं नु मा यातयन्निति ॥

§नु खलु ।

---

१. 'इति । किल्बिषशब्द' घ. ङ पाठः.

---

* 'सभासाहः सभार्हः' † 'किल्बिषस्पृक् किल्बिषी यजमानः विपरीतलक्षणया अकिल्बिषः । अरथः गड्डाख इतिवत् । तं स्पृशतीति सोमः किल्बिषस्पृक्' इति गोविन्दस्वामी. ‡ 'स्पृणोति पालयति' इति सायणः. § 'नु क्षिप्रम्' इति गोविन्दस्वामिसायणौ.

अध्वर्यो त्वं मा प्रचारीर्मो च त्वं होतरत्र माम् ।
किल्बिषं प्रापयन् वादीरनुवाक्यादिकं त्विति ॥

यातेर्णिजन्तात् प्रापणार्थात् शतृ । वचेः *'माङि लुङ्' । †'वच उम्' । चरेः ‡'वदव्रज'—इति सिचि वृद्धिः । किल्बिषशब्दवाच्यषड्योगात् सोमः किल्बिषस्पृदित्यर्थः ॥

॥ पितुषणिरिति ॥

व्याचष्टे—

॥ अन्नं वै पितु दक्षिणा वै पितु ॥

सनेः कर्तरि §'छन्दसि वनसन'—इतीन् । सुन्लोपश्छान्दसः (?) । पितुरित्यन्नदक्षिणयोर्वाचकः । सनिर्दाता ॥

॥ तामेनेन सनोति ॥

एनेन सोमेन सनोति लभते । तां दक्षिणाम् ॥

किञ्च,

॥ अन्नसनिमेवैनं तत् करोति ॥

अन्नस्य दातारम् । तत् तत्र । एनं सोमम् । करोति सम्पादयति ॥

॥ अरं हितो भवति वाजिनायेति ॥

तत्र च,

॥ इन्द्रियं वै वीर्यं वाजिनम् ॥

अरमलं पर्याप्तम् ॥

---

* पा० सू० ३-३-१७५. † पा० सू० ७-४-२०. ‡ पा० सू० ७-२-३. § पा० सू० ३-२-२७.

॥ आजरसं ह्यस्मै वाजिनं नापच्छिद्यते ॥

अस्मै इत्यर्थे ङे । अस्मिन् यजमाने । नापच्छिद्यते[1] । अपच्छेदो निवृत्तिः । सदा वर्तत इत्यर्थः । कियन्तं कालम् । आजरसम्[2] ।

जरया सहितं सर्वं कालमायुश्शताब्दिकम् ॥

जराया जरस्भावश्छान्दसः ॥

॥ य एवं वेद ॥

तस्मिन्नपि वेदितरि नापच्छिद्यते वाजिनम् ॥

॥ *आगन् देव इत्यन्वाह ॥

आभिरूप्यमाह—

॥ आगतो हि स तर्हि भवति ॥

†'मन्त्रे घसे'ति लुक् च्लेरद् मो न आगन्निरुच्यते ।

तर्हि तदानीम् ॥

॥ ऋतुभिर्वर्धतु क्षयमिति । ऋतवो वै सोमस्य राज्ञो ‡राजभ्रातरो यथा मनुष्यस्य ॥

राजेः पचाद्यच्§ । दीप्तः । राजाश्च ते भ्रातरश्चेति कर्मधारयः ॥

॥ तैरेवैनं तत् सहागमयति ॥

---

१. 'नापच्छिद्यते । अस्मिन् यजमाने आ' क. पाठः. २. 'आजरसं जरया' च. पाठः.

---

* ऋक्सं० ३-८-४-७. † पा० सू० २-४-८०. ‡ 'यथा लोके कस्यचिन्मनुष्यस्य भ्रातरोऽपि मनुष्यजातीयास्तथा राजजातीयस्य सोमस्य भ्रातरोऽपि राजजातीयाः' इति सायणः. § पा० सू० ३-१-१३४.

तत् तत्र । क्षयं गृहम् । वर्धतु अन्तर्णीतण्यर्थः । वर्धयतु । आगमयति होता ॥

॥ दधातु नः सविता सुप्रजामिषमित्याशिषमाशास्ते ॥

इष्टमर्थमर्थयत इत्यस्यार्थः सदेष्यताम् ।
पुत्रादिसहितं ह्यन्नं प्रेरको नो ददात्विति ॥

इत्यस्यार्थः ॥

॥ स नः क्षपाभिरहभिश्च जिन्वत्विति ॥

तत्र[1],

॥ अहानि वा अहानि ॥

नेदं व्याख्येयम् ॥

॥ रात्रयः क्षपाः ॥

दुर्ज्ञानार्थः क्षपाशब्दो रात्रिनामेति गृह्यताम् ॥

॥ अहोरात्रैरेवास्मा एतामाशिषमाशास्ते ॥

अस्मै अस्य । सुपो भिस् । अहोरात्रेषु ॥

प्रजावन्तं रयिमस्मे समिन्वत्वित्याशिषमेवाशास्ते ॥

एव पुनः ।

धनराशिं पुत्रयुक्तमस्मभ्यं संददातु[2] सः ।

इति वार्थः । इविर्जिवि(वि? श्व) दात्यर्थौ भ्वादी ॥

---

१. 'अत्र', २. 'सन्दधातु' प. क. पाठः.

॥ [*]या ते धामानि हविषा यजन्तीत्यन्वाह ॥

तत्र,

॥ ता ते विश्वा परिभूरस्तु यज्ञम्। गयस्फानः प्रतरणः सुवीर इति ॥

अस्ति। गयस्फानः प्रतरण[†] इति प्रदर्शनार्थः पाठः॥

व्याचष्टे—

॥ गवां नः स्फावयिता प्रतारयितैधीत्येव तदाह ॥

स्फावयिता वर्धयिता। प्रतारयिता। स्वार्थे णिच्। रक्षकः। एधि भव।

[‡]गयेत्यपत्यवचनो गवामित्यर्थ ईरितः।

यान्ति पुत्राः सुखं यस्माद् गोजातैः पयआदिभिः॥

॥ अवीरहा प्रचरा सोम दुर्यानिति[1] ॥

अत्र,

॥ गृहा वै दुर्याः[§] ॥

ततः किं,

॥ बिभ्यति वै सोमाद् राज्ञ आयतो यजमानस्य गृहाः॥

बिभ्यति। [||]'अदभ्यस्तात्'। आयतः। [¶]'इणो यण्'। लटः शतृ। [**]'भीत्रा—' इत्यपादानत्वात् ङसि ॥

1. 'दुर्यानिति। गृहा' क. पाठः.

* ऋक्सं० १-६-२२-४. † 'प्रतरणः वेगमान्' इति गोविन्दस्वामी. ‡ ना० नि० २-२. § ना० नि० ३-४. || पा० सू० ७-१-४. ¶ पा० सू० ६-४-८१. ** पा० सू० १-४-२५.

॥ स यदेतामन्वाह शान्त्यैवैनं तच्छमयति ॥

शान्त्या शमनहेतुभूतया ऋचा । एनं सोमम् । शमयति । तत् । होता ॥

॥ सोऽस्य शान्तो न प्रजां न पशून् हिनस्ति ॥

स सोमः । अस्य यजमानस्य ॥

॥ *इमां धियं शिक्षमाणस्य देवेति वारुण्या परिदधाति ॥

किमिति[1] वारुण्या समापनमित्याह—

॥ †वरुणदेवत्यो वा एष तावद् यावदुपनद्धो यावत् परिश्रितानि प्रपद्यते ॥

यावदुपनद्ध इति व्याचष्टे—यावत् परिश्रितानीति । ‡परिश्रितानि वेष्टितानि । प्रपद्यते प्राप्नोति ॥

॥ §स्वयैवैनं तद् देवतया स्वेन छन्दसा समर्धयति ॥

उक्तार्थम् ॥

॥ शिक्षमाणस्य देवेति ॥

---

१. 'किमित' ब. क. पाठः.

---

* ऋक्सं० ६-३-२-८. † 'वारुणो वै क्रीतः सोम उपनद्धः' तै० सं० ६-१-११. ‡ 'परिश्रितानि स्थानानि' इति गोविन्दस्वामी. § 'अस्या ऋचस्त्रिष्टुप् छन्दः । सा च त्रिष्टुप् सोममाहर्तुं द्युलोकं गत्वा दक्षिणां तपश्चाहृतवती । तथा च शाखान्तरे श्रूयते—सा दक्षिणानिव तपसा नागच्छत् (तै० सं० ६-१-६) इति । तस्मादिदं छन्दः सोमस्य स्वकीयम्' इति सायणः.

व्याचष्टे—

॥ शिक्षते वा एष यो यजते ॥

*शिक्षिर्दानार्थः । देवेभ्य ऋत्विग्भ्यश्च यजमानो हि ददाति ॥

॥ क्रतुं दक्षं वरुण संशिशाधीति ॥

व्याचष्टे—

॥ वीर्यं प्रज्ञानं वरुण संशिशाधीत्येव ॥

तदाह । शिशाधि शाधि । शासेः श्रपः श्लुः । †'शा हौ' । अभ्यासस्येत्त्वम् ॥

॥ ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेमेति ॥

सुतर्मनौशब्दप्रदर्शनार्थः पाठः ॥

॥ यज्ञो वै सुतर्मा नौः कृष्णाजिनं वै सुतर्मा नौः वाग्वै सुतर्मा नौः ॥

तरतेः करणे मनिन्‡ ॥

ततश्च,

॥ वाचमेव तदारुह्य तया स्वर्गं लोकमभि संतरति ॥

तत् तेन सुतर्मपदेन । स्वर्गं लोकमभि[1] प्रति तरति गच्छति ।

---

१. 'स्वर्गमभि' ग. ङ. पाठः.

---

* या॰ नि॰ ३–२०. † पा॰ सू॰ ६-४-३५. ‡ पा॰ सू॰ ३-२-७५.

वाचं यज्ञं तु निर्वर्त्य देहे कृष्णाजिनं वहन्।
एवं नावमिवारुह्य वाचं स्वर्गं स गच्छति[1] ॥

॥ ता एता अष्टावन्वाह ॥

भद्रादभीत्यादीमांधियमित्यन्ताः ॥

कीदृशीः,

॥ रूपसमृद्धाः । एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृगभिवदति ॥

उक्तार्थम् ॥

॥ तासां त्रिः प्रथमामन्वाह ॥

त्रिः त्रीन् वारान् ॥

॥ त्रिरुत्तमाम् ॥

अन्वाहेत्येव ॥

॥ ता द्वादश सम्पद्यन्ते ॥

आवृत्त्या चतुराधिक्यात् ॥

॥ द्वादश वै मासाः संवत्सरः ॥

अवयवावयविनोरैक्यम् ॥

॥ संवत्सरः प्रजापतिः प्रजापत्यायतनाभिरेवाभी राध्नोति ॥

यजमानः ॥

---

१. 'ब्रजत्यति' ब. ड. पाठः.

॥ य एवं वेद ॥

सोऽपि ॥

पुनः स्तौति—

॥ त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद् बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥

अन्वाहेति यत् तत् *स्थेम्ने स्थिरत्वाय । इमनिचि स्थिरस्य स्थः† । स्थेम्न इति व्याचष्टे—बलायाविस्रंसायेति च ।

बलं दार्ढ्यं त्वविस्रंसः शैथिल्याभाव एव हि ॥

द्वितीयः खण्डः ।

---

सोमस्य शकटे युक्तावनड्वाहौ तयोः पुनः—

॥ अन्यतरोऽनड्वान् युक्तः स्यादन्यतरो विमुक्तोऽथ राजानमुपावहरेयुः ॥

एको बद्धो विमुक्तोऽन्योऽनड्वांस्तु शकटे यदा ।
तदैनं सोममनस आदायान्तः प्रवेशयेत् ॥

स्यात् । सम्भावने लिङ् । अथ तदा ॥

कस्मादेवं,

॥ यदुभयोर्विमुक्तयोरुपावहरेयुः पितृदेवत्यं राजानं कुर्युः ॥

---

* 'स्थेम्ने स्थूलत्वाय बलाय च' इति गोविन्दस्वामी.　† पा० सू० ६-४-१५७.

यद् यदि । पितृदेवता यमः । कर्तृकरणयोगाद् यमसम्बन्ध्ययं सोमः स्यादित्यर्थः* ॥

॥ यद् युक्तयोरयोगक्षेमः प्रजा विन्देत् ॥

राजानमुपावहरेयुरित्येव । यद् यदि ।

अलब्धलाभो योगः स्यात् क्षेमो लब्धस्य पालनम् ।
तयोरभावो[1] राष्ट्रं तु प्रजा गृह्णाति पीडयन् ॥
†अर्थाभावेऽव्ययीभावो द्वन्द्वगर्भो बमश्च सुः ॥

स्पष्टयति—

॥ ताः प्रजाः परिप्लवेरन् ॥

प्रजा राष्ट्रम् । परिप्लुतिर्हिंसान्वयः ॥

किञ्च,

॥ योऽनड्वान् विमुक्तस्तच्छालासदां प्रजानां रूपम् ॥

‡शालासद् गृहवर्तिनी असमर्था ॥

॥ यो युक्तस्तच्च क्रियाणाम् ॥

अनड्वान् प्रजानां रूपमित्येव । §क्रियाणाम् । ¶अर्शआद्यच् । क्रियावतीनां कार्यक्षमाणाम् ॥

---

१. 'तयोरभावे' क. पाठः.

---

* 'तस्मात् सोमं क्रीतं दक्षिणा परिवहन्ति, तस्मादाहुः पितृदेवत्यः सोमः' इति श० ब्रा० ३-२-३-१६. 'राज्ञः सोमस्य पितृभिः स्वीकृतत्वादयं सोमो देवयोग्यो न भवेद्' इति सायणः. † पा० सू० २-१-६. 'अयोगक्षेम इति समाहारद्वन्द्वः। एकत्वं पुंवद्भावश्च । अयोगश्चाक्षेमश्च प्रजासु भवत इत्यर्थः' इति गोविन्दस्वामी. 'योगसहितः क्षेमो योगक्षेमः । तदभावः' इति सायणः. ‡ 'शालासदां प्रजानां रूपम्, आसीनानामित्यर्थः', § 'क्रियाणां मनस्विनां प्रतिष्ठमानानाम्' इति गोविन्दस्वामी. 'क्रियाणां लौकिकानां वैदिकानां च रूपम् । यद्वा चक्रमस्यास्तीति चक्रि शकटम् । तेन चक्रिणा यान्तीति शकटमारुह्य गच्छन्त्यः प्रजाश्चक्रिया‍ स्तासां रूपम्' इति सायणः. ¶ पा० सू० ५-२-१२७.

ततश्च,

॥ *ते ये युक्तेऽन्ये विमुक्तेऽन्य उपावहरन्त्युभावेव ते क्षेमयोगौ कल्पयन्ति ॥

अन्ये । स्मिन्नभावश्छान्दसः । अन्यस्मिन् युक्ते सति । द्विरुक्त इत्यादरात् ।

ये मुक्तबद्धयोर्मध्ये कुर्युः सोमप्रवेशनम् ।
ते क्षेमयोगौ कुर्वन्ति प्रजानां सम्यगेव हि ॥
अथ सोमप्रवहणे गुणं वक्तुं कथोच्यते—

॥ देवासुरा वा एषु लोकेषु समयतन्त ॥

वै पुरा । एषु लोकेषु ईशितव्यतया निमित्तभूतेषु । यतेः सम्पूर्वात् संग्रामार्थादनुदात्तेतो लङ् । युद्धमकुर्वन् । देवाश्चासुराश्च ॥

कथं,

॥ त एतस्यां प्राच्यां दिश्ययतन्त ॥

अभिनयत्वेतस्यामिति (?) ॥

॥ तांस्ततोऽसुरा अजयन् ॥

तान् देवान् । ततः प्राच्या दिशोऽजयन्नभिभूयाकालयन् । एवमुत्तरत्रापि ॥

---

* 'यद्युभौ विमुच्यातिथ्यं गृह्णीयाद् यज्ञं विच्छिन्द्यादुभावविमुच्य यथानागता-यातिथ्यं क्रियते तादृगेव तद्विमुक्तोऽन्योऽनड्वान् भवत्यविमुक्तोऽन्योऽथातिथ्यं गृह्णाति यज्ञस्य सन्तत्यै' इति तै॰ सं॰ ६-२-१.

॥ ते दक्षिणस्यां दिश्ययतन्त तांस्ततोऽसुरा अजयंस्ते प्रतीच्यां दिश्ययतन्त तांस्ततोऽसुरा अजयंस्त उदीच्यां दिश्ययतन्त तांस्ततोऽसुरा अजयंस्त उदीच्यां प्राच्यां दिश्ययतन्त ॥

दिश्यैशान्यां युयुधिरे सर्वतः कालिताः सुराः ॥

॥ ते ततो न पराजयन्त ॥

*'विपराभ्यां जेः' इति तङ् । पराजयो हानिः ॥

ततश्च,

॥ सैषा दिगपराजिता ॥

†अपराजितसंज्ञैषा दिगैशानीति श्रूयताम् ।

‡'अपराजितायां दिश्यग्निं प्रतिष्ठाप्य', §'अपराजिताया दिशो यज्ञियस्य' इति सूत्रे शृत्रे चाध्यगीष्महि ॥

स्तौति—

॥ तस्मादेतस्यां दिशि यतेत वा यातयेद्वा ॥

यतिः कृत्यर्थः ।

दिश्यैशान्यामतः कर्म कुर्याद् वा कारयेत् तथा ॥

एवं सति,

॥ ईश्वरो हानृणाकर्तोः ॥

¶ईश्वरे तोसुन्, तुमर्थे ।

---

* पा० सू० १-३-१९. † 'अपराजितां वास्थाय व्रजेद् दिशमजिह्मगः' इति मनुः ६-३१. 'अपराजिताम् ऐशानीं दिशमाश्रित्य' इति च कुल्लूकभट्टव्याख्या. 'शार्वी तु शालाक्षाप्यपराजिता' इति वैजयन्ती (अन्तरिक्षकाण्डे श्लो० ५). ‡ आ० श्रौ० सू० ८-१४-१४. § आ० गृ० सू० ३-७-३. ¶ पा० सू० ३-४-१३.

अनृणीकरणं नाम पूर्णकर्मफलग्रहः ।

इति आ छान्दसः ॥

॥ ते देवा अब्रुवन् ॥

कथम्,

॥ अराजतया वै नो जयन्ति राजानं करवामहा इति ॥

जयन्ति[1] अभिभवन्ति । करवामहै । *प्राप्तकाले लोट् । मद्दिक आट् । †'एत ऐ' ॥

॥ तथेति ॥

निश्चयमकुर्वन्निति शेषः ॥

॥ ते सोमं राजानमकुर्वन् ॥

सोमं देवं राजतया कृतवन्तस्ततः सुराः ॥

॥ ते सोमेन राज्ञा सर्वा दिशोऽजयन् ॥

सर्वाः प्राच्याद्याः । अजयन्नभ्यभवन् ॥

ततोऽत्र किम्,

॥ एष वै सोमराजा यो यजते ॥

सोमो राजा यस्य सः । तत्पुरुषे हि ‡'राजाहःसखिभ्यः' इति टच्[2] ।

---

१ 'जयन्ति प्राप्तकाले' ख. पाठः. २. 'टच् । कथं प्राति' क. पाठः.

---

* पा० सू० ३-३-१६३. † पा० सू० ३-४-९३. ‡ पा० सू० ५-४-९१.

॥ प्राचि तिष्ठत्यादधति ॥

प्राङ्मुखे शकटे सोमं स्थापयन्त्यृत्विजः खलु ॥

॥ तेन प्राचीं दिशं जयति ॥

यजमानः ॥

॥ तं दक्षिणा परिवहन्ति ॥

*'दक्षिणादाच्' । नयन्ति ॥

॥ तेन दक्षिणां दिशं जयति । तं प्रत्यञ्चमावर्तयन्ति ॥

तं शकटस्थं सोमम् ॥

॥ तेन प्रतीचीं दिशं जयति । तमुदीचस्तिष्ठत उपावहरन्ति† ॥

उदङ्मुखात् तं शकटादादायान्तः प्रवेशयेत् ॥

॥ तेनोदीचीं दिशं जयति ॥

अत एवं कुर्वन्,

॥ सोमेन राज्ञा सर्वा दिशो जयति ॥

यजमानः ॥

॥ य एवं वेद ॥

सोऽपि ॥

तृतीयः खण्डः ।

---

* पा॰ सू॰ ५-३-३६. † 'प्रच्यवस्व भुवस्पत इति प्राञ्चोऽभिप्रयाय प्रदक्षिणमावर्तन्ते' इति आप॰ श्रौ॰ सू॰ १०-२६-१.

सोमप्रवहणं प्रोक्तमथातिथ्येष्टिरुच्यते—

॥ हविरातिथ्यं निरुप्यते सोमे राजन्यागते ॥

वपेः कर्मणि यकि सम्प्रसारणम् । आतिथ्यम्[1] । '*अतिथेर्ञ्यः' ॥

स्पष्टयति—

॥ सोमो वै राजा यजमानस्य गृहानागच्छति । तस्मा एतद्धविरातिथ्यं निरुप्यते । तदातिथ्यस्यातिथ्यत्वम् ॥

†अतिथिभूतसोमतृप्तिकरत्वात् ॥

तत्र च,

॥ ‡नवकपालो भवति ॥

नवसु स्यात् पुरोळाशः कपालेषु हि[2] संस्कृतः ॥

॥ नव वै प्राणाः ॥

§नेत्रे श्रोत्रे घ्राणबिले वाक् प्राणाः सप्त मूर्धनि ।
स्तन्यौ द्वाविति नाभेः स्युरूर्ध्वं प्राणा नव स्थिताः ॥

---

१. 'अतिभ्यर्थम्' क. पाठः. २. 'तु' ख. ङ. पाठः.

---

* पा० सू० ५-४-२६. † 'अतिथिरभ्यतितो गृहान् भवति । अभ्येति तिथिषु परकुलानीति वा' या० नि० ४-५. 'तिथिविशेषमनपेक्ष्य भोजनाय कस्यचिद् गृहं प्रत्यकस्माद् यः समागतः सोऽतिथिः' इति सायणः. ‡ 'नवकपालः पुरोळाशो भवति' तै० सं० ६-२-१. § 'नव वै प्राणाः शरीरान्तर्वर्तिनो वायवः । तत्र मुखे सप्त – चक्षुषी नासिके कर्णौ जिह्वा इति । त इमे ऊर्ध्वाः प्राणा नाभेरुपरि तिष्ठन्ति । नाभेरवाचावपि द्वौ मूत्र्यः पुरीष्यः इति' इति गोविन्दस्वामी. 'सप्त वै शीर्षण्याः प्राणाः द्वाववाञ्चौ', 'नव वै पुरुषे प्राणाः' इति च तै० सं० ५-३-२.

तच्च नवकपालत्वं,

॥ प्राणानां क्लृप्त्यै[1] । प्राणानां प्रतिप्रज्ञात्यै ॥

च स्यात् । क्लृप्तिः संश्लेषः । प्रतिप्रज्ञातिरसंकीर्णता ॥
स च पुरोळाशः,

॥ वैष्णवो भवति ॥

*कपालनवकस्थः स विष्णुदेवताको भवेत् ॥

॥ विष्णुर्वै यज्ञः ॥

†यजयाचेति नङ् कर्मण्यत्र यज्ञे[2] स ईर्यते ॥

ततश्च,

॥ स्वयैवैनं तद् देवतया स्वेन छन्दसा समर्धयति ॥

किञ्च,

॥ सर्वाणि वाव छन्दांसि च पृष्ठानि च सोमं
राजानं क्रीतमन्वायन्ति ॥

अन्वायन्ति अन्वागच्छन्ति ॥

॥ ‡यावन्तः खलु वै राजानमनुयन्ति तेभ्यः सर्वेभ्य
आतिथ्यं क्रियते ॥

---

१. 'क्लृप्त्यै स्यात् प्राणानां' घ. ङ. पाठः. २. 'यज्ञः' क. पाठः.

---

* 'वैष्णवो नवकपालः पुरोडाशो भवति' आप० श्रौ० सू० १०-३०-१२.
† पा० सू० ३-३-९०. ‡ तथाच तै० सं० —'यावद्भिर्वै राजानुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते । छन्दांसि वै सोमस्य राज्ञोऽनुचराणि । अग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति सोमस्यातिथ्यमसि विष्णवे त्वेत्याह त्रिष्टुभ एवैतेन करोति अतिथेरातिथ्यमसि विष्णवे त्वेत्याह जगत्या एवैतेन करोत्यग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वेत्याहानुष्टुभ एवैतेन करोति श्येनाय त्वा सोमभृते विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति' ६-२-१.

यावन्तोऽमात्यादयः ॥

अत्रापि,

॥ *अग्निं मन्थन्ति सोमे राजन्यागते ॥

दृष्टान्तमाह—

॥ तद् यथैवादः ॥

किं तददः,

॥ मनुष्यराज आगतेऽन्यस्मिन् वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्ते ॥

अर्हति । †'अर्हः प्रशंसायाम्' इति शतुङि । पूज्ये मनुष्यराजे । ‡'राजाहःसखिभ्यष्टच्' । स्नातकादावन्यस्मिन् वा§ । उक्षा बलीवर्दः ।

वेहद् वृषभसंसर्गाद् गर्भध्वंसकरी मता ।

क्षदन्ते, क्षदिर्हिंसार्थः । घ्नन्ति ॥

॥ एवमेवास्मा एतत् क्षदन्ते यदग्निं मन्थन्ति ॥

एतद् एतर्हि । अस्मै सगणस्य सोमस्यार्थाय । मन्थन्ति यत् ॥

अग्निमन्थने सति पशुविशसनस्य किमायातमित्यत आह[1]—

॥ अग्निर्हि देवानां पशुः ॥

¶पशुवत् सर्वदेवानामग्निरानन्दकार्यसौ ॥

चतुर्थः खण्डः ।

---

१. 'किमायातमित्याह' क. पाठः.

* 'अथातिथ्येळान्ता । तस्या अग्निमन्थनम्' आ० श्रौ० सू० ४-५-१, २. 'चतुर्होत्रातिथ्यमासाद्य संमारयजूंषि व्याचष्टे । यजमानं वाचयतीत्येके । पशुवदग्निर्मन्थ्यः सामिधेन्यः' आप० श्रौ० सू० १०-३१-१०, ११, १२. † पा० सू० ३-२-१३३. ‡ पा० सू० ५-४-९१. § 'भोजयेत्सागतान् काले सखिसंबन्धिबान्धवान् । महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ॥' याज्ञ० १-१०८. 'अयं सत्कारः स्मृतिषु प्रसिद्धो युगान्तरधर्मो द्रष्टव्यः' इति सायणः. ¶ 'हव्यवहनादिना पशुकार्यकरत्वात् पशुर्देवानाम्' इति गोविन्दस्वामी.

इहाग्निं मन्थनीर्वक्तुं संप्रैषादि ब्रवीत्यथ[1]—

॥ अग्नये मथ्यमानायानुब्रूहीत्याहाध्वर्युः ॥

होतारं प्रति ॥

स च,

॥ *अभि त्वा देवसवितरिति सावित्रीमन्वाह ॥

सवितुर्देवताणो† ङीप् ॥

॥ तदाहुः ॥

कथं,

॥ यदग्नये मथ्यमानायानु वाचा‡ हाथ कस्मात्
सावित्रीमन्वाहेति ॥

यद् यदि । ह खलु[3] । वाचा । वक्तव्यमिति शेषः । अनुवक्तव्यम् । अथ ननु । कस्माद्धेतोः ॥

परिहरति—

॥ सविता वै प्रसवानामीशे ॥

प्रसवानामनुज्ञानानाम् । ईशे ईष्टे । §'लोपस्त आत्मनेपदेषु' ॥

---

१. 'अथाग्नि', २. 'ब्रवीति ह' क. पाठः. ३. 'यदि खलु' क. पाठः.

---

* ऋक्सं० १-२-१३-३. 'अग्नये मथ्यमानायानुब्रूहीत्याह सावित्रीमृचमन्वाह सवितृप्रसूत एवैनं मन्थति' तै० सं० ६-३-५. 'प्रातर्वैश्वदेव्यां प्रेषितोऽग्निमन्थनीया अन्वाह पश्चात् सामिधेनीस्थानस्य पदमात्रेऽवस्थायाभिहिङ्कृत्य । अभि त्वा देव सवितर्मही द्यौः पृथिवी च नस्त्वामग्ने पुष्करादध्यीति तिसृणामर्धर्चे हिङ्कारमेके सम्प्रैषात्' आ० श्रौ० सू० २-१६-१,२. † पा० सू० ४-२-२४. ‡ इह 'आह' इति छेदोऽभिमतः सायणगोविन्दस्वामिनोः, तथाच तद्व्याख्या—'अग्नये अनुकूलया वाचा प्रैषमन्त्रमाह' इति सायणः. 'यदग्नये मथ्यमानायेति वाचान्वाह प्रैषमध्वर्युः' इति गोविन्दस्वामी. § पा० सू० ७-१-४१.

किञ्च,

॥ सवितृप्रसूता एवैनं तन्मन्थन्ति ॥

एनमग्निम्। तत् तत्र ॥

॥ तस्मात् सावित्रीमन्वाह ॥

अथ,

॥ *महीद्यौः पृथिवी च न इति द्यावापृथिवीयामन्वाह ॥

†'द्यावापृथिवीशुनासीर—' इति छः ॥

॥ तदाहुर्यदग्नये मथ्यमानायानुवाचाहाथ कस्माद्
द्यावापृथिवीयामन्वाहेति ॥

पूर्ववत्। इति चोद्यम् ॥

परिहरति—

॥ द्यावापृथिवीभ्यां वा एतं जातं देवाः पर्यगृह्णन् ॥

वै पुरा ॥

ततश्च,

॥ ताभ्यामेवाद्यापि परिगृहीतः ॥

‡'आशंसायां भूतवच्च' इति क्तः। परिग्राह्यः ॥

निगमयति—

॥ तस्माद् द्यावापृथिवीयामन्वाह ॥

---

* ऋक्सं० १-२-६-३. † पा० सू० ४-२-३२. ‡ पा० सू० ३-३-१३२.

अथ,

॥ *त्वामग्ने पुष्करादधीति तृचमाग्नेयं गायत्रमन्वाहाग्नौ मथ्यमाने ॥

एवञ्च,

॥ स्वयैवैनं तद् देवतया स्वेन छन्दसा समर्धयति ॥

अत्र तृचे,

॥ अथर्वा निरमन्थतेति ॥

अस्ति ॥

एतच्च,

॥ रूपसमृद्धम् । एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृगभिवदति ॥

†उक्तार्थम् ॥

अत्र किञ्चिन्नैमित्तिकमाह—

॥ स यदि न जायेत[1] ॥

व्याचष्टे—

॥ ‡यदि चिरं जायेत[2] राक्षोघ्न्यो गायत्र्योऽनूच्याः ॥

रक्षोहनोऽणि §'षपूर्वहन्–' इत्यल्लोपः । वचेः क्यप् छान्दसः । रक्षःकर्मकहननकार्याभिवादिन्यो[3] गायत्र्योऽनुवक्तव्या इत्यर्थः ॥

---

१. 'जायते', २. 'जायेत तदा राक्षोघ्न्यो', ३. 'कार्यवादिन्यो' ब. पाठः.

---

* ऋक्सं० ४-५-२३-३. † page 31. ‡ 'अजायमाने श्वेतस्मिन्नेवाजयानेऽग्नेऽहंसिन्य-त्रिणामिति सूक्तमावपेत पुन: पुनरा जन्मनः' आ० श्रौ० सू० २-१६-४. 'यदि मथ्यमानो न जायेत राक्षोघ्नीरनुब्रूयात्' आप० श्रौ० सू० ५-१२-४. § पा० सू० ६-४-१३५.

कास्ताः—

॥ *अग्ने हंसि न्यत्रिणमित्येताः ॥

ऋचो नव ॥

किमर्थं,

॥ रक्षसामपहत्यै ॥

अग्नौ चिरायमाणे किं रक्षसां हननं त्विह ।

इत्यत आह—

॥ रक्षांसि वा एनं तर्ह्यालभन्ते यर्हि न जायते ॥

यर्हि यदा । तर्हि तदा । आलभन्ते परिगृह्णन्ति[1] ॥

व्याचष्टे—

॥ यर्हि चिरं जायते ॥

यर्हि यदा ॥

॥ स यद्येकस्यामेवानूक्तायां जायेत[2] यदि द्वयोरथोत ब्रुवन्तु[†]
जन्तव इति जाताय जातवतीमभिरूपामनुब्रूयात् ॥

अग्नेहंसीय एकस्यामृच्युक्तायामथ द्वयोः ।
अस्योपलक्षणत्वेन तृचाद्युक्तावथापि वा ॥
यदि जायेताग्निरथोत ब्रुवन्त्वित्यृचं वदेत् ।

१. 'परिगृह्णन्ति यर्हि चिरं', २. 'जायते' प. इ. पाठः.

* ऋक्सं० ८-६-२४-१. † ऋक्सं० १-१-७-५. 'जातं श्रुत्वानन्तरेण प्रणवेन शिष्टमुपसंतनुयात् । शिष्टोत्तराम् । उत ब्रुवन्तु जन्तव आग्नं हस्ते न खादिनमित्यर्धर्चं आरभेत' आ० श्रौ० सू० २-१६-५, ६, ७.

जातवतीम् । वृत्रहाजनीति जनिधातुमतीम् ॥

॥ यद् यज्ञेऽभिरूपं तत् समृद्धम् । *आयं हस्ते न खादिनमिति ॥

अन्वाहेति शेषः ॥

आभिरूप्यमाह—

॥ हस्ताभ्यां ह्येनं मन्थन्ति ॥

किञ्चास्ति,

॥ शिशुं जातमिति[1] ॥

व्याचष्टे—

॥ शिशुरिव वा एष प्रथमजातो यदग्निः ॥

यत् यः ॥

इवशब्दः कुत इत्याह—

॥ न बिभ्रति विशामग्निं स्वध्वरमिति ॥

अस्ति ॥

ततः किं,

॥ यद्वै देवानां नेति तदेषामोमिति ॥

†देवानां वर्णव्यत्यासेन वेदानाम् । मन्त्राणां यज्ञेति पदं तदोमित्यस्यार्थे वर्तते ।

---

१. 'जातमिति शिशुरिव' ग. ङ. पाठः.

---

* ऋक्सं० ४-५-२८-५. † 'यद्वै देवानां वेदानामिति वा वर्णसादृश्येन । आह च 'अप्यक्षरवर्णसामान्यान्निर्ब्रूयान्न त्वेव न निर्ब्रूयान्न संस्कारमाद्रियेत' (या० नि० २-१) इति, 'तदेषामोमित्यनुज्ञानवचनेन प्रतिषेधविपरीत उपमार्थो लक्ष्यते' इति गोविन्दस्वामी. 'देवानां देवप्रतिपादकानां मन्त्राणाम् । यद्वा दकारवकारयोर्विपर्यासेन वेदानाम्' इति सायणः.

दृष्टान्तेष्वविसंवादादोमिवार्थः[1] प्रदर्श्यते ।
*व्यवस्थेयं च नैरुक्ती नञिवार्थः पदात् परः ॥
पूर्वभूतो निषेधार्थो मन्त्रेष्वेव न चान्यतः ।
†'अग्निर्न ये भ्राजसे'ति ‡'न वा उ' इति दर्शनात् ॥
इत्यतोऽत्र प्रवोचाम नञा त्रिशुरिवेति वै ॥

॥ §प्रदेवं देववीतये ॥

इत्यन्वाहेति शेषः ॥

अत्र,

॥ भरता वसुवित्तममिति ॥

अस्ति ॥

ततः किम्,

॥ ¶प्रह्रियमाणायाभिरूपा ॥

ङसो ङे ।

अग्नेः ||प्रह्रियमाणस्य सङ्गतार्था भवेदियम् ।
भरतेति द्व्यो भत्वम्§ ॥

॥ यद् यज्ञेऽभिरूपं तत् समृद्धम्[2] ॥

1. 'दृष्टान्तेष्वपि संवादादोमिवार्थः', २. 'समृद्धम् आस्ते' घ. ङ. पाठः.

* "नामोत्तरभाविनो नञ उपमार्थायतामाचष्टे। आह च यास्कः—'नेति प्रतिषेधार्थीयो भाषायाम् उभयमन्वध्यायम्' इति, 'उपरिष्टादुपाचार उपमार्थीयः' इति च" (निरु० १-४) इति गोविन्दस्वामी. † ऋक्सं० ८-३-१२-२. ‡ ऋक्सं० २-३-१०-६. § ऋक्सं० ४-५-२१-१. ¶ 'आतानाद्युहि प्रह्रियमाणायानुब्रूहीत्याह काण्डे काण्ड एवैनं क्रियमाणे समर्धयति गायत्रीं सर्वामन्वाह' तै० सं० ६-३-५. || 'आहवनीये प्रक्षिप्यमाणोऽयं मथितोऽग्निः प्रह्रियमाणः' इति सायणः. § पा० सू० वा० ८-२-३२.

अत्र,

॥ आ स्वे योनौ निषीदत्विति ॥

अस्ति ॥

व्याचष्टे—

॥ एष ह वा अस्य स्वो योनिर्यदग्निरग्नेः ॥

यद् यः ।

अग्निराहवनीयोऽग्नेः स्थानं निर्मथितस्य वै ॥

॥ *आ जातं जातवेदसीति ॥

अन्वाहेति शेषः ॥

व्याचष्टे—

॥ जात इतरो जातवेदा इतरः ॥

†जातमिति निर्मथ्य उक्तो जातवेदसीत्याहवनीय उक्त इत्यर्थः ॥

॥ प्रियं शिशीतातिथिमिति ॥

अस्ति ॥

॥ एष ह वा अस्य प्रियोऽतिथिर्यदग्निरग्नेः ॥

यद् यः ॥

॥ स्योन आ गृहपतिमिति ॥

अस्ति ॥

---

* ऋक्संहिता ४-५-२९-२. † 'इदानीं मथितोऽग्निः सद्यः समुत्पन्नत्वाज्जातः । पूर्वसिद्धाहवनीयोऽग्निरिदानीं जातमिममग्निं वेत्तीति जातवेदाः' इति सायणः. 'वेद इति धननाम, हविर्लक्षणं धनं जातमस्य' इति गोविन्दस्वामी.

॥ शान्त्यामेवैनं तद् दधाति ॥

शान्त्यां सुखनाम्ना[1] स्योनपदेनोक्तायाम् । एनं[2] प्रहृतमग्निम् । दधाति स्थापयति । तद् तत्र[3] ॥

॥ [*]अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्य इत्यभिरूपा ॥

अनुवक्तव्या ॥

॥ यद् यज्ञेऽभिरूपं तत् समृद्धम् ॥

[†]'अग्निनेति पादौ त्वग्निर्दैवतो निर्मन्थ्य आहवनीयश्च'[4] इति सर्वानुक्रमण्याम् । मथितनिहितेनाग्निनाहवनीयोऽग्निर्दीप्यत[5] इति हि गम्यते ॥

॥ [‡]त्वं ह्यग्ने अग्निना ॥

इतीयं चानुवक्तव्या ॥

तत्र,

॥ विप्रो विप्रेण सन् सतेति ॥

अस्ति ॥

व्याचष्टे—

॥ [§]विप्र इतरो विप्र इतरः सन्नितरः सन्नितरः ॥

---

१. 'सुखनाम्नि' क. पाठः. २. 'एनं हृत' ख ग. पाठः. ३. 'तम्' क. पाठः. ४. 'निर्मन्थ्याहवनीयौ' मुद्रितपाठः, 'निर्मन्थ्याहवनीयाभ्याम्' घ. ङ. पाठः. ५. 'दीप्तः' क. पाठः.

---

* ऋक्सं० १-१-२२-६ † मं० १. सू० १२. ‡ ऋक्सं० ६-३-३१-४. § 'अग्ने महाँ असि ब्राह्मणभारत' (तै० ब्रा० ३-५-१.) इति श्रुतेर्ब्राह्मणजात्यभिमानित्वाद् विप्रत्वम्' इति सायणः.

स्वन्त आहवनीयोऽत्र शान्तो निर्मन्थ्य उच्यते ।
विप्रो मेधावी । सन् सुस्वभावः ॥

॥ सखा सख्या समिध्यस इति ॥

अस्ति ॥

व्याचष्टे—

॥ एष ह वा अस्य स्वः सखा यदग्निरग्नेः ॥

स्वः आत्मीयः । यद् यः ॥

॥ *तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु ॥

इत्यन्वाह ॥

अत्रास्ति,

॥ स्वेषु क्षयेषु वाजिनमिति । एष ह वा अस्य स्वः क्षयो यदग्निरग्नेः ॥

यद् यः । क्षयो निवासस्थानम् ॥

॥ †यज्ञेन यज्ञमयजन्त देवा इत्युत्तमया परिदधाति ॥

समापयेत् त्रिरुक्तया ॥

व्याचष्टे—

॥ ‡यज्ञेन वै तद् देवा यज्ञमयजन्त यदग्निनाग्निमयजन्त ॥

ते देवा अग्निनाग्निमयजन्तेति यत् तद् यज्ञेन यज्ञमयजन्त । तत् ततः ॥

---

* ऋक्सं० ६-६-६-३. † ऋक्सं० २-३-२२-४. 'यज्ञेन यज्ञमयजन्त देवा इति परिदध्याद् सर्वत्रोत्तमां परिधानीयेति विद्यात्' आ० श्रौ० सू० २-१६-७, ८.
‡ 'साध्या वै देवा अस्मिन् लोक आसन् नान्यद् किंचन मिषत् तेऽग्निमेवाग्नये मेधायालभन्त नह्यन्यदालम्भ्यमविन्दन् ततो वा इमाः प्रजाः प्राजायन्त यदग्नावग्निं मथित्वा प्रहरति प्रजानां प्रजननाय' तै० सं० ६-३-५.

॥ ते स्वर्गं लोकमायन् ॥

अगच्छन् ॥

॥ तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः
सचन्त । यत्र पूर्वे साध्याः सन्ति देवा इति ॥

व्याचष्टे—

॥ छन्दांसि वै साध्या देवास्तेऽग्रेऽग्निनाग्निमयजन्त ॥

ततः,

॥ ते स्वर्गं लोकमायन् ॥

किञ्च,

॥ आदित्याश्चैवेहासन्नङ्गिरसश्च तेऽग्रेऽग्निनाग्निमयजन्त ।
ते स्वर्गं लोकमायन् ॥

एवञ्च,

॥ सैषा स्वर्ग्याहुतिर्यदग्न्याहुतिः ॥

यद् या । स्वर्ग्या स्वर्गप्राप्तिहेतुः ॥

पुनः स्तौति—

॥ यदि ह वा अप्यब्राह्मणोक्तो यदि दुरुक्तोक्तो यजते ॥

*अब्राह्मणोक्तः स्मृत्यादौ प्रोक्तो ह्यब्राह्मणस्त्विति ।

तद्यथा—

"अब्राह्मणास्तु षट् प्रोक्ता इति शातातपोऽब्रवीत्† ।
आद्यस्तु राजभृत्यः स्याद् द्वितीयः क्रयविक्रयी ॥

---

* 'ब्राह्मणं विधायकं वाक्यं तेन प्रेरितो ब्राह्मणोक्तः । तद्विपरीतः पण्डितंमन्यः स्वबुद्ध्यैव गत्विविद् योऽनुतिष्ठति सोऽयमब्राह्मणोक्तः । अथवा स्मृतिष्वब्राह्मणत्वेन प्रतिपादितो योऽस्ति सोऽयमब्राह्मणोक्तः' इति सायणः. 'ब्राह्मणैर्नोक्तः अब्राह्मणोक्तः' इति गोविन्दस्वामी. † आह्निकप्रकरणे.

तृतीयो बहुयाजी स्याच्चतुर्थो ग्रामयाजकः[1] ।
पञ्चमः प्रभुरेतेषां[2] ग्रामस्य नगरस्य च ॥

अनागतां तु यः पूर्वां[3] सादित्यां चैव पश्चिमाम् ।
नोपासीत द्विजः सन्ध्यां ब्रह्मबन्धुः स गर्हितः ॥"

इति । क्रयविक्रयी क्रीत्वा विक्रयं कुर्वन् । *बहुयाजी स्मार्तकर्मोपदर्शकः । याजिनः पुरस्ताद् बहुच्[†] । [‡]ग्रामयाजकः श्रौतकर्मोपदर्शकः । एतेषां पञ्चमो ग्रामनगरयोः प्रभुः[§] । ब्रह्मबन्धुः जातिब्राह्मणः । दुरुक्तैरपवादैरुक्तः ख्यातो दुरुक्तोक्तोऽभिशस्तकः[¶] ॥

॥ अथहैषाहुतिर्गच्छत्येव देवान्न पाप्मना संसृज्यते ॥

अथह तथापीत्यर्थः । न संसृज्यते न बाध्यते । पाप्मना पापेन । एषाहुतिः ॥

---

१. 'तृतीयो बहुयाजी स्याच्चतुर्थोऽश्रौतयाजकः। पञ्चमो ग्रामयाजी च षष्ठो ब्रह्मबन्धुः स्मृतः' इति सायणभाष्ये. २. 'एतेषां पञ्चमो याजी', ३. 'सन्ध्यां प्रातः सनक्षत्रां' ष. इ. पाठः.

---

* 'बहून् हि याजयेद् यस्तु वर्णवाह्यांश्च निःस्वनः। म्लेच्छांश्च शौण्डिकांश्चैव स विप्रो बहुयाजकः' इति बृहत्पराशरसंहिता अ० ७, श्लो० ३५४. 'यस्तु सत्यपि जीवने धनाधिक्यवाञ्छया याजनशीलः सोऽत्र बहुयाजी विवक्षितः' इति सायणः. † पा० सू० ५-३-६८. ‡ 'शूद्रातिरिक्तयाजी यो ग्रामयाजीति कीर्तितः' ब्रह्मवै० पु० प्र० ख० अ० १०. § ग्रामे नगरे च योग्यायोग्यांश्च यावन्तः सन्ति धनाभिलाषेण तावतां सर्वेषां याजको ग्रामनगरयाजी' इति सायणः. ¶ 'दुरुक्तोक्त्या उक्तः दुरुक्तोक्तः । अप्रशस्तैः शब्दैरभिहित इत्यर्थः' इति गोविन्दस्वामी. 'पुरुषेणान्यथावबुद्धं विधिवाक्यं दुरुक्तं, तेन प्रेरितो दुरुक्तोक्तः' इति सायणः.

विदुषः फलमाह—

॥ गच्छत्यस्याहुतिर्देवान्नास्याहुतिः पाप्मना संसृज्यते य एवं वेद[1] ॥

अस्य वेदितुः ॥

अथ सर्वाः स्तौति—

॥ ता एतास्त्रयोदशान्वाह रूपसमृद्धाः । एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृगभिवदति । तासां त्रिः प्रथमामन्वाह त्रिरुत्तमाम् । ताः सप्तदश संपद्यन्ते ॥

त्रयोदश चतुर्युक्ता भवन्ति दश सप्त च ॥

॥ सप्तदशो वै प्रजापतिः ॥

कथं,

॥ द्वादश मासाः पञ्चर्तवः ॥

*हेमन्तशिशिरैक्येन ऋतूनां पञ्चतोदिता ॥

॥ तावान् संवत्सरः । संवत्सरः प्रजापतिः । प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद ॥

पुनः स्तौति—

॥ त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद् बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥

†उक्तार्थम् ॥

पञ्चमः खण्डः ।

---

१ 'वेद अथ' प. ङ. पाठः.

---

* ऐ॰ ब्रा॰ १-१. † page 91.

आतिथ्येष्टिः प्रस्तुतास्यामग्निमन्थनमीरितम् ।
अथाज्यभागयोराह त्वनुवाक्ये प्ररोचयन् —

॥ *समिधाग्निं दुवस्यत †आप्यायस्व समेतु त इत्याज्यभागयोः पुरोनुवाक्ये भवतः ॥

ते च,

॥ ‡आतिथ्यवत्यौ ॥

आतिथ्यमतिथिसम्माननं, तद्वत्यौ ॥

किञ्च,

॥ रूपसमृद्धे एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृगभिवदति ॥

नन्वाग्नेयी तु समिधा युक्तातिथिपदेन वै ।
आप्येति सौम्या अतिथिशब्दयोगः कथं भवेत् ॥

इत्यत आह—

॥ सैषाग्नेय्यतिथिमती न सौम्यातिथिमत्यस्ति ॥

§सोमाट्ट्यणष्टाप् ।

ऋक् सौम्यातिथिशब्देन युक्ता नैवोपलभ्यते ॥

॥ यद् सौम्यातिथिमती स्याच्छश्वत् सा स्यात् ॥

यद् यदि । ¶शश्वद् यथाकामम् । अस्ति चेत् स्यादेव ॥

---

* ऋक्सं० ६-३-३६-१. † ऋक्सं० १-६-२२-१. ‡ 'धाय्ये अतिथिमन्तौ' आ० श्रौ० सू० ४-५-३. § पा० सू० ४-२-३०. ¶ 'शश्वदिति बहुनाम' इति गोविन्दस्वामी, 'शश्वद् अवशम्' इति सायणः.

कथं तर्हि,

॥ एतद् त्वेवैषातिथिमती यदापीनवती ॥

एतद् एतेन प्रकारेण । आप्यायिधातुयोग आपीनत्वम् । क्ते *'प्यायः पी'। †'ओदितश्च'। यद् यस्मात् ॥

कथं,

॥ यदा वा अतिथिं परिवेविषत्यापीन इव वै स तर्हि भवति ॥

वेविषति । विषेर्जुहोत्यादेर्लेट् । ‡'निजां त्रयाणां गुणः श्लौ'। §'अदभ्यस्तात्' ।

भोजयन्ति श्रद्दधानाः स्वगृहेषु यदातिथिम् ।
तदा स[1] पुष्टसर्वाङ्ग आपीनः खलु दृश्यते ॥
एवमाप्यायियोगेन ऋचोऽतिथिपदान्वयः ।

इव एव ॥

॥ तयोर्जुषाणेनैव यजति ॥

तयोराज्यभागयोः ।

$जुषाणोऽग्निःसोमआदिर्यजुर्द्वन्द्वो जुषाणकः ॥
आज्यभागावित्थमुक्त्वा[2] प्रधानस्य ब्रवीत्यथ—

॥ ¶इदं विष्णुर्विचक्रमे ‖तदस्य प्रियमभि पाथो अश्यामिति वैष्णव्यौ ॥

ऋचौ ॥

१. 'सु', २. 'भागावेवमुक्त्वा' घ. ङ. पाठः.

* पा० सू० ६-१-२८. † पा० सू० ८-२-४५. ‡ पा० सू० ७-४-७५. § पा० सू० ७-१-४. $ 'जुषाणो अग्निराज्यस्य वेतु', 'जुषाणः सोम आज्यस्य हविषो वेतु' इति नाम्नाब्राह्मणम्. ¶ ऋक्सं० १-२-७-२. ‖ ऋक्सं० २-२-२४-५.

तत्र च,

॥ त्रिपदामनूच्य चतुष्पदया यजति[1] ॥

अनूच्येदंनिगायत्रीं तदस्यात्रिष्टुभा यजेत् ।
त्रिपदा चात्र गायत्री चतुष्पात् त्रिष्टुबेव च ।
*पादस्य लोपे †पादः पद्वाद्रचीति‡ तु निर्वचः ॥

एवञ्चर्ग्द्वये,

॥ सप्त पदानि भवन्ति ॥

ततः किं,

॥ शिरो वा एतद् यज्ञस्य यदातिथ्यम् ॥

शिरोवत्[2] प्रधानमङ्गम्§ ॥

ततोऽपि किं,

॥ सप्त वै शीर्षन् प्राणाः ॥

छान्दसः । ¶शीर्ष्णि शिरसि ।

नेत्रे श्रोत्रे घ्राणबिले वाक् प्राणाः सप्त मूर्धनि ॥

॥ शीर्षन्नेव तत् प्राणान् दधाति ॥

तत् तेन सप्तपदवचनेन । शीर्ष्णि शिरसि । दधाति स्थापयति ॥

---

१. 'यजन्ति' ग. पाठः. २. 'शिरो वा' क. पाठः.

---

* पा० सू० ५-४-१३८. † पा० सू० ६-४-१३०. ‡ पा० सू० ४-१-९.
§ 'शिरो वा एतद् यज्ञस्य ज्योतिष्टोमस्य यदातिथ्या । दीक्षणीया कर्तृसंस्कारः । आरम्भः प्रायणीया । तत्रआतिथ्यैव यज्ञस्य मुखं भवति', ¶ 'शीर्ष्णि मुखे' इति गोविन्दस्वामी.

अथ स्विष्टकृतः प्राह्यानुवाक्यां याज्यया सह—

॥ *होतारं चित्ररथमध्वरस्य †प्र प्रायमग्निर्भरतस्य शृण्व इति स्विष्टकृतः संयाज्ये भवत आतिथ्यवत्यौ रूपसमृद्धे । एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृगभिवदति ॥

‡उक्तार्थम् ॥

ते च,

॥ त्रिष्टुभौ भवतः ॥

तच्च त्रिष्टुप्त्वं,

॥ §सेन्द्रियत्वाय ॥

स्यात् ॥

अथेष्टिसंस्थामाह[1]—

॥ ¶इळान्तं भवति ॥

आतिथ्याख्यं कर्म ॥

कस्मादेवम्,

॥ इळान्तेन वा एतेन देवा अराध्नुवन् यदातिथ्यम् ॥

एतेनातिथ्याख्यकर्मणा ॥

॥ तस्मादिळान्तमेव कर्तव्यम् ॥

---

१. 'अथेष्टेः' क. पाठः.

---

* ऋक्सं० ७-५-२१-५. † ऋक्सं० ५-२-११-४. ‡ page 31. § 'इन्द्रियं वै त्रिष्टुप्' तै० सं० २-५-१०. ¶ 'अथातिथ्येडान्ता' आ० श्रौ० सू० ४-५-१. 'इडान्ता सन्तिष्ठते' आप० श्रौ० सू० १०-३१-१५.

ततश्च,

॥ प्रयाजानेवात्र यजन्ति नानुयाजान् ॥

अत्रातिथ्येष्टौ ।

लुप्यन्तेऽत्र त्वनूयाजा इळायाः परतो हि ते ॥

कुतः,

॥ प्राणा वै प्रयाजानुयाजाः ॥

प्रोत्कर्षेऽनुरविच्छेदे घञ् कर्मण्यर्चनं यजिः ।
उत्कृष्टाविच्छिन्नपूज्या यागास्ते प्राणवत् खलु ॥

तत्र च,

॥ ते य इमे शीर्षन् प्राणास्ते प्रयाजाः ॥

शीर्षन् शिरसि ।

शिरस्थाः सप्त ये प्राणास्ते प्रयाजाः श्रुतौ श्रुताः* ।

द्विरुक्त इत्यादरात् ॥

॥ येऽवाञ्चस्तेऽनुयाजाः ॥

प्राणा इत्येव ।

नाभेरधो ये रेतस्यः पुरीष्यो मूत्र्य एव च ।
†प्राणास्त्रयस्तेऽनुयाजा इति वेदेष्वधीयते ॥

एवं स्थिते,

॥ ‡स योऽत्रानुयाजान् यजेद् यथेमान् प्राणानालुप्य शीर्षन् धित्सेत् तादृक् तत् ॥

---

* 'प्राणा वै प्रयाजा अपाना अनुयाजाः' इति शा० ब्रा० ७-१. † 'अथोऽनुयाजाः इम एवास्य तेऽवाञ्चः प्राणाः' शा० ब्रा० ११-२-६-५. ‡ 'तदिळान्तं भवति नानुयाजान् यजन्ति शिरो वै यज्ञस्यातिथ्यं पूर्वार्धो वै शिरः पूर्वार्धमेवैतद् यज्ञस्याभिसंस्करोति स यद्यनुयाजान् यजेद् यथा शीर्षतः पर्याहृत्य पादौ प्रतिदध्यादेवं तत् तस्मादिळान्तं भवति नानुयाजान् यजन्ति' शा० ब्रा० ३-४-१-२६.

यो होतानुयाजान् यजेत् स इमानवाञ्चन्नीन् प्राणानालुप्य स्वस्थानादुत्पाट्य शीर्षन् शिरसि शिरसेऽभिधातुमिच्छेत् । निदध्यादित्यर्थः । तादृक् तादृशम् । तदनुयाजकरणम् ॥

न चैवं भवत्विति मन्तव्यमित्याह—

॥ अतिरिक्तं तत् ॥

*उदावर्ताख्यरोगात्मा स विकारो हि देहिनः ।
रिचेर्भावे क्तः ॥

॥ समु वा इमे प्राणा विद्रे ये चेमे ये चेमे ॥

उ पुनः । †'व्यवहिताश्च' । संविद्रे । ‡'वेत्तेर्विभाषा' इति झस्यातो रुट् । §'लोपस्त आत्मनेपदेषु' । संविद्रते । इम इत्यभिनयति ।

शिरस्याः सप्त ये प्राणा ये त्रयोऽवाञ्च[1] एव ते ।
¶स्वस्थानस्थाः सङ्गताश्च भवेयुर्देहपोषदाः ॥

स्तौति—

॥ तद् यदेवात्र प्रयाजान् यजन्ति नानुयाजान् ॥

---

1. 'त्रयोऽर्वाञ्च' ख. पाठः

---

* 'यत्रोर्ध्वं जायते वायोरावर्तः स चिकित्सकैः । उदावर्त इति प्रोक्तो व्याधिस्तत्रानिलः प्रभुः ॥' तथाच सुश्रुते—'अधश्चोर्ध्वं च भावानां प्रवृत्तानां स्वभावतः । न वेगान् धारयेत् प्राज्ञो वातादीनां जिजीविषुः । वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः । व्याहन्यमानैरुदितैरुदावर्तो निरुच्यते । क्षुत्तृष्णाश्वासनिद्राणामुदावर्तो विधारणात् । त्रयोदशविधश्चासौ भिन्न एतैस्तु कारणैः । सर्वेष्वेतेषु विधिवदुदावर्तेषु कृत्स्नशः । वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये ॥' उत्तरतन्त्रे अ० ५५. † पा० सू० १-४-८२. ‡ पा० सू० ७-१-७ § पा० सू० ७-१-४१. ¶ 'अव्याहतगतिर्यस्य स्थानस्थः प्रकृतौ स्थितः । वायुः स्यात् सोऽधिकं जीवेद् वीतरोगः समाः शतम् ॥' चरकसंहिता चिकित्सितस्थाने अ० २८ श्लो० २.

प्रयाजा एव यष्टव्या नानुयाजा इतीह यत् ।
तदेव खलु कर्तव्यं नान्यथेत्येष निर्णयः ॥

किञ्च,

॥ तत्र स काम उपाप्तो योऽनुयाजेषु योऽनुयाजेषु ॥

अनुयाजफलं प्राणाः प्रयाजैरेव ते श्रुताः ।
*उभयेऽपि प्राणतया संस्तूयन्ते श्रुतौ खलु ॥

†द्विरुक्तिरुक्तार्था ॥

षष्ठः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ सुखप्रदायां तृतीयोऽध्यायः[1] ॥

## अथ चतुर्थोऽध्यायः ।

राजक्रयस्तृतीये तु प्रोक्त आतिथ्यया सह ।
अथाभिप्लवमाख्यातुमितिहासं ब्रवीति ह—

॥ यज्ञो वै देवेभ्य उदक्रामद् न वोऽहमन्नं भविष्यामीति ॥

युष्माकमन्नं नैवाहं भवितेत्यभिधाय वै ।
‡यज्ञ उत्क्रान्तवान् देवगणान् क्रोधान्वितः पुरा ॥

1. 'षड्गुरुशिष्येण विरचितायां ब्राह्मणव्याख्यायां तृतीयोऽध्यायः' ख. क. पाठः.

* 'प्राणा वै प्रयाजानुयाजाः' श० ब्रा० १४-२-२-५१. † page 44.
‡ 'यज्ञशब्देनात्र प्रवर्ग्यो विवक्षितः' इति सायणगोविन्दस्वामिनौ.

॥ नेति देवा अब्रुवन् अन्नमेव नो भविष्यसीति ॥

नास्त्यन्नमन्यदस्माकं भवानन्नमिति तेऽवदन् ॥

॥ तं देवा विमेथिरे ॥

तमगृहीतानुनयम्। विमथनं ताडनम् ॥

॥ स हैभ्यो विहृतो न प्रबभूव ॥

विशब्दः प्रार्थे। प्रहृतस्ताडितः। भिसो भ्यम्। एभिर्देवैः। न प्रबभूव समर्थो नाभवत् ॥

॥ ते होचुर्देवाः ॥

हेति तापे। ते प्रहृतासमर्थयज्ञकाः ॥

कथं,

॥ न वै न इत्थं विहृतो[1]ऽलं भविष्यति हन्तेमं यज्ञं सम्भरामेति ॥

नः अस्मभ्यम्। इत्थं विहृतस्ताडितः। अलं पर्याप्तः। *हन्तेत्याभिमुख्ये। सम्भराम। लोट्। आट्। भृञ् भरणे। प्रवर्ग्यसम्भारैः पुष्टाङ्गं कुर्मः ॥

॥ तथेति तं संजभ्रुः ॥

तथेति निश्चयं कृत्वा यज्ञं देवा अपोषयन्।

भृञो लिट्। भो जः ॥

---

१. 'प्रहृतो' च. पाठः.

---

* 'हन्तेत्यन्तःकरणवृत्तेरभिप्रायस्य। सूचनम्, एवमभिप्रायं कृतवन्त इत्यर्थः' इति गोविन्दस्वामी. 'सम्पूर्तिहेतुदर्शननिमित्तजन्यहर्षद्योतनार्थो हन्तशब्दः' इति सायणः.

॥ तं संभृत्योचुरश्विनाविमं भिषज्यतमिति ॥

भृञो ल्यपि तुक् । भिषजिति कण्ड्वादेर्यको लोट् । हे अश्विनौ यज्ञमिमं युवामरोगं कुरुतमित्यूचुर्देवा इत्यर्थः ॥

नन्वन्येषु सत्सु दस्रौ किमूचुरत[1] उच्यते—

॥ *अश्विनौ वै देवानां भिषजौ ॥

भैषज्ये सर्वदेवानां मध्ये तौ कुशलौ खलु[2] ॥

॥ †अश्विनावध्वर्यू ॥

अध्वर्यू अध्वर्युप्रतिप्रस्थातारौ । ‡'अश्विनाध्वर्यू आध्वर्यवाद्' इत्यृतुप्रैषे§ ह्यधीयते ॥

॥ तस्मादध्वर्यू घर्मं संभरतः ॥

तस्मात् तथाहि ॥

॥ तं सम्भृत्याहतुर्ब्रह्मन् ¶प्रवर्ग्येण प्रचरिष्यामो होतरभिष्टुहीति ॥

अध्वर्यू ॥

प्रथमः खण्डः ।

---

१. 'किमूचुरत आह' घ. ङ. पाठः. २. 'खलु अत्रापि अश्विना' क. पाठः.

---

* अश्विनोर्देवभिषक्त्वं च 'देवा वै सत्रमासत' (तै० आ० ८-२) इत्यनुवाके— 'ते देवा अश्विनावब्रुवन् भिषजौ वै स्थः इदं यज्ञस्य शिरः प्रतिधत्तमिति' इत्यादिनोक्तम्.
† 'अश्विनौ हि देवानामध्वर्यू आस्ताम्' तै० आ० ८-२. ‡ आप० श्रौ० सू० ११-१९-८.
§ ऋतुयाजार्थं मैत्रावरुणेन पठितव्या मन्त्रा ऋतुप्रैषाः. ¶ प्रवर्ग्यशब्दः कर्मविशेषवचनः प्रवृज्यतेऽस्मिन् घर्मः इति.

*घर्मं त्वभिशुहीत्येवं होताध्वर्युप्रचोदितः,

॥ †ब्रह्म जज्ञानं प्रथमं पुरस्तादिति प्रतिपद्यते ॥

प्रतिपत्तिरारम्भः ॥

व्याचष्टे—

॥ ब्रह्म वै बृहस्पतिः ॥

देवानां बृहतां पाता रक्षको वेद एव हि ॥

॥ ब्रह्मणैवैनं तद् भिषज्यति ॥

तत् तत्र । एनं यज्ञम् ।

अवस्येत् प्रणवेनात्र[1] ऋचं प्रोच्यानवानतः‡ ।

§'ऋचमृचमनवानमुक्त्वा' इत्यादि हि सूत्र्यते ॥

¶ब्रह्माद्यृक् सूत्रपठिता तथेयंपिमहानभि ।

भिषज्यत्यरोगं करोति ॥

॥ $इयं पित्र्ये राष्ट्र्येत्यग्र इति ॥

अभिष्टुयादिति शेषः ॥

व्याचष्टे—

॥ वाग्वै राष्ट्री ॥

ईश्वरी राष्ट्री ॥

---

१. 'प्रणवो नात्र' ग. पाठः.

---

* घर्मशब्दः प्रवर्ग्यद्रव्यवचनः. † तै० सं० ४-२-८. ‡ अनवानतः = अनुच्छ्वसनेनेत्यर्थः. § आ० श्रौ० सू० ४-६-२. ¶ आ० श्रौ० सू० ४-६-३. $ अथर्वसं० ४-१-२.

॥ वाचमेवास्मिंस्तद् दधाति ॥

अस्मिन् यजमाने । तत् तत्र ॥

॥ *महान्मही अस्तभाय द्विजात इति ॥

अभिष्टुयात् ॥

इयं च,

॥ ब्राह्मणस्पत्या ॥

पत्यन्ताण्ण्यः† ॥

॥ ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनं तद् भिषज्यति ।
‡अभि त्यं देवं सवितारमोण्योरिति ॥

अभिष्टुयात् ॥

इयं च,

॥ सावित्री ॥

सवितृदेवत्या ॥

॥ प्राणो वै सविता ॥

प्राणयतीति व्युत्पत्त्या ॥

॥ प्राणमेवास्मिंस्तद् दधाति ॥

तत् तत्र । अस्मिन् यजमाने ॥

॥ §संसीदस्व महाँ असीत्येवैनं समसादयन् ॥

---

* तै० सं० २-३-१४. † पा० सू० ४-१-८५. ‡ तै० सं० १-२-६.
§ वाज०सं० १-३-९-४.

[*]खरदेशे [†]महावीरमेनं देवा असादयन् ॥

॥ [‡]अञ्जन्ति यं प्रथयन्तो न विप्रा इति ॥

अभिष्टुयात् ॥

इयं च,

॥ अज्यमानायाभिरूपा ॥

अज्यमानं महावीरमभिधातुमियं क्षमा[§] ॥

॥ यद् यज्ञेऽभिरूपं तत् समृद्धम् ॥

[¶]उक्तार्थम् ॥

॥ [‡]पतङ्गमक्तमसुरस्य मायया यो नः सनुत्यो अभिदासदग्ने
[||]भवानो अग्ने सुमना उपेताविति द्वे द्वे अभिरूपे ॥

प्रतिप्रतीकं द्वित्वार्था वीप्सा तेन ऋचोऽत्र षट् ॥

॥ यद् यज्ञेऽभिरूपं तद् समृद्धम् ।
[**]कृणुष्व पाजः प्रसितिं न पृथ्वीमिति पञ्च ॥

ऋचः ॥

---

* खरो नाम महावीरसन्तापनप्रक्षालनाद्यर्थं सिकताभिः कल्पितो देश उच्यते। तत्कल्पनं चापस्तम्बसूत्रे—'ततः खरावुपवपति। उत्तरेण गार्हपत्यमेकम् उत्तरेणाहवनीयमेकम्। उत्तरपूर्वं द्वारं प्रत्युच्छिष्टखरं करोति बाह्यतो निर्धेयनवन्तम्।' इति १५-६-२०, २१, २२. तत्प्रमाणं चाह बौधायनः—'प्रादेशमात्रं परिमण्डलम्' इति.
† प्रवर्ग्यहविराश्रयभूतो मृन्मयपात्रविशेषो महावीरः। तन्निर्माणप्रकारश्चापस्तम्बसूत्रे—'संभ्रक्ष्य मृदं मखस्य शिरोऽसीति पिण्डं कृत्वा यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यां निगृह्य महावीरं करोति। त्र्युद्धिं पञ्चोद्धिमपरिमितोद्धिं वा प्रादेशमात्रमूर्ध्वसानुमुपरिष्टादासेचनवन्तं मध्ये संनतं माहव्यप्रकारम्' इति १५-२-१४. ‡ ऋक्सं० ८-२-२१-२. § विनियोगश्चानयोराश्वलायनश्रौतसूत्रे—'संसीदस्व महाँ असीति संसाद्यमाने, अञ्जन्ति यं प्रथयन्तो न विप्रा इत्यज्यमाने' इति ४-६-३. ¶ page 31. ‡ ऋक्सं० ८-८-३५-१. || ऋक्सं० ४-५-७-४. ** ऋक्सं० ३-१-१८-१. †† ऋक्सं० ३-४-२३-१.

ताश्च,

॥ राक्षोघ्न्यः ॥

रक्षःकर्मकहननकार्यप्रतिपादनसमर्थाः । रक्षोहनोऽणि, "*पूर्वेहन्–' इत्यल्लोपः ॥

आसामभिष्टवश्च,

॥ रक्षसामपहत्यै ॥

स्यात् ॥

॥ †परि त्वा गिर्वणो गिरो‡ऽधि द्वयोरदधा उक्थ्यं वचः §शुक्रं ते अन्यद् यजतं ते अन्यद् ¶अपश्यं गोपामनिपद्यमानमिति चतस्र एकपातिन्यः ॥

एकत्वयोगिन्यः§ ॥

॥ ता एकविंशतिर्भवन्ति ॥

ब्रह्मजज्ञाद्यपश्यंगोपामन्ता एकविंशतिः ॥

॥ एकविंशोऽयं पुरुषः ॥

एकविंशतेः पूरणः । ‖'ति विंशतेर्डिति'[1] ।

---

1. 'विंति दश' घ. पाठः

---

* पा॰ सू॰ ६-४-१३५. † ऋक्सं॰ १-१-२०-६. ‡ ऋक्सं॰ १-६-४-३. § ऋक्सं॰ ४-८-२४-१. ¶ ऋक्सं॰ २-३-१०-१, ८-८-३५-३. § 'एकैकस्मिन् प्रतीके एकैकोपाया इत्यर्थः' इति गोविन्दस्वामी. 'एकस्य मन्त्रस्य पातः प्रतीकम् एकपातः, सोऽयं यास्वृक्षु ता एकपातिन्यः । परित्वा गिर्वण इति यत् प्रतीकं तत् संहितायां क्रमेणाम्नातानां चतसृणां प्रतीकमित्याशङ्क्येत चतस्र इति ब्राह्मणेऽभिधानात् । एवमधिद्वयोः शुक्रं ते अपश्यं गोपामिति त्रिषु प्रतीकेषु बह्वोदिवाद् वद्व्याख्यर्थमेकपातिन्य इत्युच्यते । एकैकस्या ऋचः प्रतीकानि मिलित्वा चतस्र इति तात्पर्यार्थः' इति सायणः. ‖ पा॰ सू॰ ६-४-१४२.

कथं,

॥ दश हस्त्या अङ्गुलयः ॥

हस्तयोर्भवाः ॥

॥ दश पाद्याः ॥

अङ्गुलय इत्येव ॥

॥ *आत्मैकविंशः ॥

आत्मा मध्यमः कायः† ॥

॥ तमिममात्मानमेकविंशं संस्कुरुते ॥

संस्कारः फलयोगिता ।

ब्रह्मजज्ञाद्यपञ्चयंगोपेत्यन्तोक्तैकविंशतिः ॥

द्वितीयः खण्डः ।

---

॥ ‡स्रक्के द्रप्सस्य धमतः समस्वरन्निति नव ॥

ऋचोऽभिष्टुयात् ॥

ताश्च,

॥ पावमान्यः ॥

§पवमानगुणस्यैताः सोमस्य प्रतिपादिकाः ॥

नवत्वं स्तौति—

॥ नव वै प्राणाः ॥

नाभेरूर्ध्वं नव प्राणा द्वौ स्तन्यौ सप्त मूर्धनि ॥

---

* 'दश हस्त्या अङ्गुल्यो दश पद्या आत्मैकविंशः' तै० सं० ६-१-१. † 'आत्मा मध्यदेहः जीवात्मा वा' इति सायणः. ‡ ऋक्सं० ७-२-१९-१. § 'पवमानशब्दवन्तः' इति गोविन्दस्वामी. 'पवमानदेवताकाः' इति सायणः.

॥ प्राणानेवास्मिंस्तद् दधाति ॥

होताभिष्टुवन् । तत् तेन नवर्चेन ॥

॥ *अयं वेनश्चोदयत् पृश्निगर्भा इति ॥

अभिष्टुयात् ॥

व्याचष्टे—

॥ अयं वै वेनः ॥

कमनीयो वेन उक्तो वेनतेः कान्तिकर्मणः† ।
‡नाभिचक्रगतः प्राणोऽत्रायंशब्देन कथ्यते ॥

कुत एतद्,

॥ अस्माद्वा ऊर्ध्वा अन्ये प्राणा वेनन्ति ॥

§नाभिस्थादुत्थिता ह्यस्माच्च प्राणाश्चरन्ति‖ वै ।
ऊर्ध्वरूपा एतदिच्छावशेनातोऽस्य वेनता ॥

॥ अवाञ्चोऽन्ये ॥

अस्माद् वेनन्तीत्येव ।

नाभेरधस्ताद्रेतस्यः पुरीष्यो मूत्र्य एव च ।
तेऽप्येतदिच्छासंयुक्ताश्चरन्तीत्यस्य वेनता ॥

वेनन्ति क्रीडायुक्ताश्चरन्ति ॥

निगमयति—

॥ तस्माद् वेनः ॥

---

* ऋक्सं० ७-७-७-१. † या० निघ० २-६. ‡ 'अयं वै नाभिर्वेनः', § 'अस्मान्नाभेः' इति सायणगोविन्दस्वामिनौ. ‖ 'यद्यपि वेनतिः कान्तिकर्मा, तथाप्यत्र गतिकर्माभिप्रेतः' इति गोविन्दस्वामी.

नाभिशब्दं निराह—

॥ प्राणो वा अयं सन्नाभेरिति ॥

उक्तवानिति शेषः। सन् कल्याणः। अयं प्राण उक्तवान् वागादीन प्रति। कथम्। न अभेः अभैषीः। छन्दस्त्वाद् रूपम्।

स्थिते[1] मयि हि वागाद्या न भयं वः कुतश्चन।

अथवायमत्रार्थः—

*ल्यब्लोपे पञ्चमी नाभेर्नाभिं प्राप्य सिराः शुभाः।
अयंसद् बद्धवानेष शिरःपादान्तकं दृढम् ॥
षद्लृ बन्धन इत्यस्माल्लुङ्द्सिच्शवितश्च वै ॥

॥ तस्मान्नाभिः ॥

नाभिप्राप्तेर्नाभिरयं[2] प्राण एवेति गृह्यताम् ॥

॥ तन्नाभेर्नाभित्वम् ॥

ततश्च,

प्राणमेवास्मिंस्तद् दधाति ॥

†उक्तार्थम् ॥

॥ ‡पवित्रं ते विततं ब्रह्मणस्पते §तपोष्पवित्रं विततं दिवस्पते
वियत्पवित्रं धिषणा अतन्वतेति तिस्रोऽभिष्टुयात् ॥

वियदादिः सूत्रपठिता¶ ॥

१. 'स्तुते', २. 'नाभिरियं' ब. पाठः।

* पा० सू० वा० २-३-२८. † page 122. ‡ ऋक्सं० ७-३-८-१. § ऋक्सं० ७-३-८-२. ¶ आ० श्रौ० सू० ४-६-३.

॥ पूतवन्तः ॥

त्रयो मन्त्राः पूतवन्तः पूञ्धातूत्थपदान्विताः ॥

॥ प्राणास्त इमेऽवाञ्चः ॥

ते त्रयो मन्त्राः अवाक्प्राणस्थितिकारिणः ॥

अवाचः प्राणानाह—

॥ रेतस्यो मूत्र्यः पुरीष्य इति ॥

रेतःपुरीषमूत्रेभ्यस्तत्र साधुर्यदुच्यते[*] ॥

॥ एतानेवास्मिंस्तद् दधाति ॥

तत् तेन पूतवत्त्रिकेण ।

स्रकादिवियदन्तास्तु त्रयोदश ऋचः खलु ॥

तृतीयः खण्डः ।

---

॥ [†]गणानां त्वा गणपतिं हवामह इति ब्राह्मणस्पत्यम्[‡] ॥

एकाच्च[1]विंशत्यृचकमिदं सूक्तमभिष्टुयात् ॥

॥ ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनं तद् भिषज्यति ॥

उक्तार्थम्[§] ॥

---

१. 'एकोन' च. पाठः.

---

* पा० सू० ४-४-९८. † ऋक्सं० २-६-२९-१. ‡ 'गणानामेकोना ब्राह्मणस्पत्यं तु बार्हस्पत्यास्तु द्वालिङ्गाः पञ्चदश्यन्त्ये त्रिष्टुभौ' इति सर्वानुक्रमणी मं० २ सू० २३. § page 121.

॥ *प्रथश्च यस्य सप्रथश्च नामेति ॥

तृचं सूक्तमभिष्टुयात् ॥

एताश्च,

॥ घर्मतन्वः ॥

घर्मस्य तन्व इत्येवं विद्यात् तिस्र इमा ऋचः ॥

ततश्च,

॥ सतनुमेवैनं तत् सरूपं करोति ॥

सतनुपदस्य व्याख्यानं सरूपमिति ॥

अत्रास्ति,

॥ †रथंतरमाजभारा वसिष्ठो भरद्वाजो बृहदाचक्रे अग्नेरिति ॥

आद्योपाद्यऋचोरन्त्यौ पादौ तु पठितावियौ ॥

॥ बृहद्रथंतरवन्तमेवैनं तत् करोति ॥

एनं घर्मम् । तत् तेन, बृहद्रथंतरवचनेन ॥

॥ ‡अपश्यं त्वा मनसा चेकितानमिति ॥

तृचं सूक्तमभिष्टुयात् ॥

॥ प्रजावान् प्राजापत्यः ॥

---

* ऋक्सं० ८-८-३९-१. † 'प्रथर्थैकर्चाः प्रथो वासिष्ठः सप्रथो भारद्वाजो घर्मः सौर्यो वैश्वदेवम्' इति सर्वानुक्रमणी म० १० सू० १८१. ‡ ऋक्सं० ८-८-४१-१.

*प्रजापतिसुतो नाम्ना प्रजावान् दृष्टवानिदम् ॥

॥ प्रजामेवास्मिंस्तद् दधाति ॥

तत् ततो हेतोः ।

अत्रान्वृचं यष्टृपत्नीहोतृरूपसमीक्षणम् ।
†अपश्यं त्वेत्येतस्येति सूत्रकारः खलूक्तवान् ॥

॥ ‡का राधद्धोत्राश्विना वामिति नव ॥

अभिष्टुयात् ॥

ताश्च,

॥ विच्छन्दसः ॥

नानाच्छन्दस्काः । 'गायत्र्यानुष्टुभौष्णिहा ऋचाः विराड्बृहती कृतिर्विराट् तिस्रो गायत्र्य' इति हि सर्वानुक्रमणी§ ॥

॥ तदेतद् यज्ञस्यान्तस्त्यम् ॥

अन्तश्शब्दात् त्यप्¶ । अन्तर्भवम् ॥

॥ विक्षुद्रमिव वा अन्तस्त्यमणीय इव च स्थवीय इव च ॥

✠नानारूपक्लृप्तमध्यं कुर्यादि त्वमितः शुभम् ।
इवैव नाना वि क्षुद्रं किञ्चिद्विवरणं परम् ॥

---

* 'अपश्यं प्रजावान् प्राजापत्योऽन्वृचं यजमानपत्नीहोत्राशिष' इति सर्वानुक्रमणी म० १० सू० १८३. † 'अपश्यं त्वेत्येतस्याद्यया यजमानमीक्षते द्वितीयया पत्नीं तृतीययात्मानम्' इति आ० श्रौ० सू० ४-६-२. ‡ ऋक्सं० १-८-२२-१. § म० १ सू० १२०. इयमानुपूर्वी मुद्रितसर्वानुक्रमण्यां यद्यपि न दृश्यते, तथाप्यस्मद्ग्रन्थशालास्थतालपत्रमातृकायां दृश्यत एव. ¶ पा० सू० ४-२-१०४. ✠ 'शरीरेऽपि विक्षुद्रं विविधक्षुद्रमेवान्तस्त्यम्' इति गोविन्दस्वामी. 'लोकेऽप्यन्तस्त्यं शरीरमध्यस्थावयवजातं विक्षुद्रमिव वै विविधत्वेन तारतम्येन स्वल्पमेव भवति' इति सायणः.

॥ तस्मादेता विच्छन्दसो भवन्ति ॥

स्तौति—

॥ एताभिर्ह्याश्विनोः कक्षीवान् प्रियं धामोपागच्छत् ॥

धाम स्थानम् ॥

॥ स परमं लोकमजयत् ॥

स कक्षीवान् । जयतिर्वशीकरणार्थः ॥

॥ उपाश्विनोः प्रियं धाम गच्छति । जयति परमं लोकं य एवं वेद ॥

*'व्यवहिताश्च' । उपगच्छति । सोऽपि ॥

॥ †आभात्यग्निरुषसामनीकमिति सूक्तम् ॥

अभिष्टुयात् पञ्चर्चम् ॥

अत्रास्ति,

॥ पीपिवांसमाश्विना घर्ममच्छेति ॥

एतच्च,

॥ अभिरूपम् ॥

घर्मश्रवणात् ॥

॥ यद् यज्ञेऽभिरूपं तत् समृद्धं तदु त्रैष्टुभम् ॥

उ पुनः । तदाभातीयम् ॥

---

* पा० सू० १-४-८२. † ऋक्सं० ४-४-१७-१.

॥ वीर्यं वै त्रिष्टुप् ॥

*स्रष्टौ वीर्यवत्क्षत्रसम्बन्धात् ॥

॥ वीर्यमेवास्मिंस्तद् दधाति ॥

तत् तेन त्रिष्टुप्त्वेन ॥

॥ †ग्रावाणेव तदिदर्थं जरेथे इति सूक्तम् ॥

अष्टर्चमभिष्टुयात् ॥

अत्र च सन्ति,

॥ अक्षी इव कर्णाविव नासेवेति च ॥

'अक्षी इव चक्षुषा यातमर्वाक्' । 'कर्णाविव सुश्रुता भूतमस्मे । नासेव नस्तन्वोरक्षितारा' इति ॥

॥ अङ्गसमाख्यायमेवास्मिंस्तदिन्द्रियाणि दधाति ॥

ल्यबर्थे णमुलि युक् । ‡अङ्गानि सम्यगाख्याय गणयित्वा । तत् तत्र ॥

॥ तदु त्रैष्टुभम् । वीर्यं वै त्रिष्टुब्वीर्यमेवास्मिंस्तद् दधाति । §ईळे द्यावापृथिवी पूर्वचित्तय इति सूक्तम् ॥

पञ्चविंशत्यृचमभिष्टुयात् ॥

---

* 'उरसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवतान्वसृज्यत त्रिष्टुप्छन्दो बृहत् साम राजन्यो मनुष्याणामवि: पशूनां तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त' इति तै० सं० ७-१-१. † ऋक्सं० २-८-४-१. ‡ 'अङ्गसमाख्यायम् अङ्गवाचिशब्दवत्त्वमस्मिन् सूक्ते यस्माद् भवति' इति गोविन्दस्वामी. § ऋक्सं० १-७-३३-१.

अत्रास्ति,

॥ अग्निं घर्मं सुरुचं यामन्निष्टय इति ॥

एतच्च,

॥ अभिरूपम् । यद् यज्ञेऽभिरूपं तत् समृद्धम् । तदु जागतम् ॥

न पुनः ।

अन्त्ययोस्त्रैष्टुभत्वेऽपि भूम्ना जागतमुच्यते ।

'ईळे पञ्चाधिकाश्विनमाद्यौ पादौ लिङ्गोक्तदेवतावन्त्ये त्रिष्टुभौ' इति हि सर्वानुक्रमणी* ॥

॥ †जागता वै पशवः पशूनेवास्मिंस्तद् दधाति ॥

तत् तत्र ॥

अत्र च बहुकृत्वोऽस्ति,

॥ याभिरमुमावतं याभिरमुमावतमिति ॥

याभिरूतिभिरेनं तु प्राप्तवन्तौ युवां पुरा ।
अश्विनौ ताभि[1]रेवेह सम्यगागच्छतं त्विति[2] ॥

॥ एतावतो ह्यत्राश्विनौ कामान् ददृशतुः ॥

कामान् काम्यान् श्रद्धेयान् आत्मभक्तरक्षणरूपान् । अत्र सूक्तेऽभिष्टूयमाने ददृशतुः । अहो नूनमेताभ्यामेव कृतमिति ॥

॥ तानेवास्मिंस्तद् दधाति ॥

१. 'अश्विनावाभि' ख. पाठः. २ 'त्विह' क. पाठः.

* ऋ० १ सू० ११२. † 'सा पशुभिश्च दीक्षया चागच्छत् तस्माज्जगती छन्दसां पशव्यतमा' (तै० सं० ६-१-६) इति पशूनां जागतत्वम्.

स्पष्टयति—

॥ तैरेवैनं तद् समर्धयति ॥

एनं यजमानं संपद्युक्तं करोति ॥

॥ *अरूरुचदुषसः पृश्निरग्रिय इति ॥

चतुर्विंश्याः परमिमां प्रागन्त्याया अभिष्टुयात् ।

सूत्र्यते हि—†'ईळे द्यावापृथिवी इति प्रागुत्तमाया अरूरुचदुषसः पृश्निरग्रिय इत्यावपेत' इति[1] ॥

इयं च,

॥ रुचितवती ॥

रुचिधातुमती यस्माद् रुचेर्धातोररूरुचत् ॥

॥ रुचमेवास्मिंस्तद् दधाति ॥

रुग् दीप्तिः ॥

॥ ‡द्युभिरक्तुभिः परिपातमस्मानित्युत्तमया परिदधाति ॥

सूक्तान्त्यया पञ्चविंश्याभिष्टुवंस्त्रिः समापयेत् ॥

अस्यामस्ति,

॥ अरिष्टेभिरश्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौरिति ॥

---

1. 'प्रागुत्तमाया इत्यादिना इयं च' घ. ङ. पाठः.

---

* ऋक्सं० ७-३-८-३. † आ० श्रौ० सू० ४-६-३. ‡ ऋक्सं० १-७-३०-५.

एवञ्च,

॥ एतैरेवैनं तत् कामैः समर्धयति ॥

तत् तत्र । एनं यजमानम् । एतैरङ्ग्यादिभिर्देवैर्दत्तैः कामैः सौभाग्यादिभिः । समर्धयति सम्यग्वर्धयति होता ।

ब्रह्मादिषुभिरन्ताः स्युर्ऋचः सप्तोत्तरं शतम् ॥

॥ इति नु पूर्वं पटलम् ॥

नु खलु ।

अभिष्टवाद्यं पटलमेवं संवर्णितं खलु ।
'पटलं दृग्रुक्छदिषोः क्ली न ना पिटके गणे'[1] ॥

इति हि निखण्टुः* ।

†आयान्त्यात्रित्वसिद्ध्यर्थं पटलद्वितयं कृतम् ।
अन्यथाभिष्टवस्यैक्यात् त्रित्वं तत्रैव वै भवेत् ॥

चतुर्थः खण्डः ।

---

॥ अथोत्तरम् ॥

पटलमित्येव । वक्ष्यत इति शेषः । ऋगावानमभिष्टुयादिति च ।

---

१. 'पटलं गणः । आयान्त्या' घ, ङ. पाठः.

---

* वैजयन्ती (अक्षरकाण्डे नानालिङ्गाध्याये श्लो० ५२.) † षड्गुरुशिष्यीया चेयं कारिका 'अत एवोक्तम्' इति नामनिर्देशमन्तरा सायणभाष्ये पठ्यते.

आरम्भोऽस्य तदाध्वर्युर्यदा घर्मदुघां ह्वयेत् ।
अत्राद्यां त्रिर्नैव कुर्यादभिहिंकारमञ्जसा ॥

सूत्र्यते हि—[*]'उपविष्टेष्वध्वर्युर्घर्मदुहामाह्वयति' इत्यादि[1] ।

॥ [†]उपह्वये सुदुघां धेनुमेतां [‡]हिङ्कृण्वती वसुपत्नी वसूना-[§]मभि त्वा देव सवितः [¶]समीवत्सं न मातृभिः [$]संवत्स इव मातृभि[||]र्यस्ते स्तनश्शशयो यो मयोभू[‡‡]र्गौरमीमेदनुवत्सं मिषन्तं [**]नमसेदुपसीदत [†]संजानाना उपसीदन्नभिज्ञु [*]आदशभि-र्विवस्वते [§]दुहन्ति सप्तैकाम् ॥

इत्यृच एकादश ॥

॥ [¶]समिद्धो अग्निरश्विना [$]समिद्धो अग्निर्वृषणा रतिर्दिवः ॥

[||]सूत्रपठिते एते ॥

॥ [‡‡]तदु प्रयक्षतममस्य कर्म [**]त्वमन्वग्नभो दुह्यते घृतं पय
[††]उत्तिष्ठ ब्रह्मणस्पते ॥

---

१. 'उपविष्टेष्वध्वर्युरित्यादि' क. पाठः.

---

[*] 'उपविष्टेष्वध्वर्युर्घर्मदुघामाह्वयति स संप्रैष उत्तरस्य अनभिहिंकृत्य' इति आ॰ श्रौ॰ सू॰ ४-७-२, ३. [†] ऋक्सं॰ २-३-१९-१. [‡] ऋक्सं॰ २-३-१९-२. [§] ऋक्सं॰ १-२-१३-३. [¶] ऋक्सं॰ ७-५-७-२. [$] ऋक्सं॰ ७-५-८-२. [||] ऋक्सं॰ २-३-२३-३. [‡‡] ऋक्सं॰ २-३-१९-३. [**] ऋक्सं॰ ६-७-३७-१. [†] ऋक्सं॰ १-५-१७-५. [*] ऋक्सं॰ ३-५-१५-३. [§] ऋक्सं॰ ६-५-१५-२. [¶], [$] अथर्वसं॰ ७-७३-२, १. [||] आ॰ श्रौ॰ सू॰ ४-७-४. [‡‡] ऋक्सं॰ १-५-२-१. [**] ऋक्सं॰ ७-२-३१-४. [††] ऋक्सं॰ १-३-२०-१.

शेषोऽत्र सूत्र उक्तः स्यादेतामुक्त्वावतिष्ठते ॥

॥ *अधुक्षत् पिप्युषीमिषम् ॥

दुग्धायामिति शेषः ॥

॥ †उपद्रव पयसा गोधुगोषम् ॥

आह्रियमाण इति शेषः ॥

॥ ‡आ सुते सिञ्चत श्रियम् ॥

आसिच्यमानेऽजाक्षीर एतामृचमभिष्टुयात् ॥

॥ §आ नूनमश्विनोर्ऋषिः ॥

आसिच्यमाने गोक्षीर एतामृचमभिष्टुयात्[1] ॥

॥ ¶समुद्रे महतीरपः ॥

अभिष्टुयादृचं त्वेतामासिक्ते तु पयोद्वये ॥

॥ इत्येकत्रिंशतिरभिरूपाः ॥

ऋचः ॥

---

१. 'गोक्षीर इति शेषः समुद्रे' प. ३. पाठः

---

* ऋक्सं० ६-५-१७-१. † अथर्वसं० ७-७७-६. ‡ ऋक्सं० ६-५-१६-१. § ऋक्सं० ५-८-३०-१. ¶ ऋक्सं० ५-८-२२-२. ॥ तथा चाश्वलायनश्रौतसूत्रम्— 'उत्तिष्ठ ब्रह्मणस्पत इत्येतामुक्त्वावतिष्ठते दुग्धायामधुक्षत् पिप्युषीमिषमित्याह्रियमाण उपद्रव पयसा गोधुगोषमघर्मे सिञ्च पय उस्रियायाः । वि नाकमख्यत् सविता वरेण्यो नु यायार्चिषा सुप्रणीतिरित्यासिच्यमान आ नूनमश्विनोर्ऋषिरिति गव्य आ सुते सिञ्चत श्रियमित्याज आसिक्तयोः समुद्रे महतीरप इति' इति ४-७-४.

॥ यद् यज्ञेऽभिरूपं तत् समृद्धम् ।
*उदुष्य देवः सविता हिरण्ययेत्यनूत्तिष्ठति ॥

उत्तिष्ठत्सु महावीरमादायैतामभिष्टुयात् ॥

॥ †प्रैतु ब्रह्मणस्पतिरित्यनुप्रैति ॥

गच्छतोऽनुव्रजेच्चैनानेतामृचमभिष्टुवन् ॥

॥ ‡गन्धर्व इत्था पदमस्य रक्षतीति खरमवेक्षते ॥

यत्र देशे महावीरः सादितः स खरो मतः ।
अभिष्टुवंस्तु गन्धर्व इति वै खरमीक्षते[1] ॥

॥ §नाके सुपर्णमुपयत्पतन्तमित्युपविशति ॥

¶अभिष्टुवन्निमामन्त्यप्रणवेन विशेद् भुवि ॥

अथ घर्मस्य यजेति प्रेषितः,

॥ ‖तप्तो वां घर्मो नक्षति स्वहोता**भा पिबतमश्विनेति पूर्वाह्णे यजति ॥

††'तप्तो वामि'ति सूत्रपठिता‡‡ । उभाभ्यामनवानमिति शेषः ॥

---

१. 'खरमीक्षताम्' क. पाठः.

---

* ऋक्सं० ५-४-५-१. † ऋक्सं० १-३-२०-३. ‡ ऋक्सं० ७-३-८-४. § ऋक्सं० ७-३-११-५. ¶ 'महावीरमादायोत्तिष्ठन्नुदुष्य देवः सविता हिरण्ययेत्यनूत्तिष्ठेत् । प्रैतु ब्रह्मणस्पतिरित्यनुव्रजेत् । गन्धर्व इत्था पदमस्य रक्षतीति खरमवेक्ष्य तमतिक्रम्य नाके सुपर्णमुपयत्पतन्तमिति समाप्य प्रणवेनोपविशेदनिरस्य तृणम्' इति आ० श्रौ० सू० ४-७-४. ‖ अथर्वसं० ७-७३-५. ** ऋक्सं० १-३-३५-५. ‡‡ 'प्रेषितो यजति तप्तो वां घर्मो नक्षति स्वहोता प्र वामध्वर्युश्चरति प्रयस्वान् । मधोर्दुग्धस्याश्विना तनाया वीतं पातं पयस उस्रियायाः । उभा पिबतमश्विनेति चोभाभ्यामनवानमग्ने वीहीत्यनुवषट्कारो घर्मस्याग्ने वीहीति वा' आ० श्रौ० सू० ४-७-४.

॥ *अग्ने वीहीत्यनुवषट्करोति ॥

एतच्च,

॥ स्विष्टकृद्भाजनम् ॥

स्विष्टकृत्स्थानीयं स्यात् ॥

॥ †यदुस्रियास्वाहुतं घृतं पयो‡ऽस्य पिबतमश्विने-
त्यपराह्णे यजति ॥

यदुस्रियेति सूत्रपठिता§ । उभाभ्यामनवानम् ॥

॥ अग्ने वीहीत्यनुवषट्करोति स्विष्टकृद्भाजनम् ॥

पूर्ववत् ॥

स्तौति—

त्रयाणां ह वै हविषां स्विष्टकृते न समवद्यन्ति सोमस्य घर्मस्य वाजिनस्येति स यदनुवषट्करोत्यग्नेरेव स्विष्टकृतोऽनन्तरित्यै ॥

अनन्तरयोऽविच्छेदः[1] ॥

॥ ¶विश्वा आशा दक्षिणसादिति ब्रह्मा जपति ॥

---

1. 'अनन्तरतो विच्छेदः' क. पाठः.

---

* 'आश्राव्य प्रत्याश्राविते संप्रेष्यति घर्मस्य यजेति । अश्विना घर्मं पातमिति वषट्कृते जुहोति । व्यहेन्द्रावडित्यनुवषट्कृते' इति आप० श्रौ० सू० १५-१०-११. † अथर्वसं० ७-७३-४. ‡ ऋक्सं० ५-८-३-४. § 'एवमेवापराह्णिके यदुस्रियास्वाहुतं घृतं पयोऽयं स वामश्विना भाग आगतं माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं सोम्यं मधु । अस्य पिबतमश्विनेति च' आ० श्रौ० सू० ४-७-४. ¶ तै० आ० ४-९-२.

*सूत्रपठितेयम् । ब्रह्मा वषट्कृते जपत्यनुवषट्कृते च ॥

अथानुवषट्कृत्य होताभिष्टुयात्—

॥ †स्वाहाकृतः शुचिर्देवेषु घर्मः ॥

सूत्रपठितेयम्‡ ॥

॥ §समुद्रादूर्मिमुदियर्ति वेनो ||द्रप्सः समुद्रमभि यज्जिगाति ।
|||सखे सखायमभ्याववृत्स्व ॥

एषार्धर्चत्रयोपेता धृतिर्वर्णा द्विसप्ततिः¶ ॥

॥ ‡ऊर्ध्व ऊ षु ण ऊतय ‡ऊर्ध्वो नः पाह्यंहसः §तं घेमित्था नमस्विनः ॥

'अर्धचिद्'त्तरार्धर्चा प्रागाथे मण्डले स्थिता ।
पूर्वाह्णेऽथ कण्वदृष्टा 'होत्राभी'त्युत्तराधिका ॥

‡'प्रागाथीं पूर्वाह्णे काण्वीमपराह्णे' इतिहि[1] सूच्यते ॥

---

1 'काण्वीमित्यादि' क पाठः.

---

* 'ब्रह्मा वषट्कृते जपत्यनुवषट्कृते च विश्वा आशा दक्षिणसाद् विश्वान् देवानयाडिह । स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विनेति' आ० श्रौ० सू० ४-७-४. † अथर्वसं० ७-७३-३. ‡ आ० श्रौ० सू० ४-७-४. § ऋक्सं० ८-७-७-२. || ऋक्सं० ८-७-८-३. ||| ऋक्सं० ३-४-१२-३. ¶ 'गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतयः चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि' सर्वा० परि० ३. ‡ ऋक्सं० १-३-१०-३. ‡ ऋक्सं० १-३-१०-४. § ऋक्सं० ३-५-७-७, १-३-९-२. ‡ आ० श्रौ० सू० ४-७-४.

॥ इत्यभिरूपाः ॥

ऋचः ॥

॥ यद् यज्ञेऽभिरूपं तत् समृद्धम् ॥

*पावकशोचे तव हि क्षयं परीति भक्षमाकाङ्क्षते ॥

इत्यभिष्टुत्य भक्षयिच्छेदित्यर्थः ॥

॥ †हुतं हविर्मधु हविरिन्द्रतमेऽग्नावश्याम ते देव घर्म । मधुमतः पितुमतो वाजवतोऽङ्गिरस्वतो नमस्ते अस्तु मा मा हिंसीरिति घर्मस्य भक्षयति ॥

भक्षजपोऽयं घर्मस्य ॥

एकादश[1]मथाभिष्टुयात्—

॥ ‡श्येनो न योनिं सदनं धिया कृतं§मा यस्मिन्त्सस वासवा इति संसाद्यमानायान्वाह ॥

सूत्रपठितेयं चेति शेषः । अभिष्टुवन्नेव घर्मं च संसादयेदित्यर्थः ॥

॥ ¶हविर्हविष्मो महि सद्म दैव्यमिति यदहरुत्सादयिष्यन्तो भवन्ति ॥

यदहः यस्मिन्नहनि घर्मोत्सादनं करिष्यन्ति तत्रान्त्यप्रवर्ग्ये हविर्हविष्म इत्यभिष्टुयात् ।

---

१ 'एकदेश' इ पाठः

---

* ऋक्सं० २-८ १८-१ † तै० आ० ४ १०-५ ‡ ऋक्सं० ७-२-२६-१. § तै० सं० १-३-१२ ¶ ऋक्सं० ७-३-८-५.

'उत्तमे प्रागुत्तमाया हविरि'त्यादि सूत्र्यते* ॥

॥ †सूयवसाद् भगवती हि भूया इत्युत्तमया परिदधाति ॥

सदोत्तरं[1] पटलम् । ‡सूयवसेति त्रिरुक्तया[2] समापयेत् ।
ऋचोऽत्र पटले षद् च त्रिंशचान्त्येऽधिका हविः ॥

स्तौति—

॥ तदेतद् देवमिथुनं यद् घर्मः ॥

यद्य यः ।

स्त्रीपुंसयुगळं देवनिर्मितं कर्म घर्म यत् ॥

कथं,

॥ स यो घर्मस्तच्छिश्नम् ॥

स प्रसिद्धो महावीरः शिश्नरूपमिहेष्यताम्[3] ॥

॥ यौ शफौ तौ शफौ ॥

महावीरघट्टनार्थौ शफावौदुम्बरौ हि यौ ।
तौ प्रसिद्धौ शफौ भेदौ ज्ञेयौ भगवतावुभौ ॥

॥ योपयमनी ते श्रोणिकपाले ॥

योदुम्बरोपयमनी महावीरोपधानकम् ।
ते श्रोणिफलके योनिमभितस्तूरुमूलके ॥

---

1. 'सदोत्तमं' ख. ङ. पाठः. २. 'त्रिरुत्तमया'. ३. 'रूपमिहोच्यतां' क. पाठः.

---

* आ० श्रौ० सू० ४-७-५. † ऋक्सं० २-३-२१-५. ‡ 'सूयवसाद् भगवती हि भूया इति परिदध्यात्' आ० श्रौ० सू० ४-७-४.

॥ यत् पयस्तद् रेतः ॥

पयो गव्यमाजमपि सुशृतं रेत इष्यताम् ॥

॥ तदिदमग्नौ देवयोन्यां प्रजनने रेतः सिच्यते ॥

महावीरपयोऽग्निष्ठं भगस्थं रेत इष्यताम् ॥

॥ अग्निर्वै देवयोनिः ॥

देवानां प्रियकरत्वात् ॥

॥ सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भवति ॥

स यजमानः । भिसर्थे भ्यस् । सम्भवो जन्म ॥

॥ ऋङ्मयो यजुर्मयः साममयो वेदमयो ब्रह्ममयोऽमृतमयः
सम्भूय देवता अप्येति य एवं वेद ॥

ऋग्यजुस्साममन्त्रात्मा* चतुर्वेदात्मकस्तथा ।
देवा इन्द्रादयो †ब्रह्म त्वमृतं परमं पदम् ॥
सम्भूतिर्दीपनं प्राप्तिरप्ययो वेदितुस्त्विदम् ॥

॥ यश्चैवं विद्वानेतेन यज्ञक्रतुना यजते ॥

यज्ञेन घर्मेण । क्रतुना कृत्नः क्रतुः, साधुकारिणा । सोऽपि यजमानो देवता अप्येत्यृङ्मयादि भवन् ।

चत्वारिंशच्चतस्रश्च ऋचः शतमभिष्टवे ॥

पञ्चमः खण्डः ।

---

* 'वेदशब्देनाथर्ववेदः सर्ववेदसमष्टिर्युक्तिर्वोच्यते' इति सायणः. 'वेदमय इति पूर्वोक्तानुवादः आथर्वणाद्युपलक्षणार्थो वा' इति गोविन्दस्वामी. † 'ब्रह्मशब्देन हिरण्यगर्भः' इति सायणः.

उक्त्वा प्रवर्ग्यमुपसत्कर्म वक्तुमथो कथाम् ।
[*]पौराणिकीं ब्रवीत्यत्र सम्यगेव प्ररोचयन्—

॥ देवासुरा वा एषु लोकेषु समयतन्त ॥

[†]उक्तार्थम् ॥

॥ ते वा असुरा इमानेव लोकान् पुरोऽकुर्वत ॥

इमान् पृथिव्यादीन् । पुरो नगरीः ॥

दृष्टान्तयति—

॥ यथौजीयांसो बलीयांस एवम् ॥

ओजो दीप्तिर्बलं वीर्यं तद्वन्तोऽसन्त उद्धताः ।
प्रद्राव्य साधूंस्तत्स्थाने प्रासादादीन् प्रकुर्वते ॥
एवमेतेऽपि[1] विद्राव्य देवांश्चक्रुः पुरत्रयम् ॥

कथं,

॥ [‡]ते वा अयस्मयीमेवेमामकुर्वत ॥

पृथिवीं नगरीं चक्रुरयसा निर्मितां दृढाम् ॥
[§]'अयस्मयादीनि—' इति मत्वम् ॥

---

१. 'एवमेते च' घ पाठः, 'एवमेव च' ङ. पाठः.

---

* तदुक्तं महाभारते कर्णपर्वणि ३३–अध्याये—
“देवानामसुराणां च परस्परजिगीषया । बभूव प्रथमो राजन् सङ्ग्रामस्तारकामयः ।
..............................................................................................
ततो मयः स्वतपसा चक्रे धीमान् पुराणि च । त्रीणि काञ्चनमेकं वै रौप्यं कार्ष्णायसं तथा ।
काञ्चनं दिवि तत्रासीदन्तरिक्षे च राजतम् । आयसं चाभवद् भौमं चक्रस्थं पृथिवीपते ॥”
इत्यादि. (Printed at Gopalnarayan & Co. Bombay). † page 93.
‡ 'तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाथ रजताथ हरिणी' इति तै० सं० ६-२-३. § पा० सू० ४-३-१४३.

॥ रजतामन्तरिक्षम् ॥

अकुर्वतेत्येव । रजतां राजतीम् । 'विकारेऽञो'[1] लुक्* ।
　स्वलोकनगरीं सम्यग् रजतेन विनिर्मिता ॥

॥ हरिणीं दिवम् ॥

अकुर्वतेत्येव ।
　ते चक्रुः स्वर्गनगरीं तप्तकाञ्चननिर्मिताम् ।
　हिरण्मयीं हेममयीं हरिणीति विदुर्बुधाः ॥
निगमयति—

॥ ते तथेमाँल्लोकान् पुरोऽकुर्वत ॥

　पुरत्रयात्मना दैत्यैरेवं लोकत्रये कृते ॥

॥ ते देवा अब्रुवन् ॥

कथम्,

॥ पुरो वा इमेऽसुरा इमाँल्लोकानक्रत ॥

अक्रत अकृषत ।
　'मन्त्रे घसेति लुक् च्लेस्तु मन्त्वं छन्दःप्रदर्शनम् ॥

॥ पुर इमाँल्लोकान् प्रतिकरवामहा इति ॥

पुरो नगरीः । करवामहै लोटो महिङ् आट्[†] । प्रतिकुर्मः ॥

॥ तथेति ॥

निश्चयं चक्रुरिति शेषः ॥

॥ ते सद एवास्याः प्रत्यकुर्वत ॥

---

1. 'विकारेऽणो' ष. पाठः.

---

* पा० सू० ७-३-११४. † पा० सू० ३-४-८०.

भूपुरःप्रति[1] निधित्वेन सदोदेशं प्रचक्रिरे ।

*'प्रतिः प्रतिनिधि—' इति कर्मप्रवचनीयत्वम् । †'प्रतिनिधिप्रतिदाने च यस्माद्' इति पञ्चमी ॥

॥ आग्नीध्रमन्तरिक्षात्[2] ॥

ते प्रत्यकुर्वतेत्येव । खपुर्याः प्रतिनिधिराग्नीध्रः ॥

॥ हविर्धाने दिवः[3] ॥

ते प्रत्यकुर्वतेत्येव ।

स्वःपुर्यास्तु प्रतिनिधिं हविर्धाने प्रचक्रिरे ॥

निगमयति—

॥ ते तथेमाल्लोँकान् पुरः प्रत्यकुर्वत ॥

‡इमान् सदआग्नीध्रहविर्धानाख्यान् लोकान् वासदेशान् । पुरः भ्यसो ङसिः । पूर्भ्यः भूखपुर्भ्यः । इति कृतस्थानेषूषित्वा ॥

॥ §ते देवा अब्रुवन् ॥

कथम्,

॥ उपसद उपायाम ॥

एतेर्लृटो लोट् मम् । आट् सलोपः ।

उपसत्संज्ञकान् यागान् करिष्यामस्त्वतः परम् ॥

---

१. 'भुवः प्रति', २. 'अन्तरिक्षात् । खपुर्याः', ३. 'दिवः । स्वःपुर्यास्तु' ष. पाठः.

---

* पा० सू० १-४-९२. † पा० सू० २-३-११. ‡ प्राचीनवंशात् पूर्वभावि मण्डपं सदः, सोमे महावेदेरुत्तरार्धे प्रवारनिचतुरस्रस्थानविशेष आग्नीध्रम्, हविर्धाने इति शकटद्वयनाम. § 'ता देवा नेतुं नाशक्नुवन् ता उपसद्भिवाजिगीषन् तस्मादाहुर्यश्चैवं वेद यश्च नोपसदा वै महापुरं जयन्तीति' इति तै० सं० ६-२-३.

कुत एतत्,

॥ उपसदा वै महापुरं जयन्तीति ॥

स्म शुश्रुमेति शेषः।

*उपसद्भिर्जयन्ति स्म शत्रूणां नगरं महत्।
पुरेति शुश्रुम वयमतः कार्योपसत्त्विति॥

॥ तथेति ॥

निश्चयं चक्रुः॥

अथ,

॥ ते यामेव प्रथमामुपसदमुपायंस्तयैवैनानस्माल्लोकादनुदन्त ॥

एनानसुरान्। अनुदन्त अद्रावयन्॥

॥ यां द्वितीयां तयान्तरिक्षात् ॥

उपायंस्तयानुदन्तेत्येव॥

॥ यां तृतीयां तया दिवः ॥

पूर्ववत्॥

निगमयति—

॥ तांस्तथैभ्यो लोकेभ्योऽनुदन्त ॥

तान् दैत्यान्॥

॥ ते वा एभ्यो लोकेभ्यो नुत्ता असुरा ऋतूनश्रयन्त ॥

नुत्ताः द्राविताः। वसन्तायानृतून्॥

---

* 'लोकेपूपसदा वै परकीयदुर्गसमीपावस्थानेन दुर्गान्तरोपरूपेणैव' इति सायणः.

॥ ते देवा अब्रुवन्नुपसद एवोपायामेति ॥

एव पुनः ॥

॥ *तथेति त इमास्तिस्रः सतीरुपसदो द्विर्द्विरेकैकामुपायन् ॥

पूर्वाह्णापराह्णभेदेन द्वित्वम् ॥

॥ ताः षट् समपद्यन्त । षड्वा ऋतवः । तान्वा ऋतुभ्योऽनुदन्त ॥

तान् असुरान् ॥

॥ ते वा ऋतुभ्यो नुत्ता असुरा मासानश्रयन्त ॥

ततः,

॥ ते देवा अब्रुवन्नुपसद एवोपायामेति । तथेति त इमाः षट् सतीरुपसदो द्विर्द्विरेकैकामुपायन् । ता द्वादश समपद्यन्त । द्वादश वै मासाः ॥

चैत्राद्याः ॥

॥ तान् वै मासेभ्योऽनुदन्त । ते वै मासेभ्यो नुत्ता असुरा अर्धमासानश्रयन्त । ते देवा अब्रुवन्नुपसद एवोपायामेति । तथेति त इमा द्वादश सतीरुपसदो द्विर्द्विरेकैकामुपायन् ।

---

* 'तिस्र उपसद उपैति त्रय इमे लोका इमानेव लोकान् प्रीणाति षट् संपद्यन्ते षड् वा ऋतवः ऋतूनेव प्रीणाति द्वादशाहीने सोम उपैति द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणाति चतुर्विंशतिः संपद्यन्ते चतुर्विंशतिरर्द्धमासा अर्द्धमासानेव प्रीणाति' इति तै० सं० ६-२-३. 'राजक्रयाग्रहःसंख्यानैकाहानां तिस्रः, षड् वा, अहीनानां द्वादश चतुर्विंशतिः संवत्सर इति सत्राणाम्' इति आ० श्रौ० सू० ४-८-१३, १४, १५. 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति आप० श्रौ० सू० ११-४-५.

ताश्चतुर्विंशतिः समपद्यन्त । चतुर्विंशतिर्वा अर्धमासाः । तान् वा अर्धमासेभ्योऽनुदन्त । ते वा अर्धमासेभ्यो नुत्ता असुरा अहोरात्रे अश्रयन्त । ते देवा अब्रुवन्नुपसदावेवोपायामेति । तथेति ते यामेव पूर्वाह्ण उपसदमुपायंस्तयैवैनानह्नोऽनुदन्त यामपराह्णे तया रात्रेः* ॥

उपायन्ननुदन्तेत्येव ॥

एवं देवाः,

॥ तांस्तथोभाभ्यामहोरात्राभ्यामन्तरायन् ॥

निरसोऽर्थेऽन्तर् । इण् अन्तर्णीतण्यर्थः । निरगमयन्[1] ॥

॥ †तस्मात् सुपूर्वाह्ण एव पूर्वयोपसदा प्रचरितव्यम् ॥

प्रचरणमनुष्ठानम् ॥

॥ स्वपराह्णे परया ॥

तस्मात् प्रचरितव्यमित्येव[2] ॥

॥ तावन्तमेव तद् द्विषते लोकं परिशिनष्टि ॥

---

१. 'निरगमयन् । इदानीमपि । तस्मात्' क. पाठः. २. 'प्रचरितव्यम् । तावन्तमेव' ग. पाठः.

---

* 'देवा वै याः प्रातरुपसद उपासीदन्नह्नस्ताभिरसुरान् प्राणुदन्त याः सायं रात्रिस्ताभिर्यद् सायं प्रातरुपसद उपसद्यन्तेऽहोरात्राभ्यामेव तद् यजमानो भ्रातृव्यान् प्रणुदते'.

† 'सुपूर्वाह्णे स्वपराह्णे च' इति आ० श्रौ० सू० ४-८-१२. 'सुपूर्वाह्णे पौर्वाह्णिकीभ्यां प्रचर्योपसद्भ्यां चरन्ति, स्वपराह्ण आपराह्णिकीभ्याम्' इति आप० श्रौ० सू० ११-४-१.

तौ पूर्वाह्णापराह्णकालौ* । एव पुनः । द्विषते । ङसो ङे । शत्रोः । तत् तत्र । परिशिनष्टि गमयति । अन्तं नाशम् । लोकं सर्वैर्लोकयं दृश्यम् । सुपूर्वाह्णापराह्णयोरुपसदौ कुर्वन्नायुर्नाशात् तत्कालहीनं शत्रुं करोतीत्यर्थः ।

कथाख्येन[1] प्रसङ्गेन प्रोक्ता उपसदस्त्विति[2] ।
तिस्रः षड् द्वादश तथा चतुर्विंशतिरेव च ॥

षष्ठः खण्डः ।

---

अथोपसदः स्तौति—

॥ जितयो वै नामैता यदुपसदः ॥

यद् याः । जेः करणे क्तिन् । जयहेतुत्वाद् आसां नाम ॥

कुत एतत् ,

॥ असपत्नां वा एताभिर्देवा विजितिं व्यजयन्त ॥

†'विपराभ्यां जेः' इति तङ् । वै यस्मात् । असपत्नां नष्टशत्रुकाम् ॥

1. 'कथाख्याने', 2. 'उपसदस्त्विह' क. पाठः.

* इह तावन्तमिति तावच्छब्दोऽभिमतः सायणगोविन्दस्वामिनोः. तथाच तद्व्याख्या— 'तावन्तमेव कालं तद् द्विषते सन्ध्यामात्रमेव' इति गोविन्दस्वामी. 'यस्मात् पूर्वाह्णापराह्णौ कालविशेषावहोरात्राभ्यां शत्रूणां निस्सारणे हेतू तस्मात्तद्विभेव कालद्वये-ऽनुष्ठातव्यम् । एवं सति यावानहोरात्रयोः सन्धिकालस्तावन्तमेव द्विषते द्वेषिणे लोकं स्थानविशेषं परिशिनष्टि । इतरस्मात् कालान्निस्सारितत्वेन सन्ध्याकाल एवासुराणां परिशिष्यते' इति सायणः. † पा॰ सू॰ १-३-१९.

विदुषः फलमाह—

॥ असपत्नां विजितिं विजयते य एवं वेद ॥

सः । एवमासां जितिरिति नाम ॥

किञ्च,

॥ यां देवा एषु लोकेषु यामृतुषु यां मासेषु यामर्ध-
मासेषु यामहोरात्रयोर्विजितिं व्यजयन्त तां विजितिं विजयते
य एवं वेद ॥

सः । विजितिं विजयं[1] विजयते लभते ॥

अत्रान्तरे संस्थितायामातिथ्येष्टौ प्रवर्ग्यतः ।
प्राक्[2] तानूनप्त्रकर्म तदाह कथया सह—

॥ ते देवा अबिभयुः ॥

ते प्रसिद्धाः । *"सिजभ्यस्त—" इति झेर्जुस् । †"जुसि च" इति गुणः । भीतवन्तः ॥

कथम्,

॥ अस्माकं विप्रेमाणमन्विदमसुरा आ भविष्यन्तीति[3] ॥

‡"प्रियस्थिर—" इति प्रः । इमनिजन्तः पुमान् । विप्रेमाणं विरुद्धत्वम् । इदं जगत् । आङ् अभ्यर्थः । अभिभविष्यन्ति । अनु लक्षीकृत्य ॥

भयनिवृत्तये,

1. 'विजयनं', 2. 'प्रागग्रहात्' क. पाठः, 3. 'आभविष्यन्तीति । अनु विप्रेमाणं' ख. क. पाठः,

* पा० सू० ३-४-१०९. † पा० सू० ७-३-८३. ‡ पा० सू० ६-४-१५७.

॥ ते व्युत्क्रम्यामन्त्रयन्त ॥

ते चिन्तितभयकाः उत्क्रम्य गुप्तं देशं प्राप्य वि नानापक्षभेदेन मन्त्रणं चक्रुः कुर्युः ॥

कथम्,

॥ अग्निर्वसुभिरुदक्रामत् ॥

मन्त्रार्थं गुप्तदेशं तु गतोऽग्निर्वसुभिः सह ॥

॥ इन्द्रो रुद्रैः ॥

पूर्ववत् ॥

॥ *वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैः[1] ॥

वस्वादित्यरुद्राद्याश्च †पूर्वं प्रोक्तास्तु नामभिः ।
विश्वेदेवाश्च नाम्नोक्ता भारतेऽर्जुनजन्मनि ॥
"क्रतुर्दक्षः सवः सत्यः कालः काम्यो धुनिस्तथा ।
कुरुमाणुद्भमांश्चैव रोचमानश्च ते दश ॥
विश्वेदेवा इति ख्यातास्तस्यासन् जन्मनि स्थिताः" ॥ इति ॥

---

१. 'विश्वैर्देवैः । पूर्वोक्तैः । निगमयति ' ग. ङ. पाठः.

---

* इह तैत्तिरीयसंहितायां पञ्चधा व्युत्क्रमणमाम्नातम् । यथा—' देवासुराः संयत्ता आसन्ते देवा मिथो विप्रिया आसंस्तेऽन्योन्यस्मै ज्यैष्ठ्यायातिष्ठमानाः पञ्चधा व्यक्रामन्नग्नि-र्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैः ' इति ६-२-२.
† page 68.

निगमयति—

॥ *ते तथा व्युत्क्रम्यामन्त्रयन्त तेऽब्रुवन् ॥

मन्त्रवाक्यम्[1] ॥

मन्त्ररूपमाह—

॥ हन्त या एव न इमाः प्रियतमास्तन्वस्ता अस्य वरुणस्य राज्ञो गृहे सन्निदधामहै ॥

†हन्तेत्यभिमुखीकरणे ।

वयं घोराणि रूपाणि गृहीत्वा शत्रुनुत्तये ।
वरुणस्य गृहे देहान्‡ प्रियांस्तु निदधामहे ॥

धात्रो लोटो महिङ्। आट् ।

जित्वा शत्रून् पुनस्तानि रूपाणीह[2] लभेमहि ॥

किञ्च,

॥ ताभिरेव नः स न सङ्गच्छातै यो न एतदतिक्रामाद्य आलुलोभयिषादिति ॥

यः नोऽस्माकं मध्ये एतत् समयकरणम्[3]अतिक्रामात् । एत आत् । अतिक्रामेदेति शेषः । आलुलोभयिषात् । आलोभो भ्रमः ।

---

१. 'मन्त्रणवाक्यम्', २. 'रूपाणि हि', ३. 'समयकारिण' क. पाठः.

---

* 'तेऽमन्यन्तासुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामो यन्मिथो विप्रियाः स्मो या न इमाः प्रियास्तनुवस्ताः समवद्यामहै ताभ्यः स निर्ऋच्छाद्यो नः प्रथमोऽन्योन्यस्मै द्रुह्यादिति तस्माद्यः सतानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्च्छति यत्तानूनप्त्रं समवद्यति भ्रातृव्याभिभूत्यै' इति तै० सं० ६-२-२. † 'हन्तेति मनोहर्षः' इति गोविन्दस्वामी. 'स्वकार्यहानिनिमित्तदुःखपरिहारोपायदर्शननिमित्तहर्षद्योतनार्थो हन्तशब्दः', ‡ अस्माकमत्यन्तं प्रिया याः पुत्रकलत्रादिरूपास्तन्वः सन्ति ताः सर्वाः' इति सायणः.

मोदयितुमिच्छेत् । लुभेर्णिचः सनो लिङ् । एत आत् । आलुलोभयिषेद्वा । स ताभिस्तनूभिः प्रियाभिर्न सङ्गच्छातै न सङ्गच्छताम् । लोटो लेट् । आट् । *'एत ऐ' । †'समो गम्यृच्छि—' इति तङ् । भ्रमकारिणोऽतिक्रान्तसमयस्य च प्रियतन्वलाभो दण्ड[1] इत्यर्थः ॥

॥ तथेति ॥

पूर्ववत् ॥

॥ ते वरुणस्य राज्ञो गृहे तनूः संन्यदधत ॥

सं सह । ‡'श्नाभ्यस्तयोरातः' । §'अदभ्यस्तात्' । लङ् । तनूर्देहान् ॥

॥ ते यद् वरुणस्य राज्ञो गृहे तनूः संन्यदधत तत् तानूनप्त्रमभवत् । तत् तानूनप्त्रस्य तानूनप्त्रत्वम्[2] ॥

वरुणाख्या । तनूनप्त्रोऽणि तानूनप्त्रम्¶ ।

$आज्यस्पर्शपूर्वकं हि सख्यमृत्विकृतं त्विदम् ।

दधिद्रप्सप्राशनेन त्यागो यस्य हि सूत्र्यते—

---

१. 'ऐ । वैतोऽन्यत्र । समो' क. पाठः. २. 'दण्डः । तथेति', ३. 'तानूनप्त्रत्वम् । आज्यं' घ. ङ. पाठः.

---

* पा० सू० ३-४-९३. † पा० सू० १-३-२९. ‡ पा० सू० ६-४-११२. § पा० सू० ७-१-४. ¶ 'तनूः न पाति इत्यस्मिन्नर्थे तानूनप्त्रशब्दो वर्तते । तत् तानूनप्त्रं शरीररक्षणमित्यर्थः । 'प्राणो वै तनूनपात् स हि तन्वः पाति' (ऐ०ब्रा० ६-४)इति लिङ्गात् । नञो निषेधनानार्थता नास्ति (?) ' इति गोविन्दस्वामी. 'तनूनां पुत्रादिशरीराणां नप्त्रे न (नपतः? पतन)मतिशयितं निमित्तीकृत्य क्रियमाणत्वादस्य कर्मणस्तानूनप्त्रं नाम सम्पन्नम्' इति सायणः. $ 'आज्यं तानूनप्त्रं करिष्यन्तोऽभिमृशन्ति' आ० श्रौ० सू० ४-५-३. 'आतिथ्यायाः ध्रौवात् स्रुचि चमसे वा तानूनप्त्रं समवद्यति चतुरवत्तं पञ्चावत्तं वा । आपतये त्वा गृह्णामीत्येतैः प्रतिमन्त्रमनाधृष्टमसीति यजमानसप्तदशा ऋत्विजस्तानूनप्त्रं समवमृशन्ति । अनु मे दीक्षामिति यजमानः' इति आप० श्रौ० सू० ११-१-१, २, ३. 'तनूनपात्संबन्धात् तानूनप्त्रमित्याज्यसमाख्या येनर्त्विजः सख्यमुपगच्छन्ति' इति तत्र भट्टरुद्रदत्तः.

*'दधिद्रप्सान् प्राश्य सख्यानि विसृजन्त' इति । शब्दप्रवृत्तिनिमित्तं चैतदेव ॥

॥ तस्मादाहुर्न स तानूनप्त्रिणे द्रोग्धव्यमिति ॥

सः । भिसः सुः । तैं ऋत्विग्भिः । †तानूनप्त्रिणे ऋत्विजे । ‡'क्रुधद्रुह—' इति ङे । द्रोग्धव्यमित्याहुर्यज्ञविदः ॥

॥ तस्माद्विदमसुरा नान्वाभवन्ति ॥

§तस्मात् तथाहि । उ पुनः ।

दैत्या जगन्न बाधन्ते[1] तानूनप्त्रबलात् खलु ।

इति ।

आतिथ्यधर्ममध्यस्थं तानूनप्त्रमितीरितम् ॥

सप्तमः खण्डः ।

---

आतिथ्योपसदां तुल्यं बर्हिरित्यथ कथ्यते—

॥ §शिरो वा एतद् यज्ञस्य यदातिथ्यं ग्रीवा उपसदः ॥

---

१. 'खलु । इत्यादिधर्मं' क. पाठः.

---

* आ० श्रौ० सू० ६–१२–१२. † सतानूनप्त्रिण इत्येकपदं मन्वाते सायणगोविन्दस्वामिनौ. तथाच तद्याख्या—'सतानूनप्त्रिणे सहविश्वासकारिणे पुरुषाय' इति गोविन्दस्वामी. 'सतानूनप्त्रिणे सहशपथकारिणे । देवसंबन्धिशपथविशेषवाचिना तानूनप्त्रशब्देन शपथमात्रमुपलक्ष्यते । बहुभिः सह क्रियमाणं तानूनप्त्रं यस्यास्ति सोऽयं सतानूनप्त्री' इति सायणः. ‡ पा० सू० १-४-३७. § 'तस्मादु तस्मादेव कारणात्', ¶ 'नान्वाभवन्ति नैव समन्तात् प्राप्नुवन्ति' इति सायणः. § 'शिर इव शिरः । प्रथमभावित्वादातिथ्यस्य शिरःसंस्तवः । उपसदां ग्रीवया एवं तदनुभावित्वात्' इति गोविन्दस्वामी.

ततः किं,

॥ समानबर्हिषी भवतः ॥

*आतिथ्यायास्तु यद् बर्हिस्तदेवोपसदां भवेत् ॥

कथं,

॥ समानं हि शिरोग्रीवम् ॥

[1]प्राण्यङ्गत्वादेकवत्त्वम्† ॥

॥ ‡इषुं वा एतां देवाः समस्कुर्वत यदुपसदः ॥

यद् याः । भिसोऽम्, एताभिः§ ।

उपसद्भिः शरं देवा दैत्यैर्युद्धाय चक्रिरे ।
¶सम्पर्युपेति सु‡डिपेः क्रियेत्युरक्षीषुः कथम् ॥

॥ ‖तस्या अग्निरनीकमासीत् सोमः शल्यः ॥

आसीदित्येव ॥

॥ विष्णुस्तेजनं वरुणः पर्णानि ॥

अग्रो[2]ऽनीकमयः शल्यस्त्वय यष्टिश्च तेजनम्¥ ।
पुङ्खबन्धानि[3] पर्णानि शरस्त्वेवं चतुर्विधः ॥

---

१. 'प्राण्यङ्गत्वादेकत्व' घ. पाठः २. 'अग्रे' क. पाठः ३. 'पुङ्खबद्धानि' घ. क. पाठः.

---

* 'आतिथ्याबर्हिरुपसदामग्नीषोमीयस्य च तदेव प्रस्तरपरिधि यद् स्तीर्णं बर्हिस्तत्-परिधि ताः परिधय इति श्लोके' इति आप०श्रौ०सू० ११-९-११,१२. † पा०सू० २-४-२. ‡ 'त इषुं समस्कुर्वताग्निमनीकं सोमं शल्यं विष्णुं तेजनम्' इति तै० सं० ६-२-३. § 'एताम् अग्न्यादिरूपाम्' इति सायणः. ¶ पा० सू० ६-१-१३७. ‡ उणादि० १-१२. ‖ 'कालो हि भगवान् रुद्रस्तस्य संवत्सरो धनुः । तस्माद् रौद्री कालरात्रिर्ज्या कृता धनुषोऽजरा । इषुश्चाप्यभवद् विष्णुर्ज्वलनः सोम एव च ।' इति महाभारते कर्णपर्वणि त्रिपुरवधोपाख्याने. अ० ३४. (Printed at Gopalnarayan & Co. Bombay). ¥ 'लोहस्य तीक्ष्णमग्रं तेजनम्' इति सायणः.

॥ तामाज्यधन्वानो व्यसृजन् ॥

आज्यरूपे धनुषि तामिषुं सन्धाय ते सुराः।
दैत्यान् प्रत्यक्षिपन्नत्र *धनुषश्चेत्यनङ् कृतः ॥
प्रसङ्गादुपसत्कर्मण्याज्यं हविरितीरितम् ॥

॥ तया पुरो भिन्दन्त आयन् ॥

तयेष्वा दैत्यनगरीं भिन्दन्तो जग्मुरुद्धताः ॥

॥ तस्मादेता आज्यहविषो भवन्ति ॥

एताः उपसदः। तस्माद्

अग्निसोमविष्णुशरघृतचापसमन्वयात् ॥

अथोपसद्व्रतक्षीरपरिमाणं ब्रवीति ह—

॥ चतुरोऽग्रे †स्तनान् ‡व्रतमुपैत्युपसत्सु ॥

कुतः,

॥ चतुस्सन्धिर्हीषुः ॥

कथम् ,

॥ अनीकं शल्यस्तेजनं पर्णानि । त्रीन्स्तनान्
व्रतमुपैत्युपसत्सु । त्रिषन्धिर्हीषुः ॥

कथम् ,

॥ अनीकं शल्यस्तेजनम् ॥

नात्र पर्णानि ॥

---

* पा० सू० ५-४-१३३. † 'स्तनशब्देनात्र यावद्दुग्धो गोः स्तनसम्बन्धीनि पयांस्यभिप्रेतानि' इति गोविन्दस्वामी. ‡ 'व्रतशब्देनात्र पयःपानमुच्यते। गोश्चतुर्षु स्तनेषु यावत् पयस्तावत्' इति सायणः.

॥ द्वौ स्तनौ व्रतमुपैत्युपसत्सु द्विषन्धिर्हीषुः
शल्यश्च ह्येव तेजनं च ॥

नात्रानीकपर्णे ॥

॥ एकं स्तनं व्रतमुपैत्युपसत्सु । एका ह्येवेषुरित्याख्यायते ॥

किञ्च,

॥ एकया वीर्यं क्रियते ॥

*'कुर्यादुपसदां कालं चतुर्मात्र क्रमेण च' ।
चतुस्त्रिद्व्येकस्तनजक्षीरेण व्रतमाचरेत् ॥

सूत्र्यते हि—†'व्यतिनीय कालमुपसदां चतुर्थमेकस्या दुग्धेन तावदेव त्रिभिः स्तनैस्तावदेव द्वाभ्यामेकेन तावदेव' इति ॥

अथैतत् स्तौति—

॥ परोवरीयांसो वा इमे लोका अर्वागंहीयांसः ॥

परसिति परपर्यायः । अंहित्यल्पपर्यायः ।

स्वर्गादूनं खं ततोऽपि न्यूनं भूमण्डलं त्विति ।
लोकाः परस्ताद् बहुला अधोध[2]श्चाल्परूपकाः ॥
‡[1]उरोरंहोरीयसुनि परुरोश्च टिलोपवत् ॥

---

१. 'वु', २. 'अधोगा' क. पाठः.

---

* 'चतुरः सायं दुग्धुक्षीन् प्रातर्द्वौ सायमेकमुत्तमे' इति आप० श्रौ० सू० ११-४-१०.
† आ० श्रौ० सू० १२-८-३०, ३१ ‡ पा० सू० ६-४-१५७.

ततश्च,

॥ परस्तादर्वाचीरुपसद उपैति ॥

चतुस्त्रिद्व्येकस्तनत्वादल्पताभूत् परात्परम् ॥

एतच्च,

॥ [*]एषामेव लोकानामभिजित्यै ॥

अभिजितिः प्राप्तिः ॥

अत्र च,

॥ [†]उपसद्याय मीह्लुष [‡]इमां मे अग्ने समिधमिमामुपसदं वनेरिति तिस्रस्तिस्रः सामिधेन्यो रूपसमृद्धाः ॥

[§]उपेतितिस्रः पूर्वाह्ण इमांतिस्रोऽपराह्णिके[1] ॥

॥ एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृगभिवदति ॥

उपसद्यायोपसदमित्युक्तेरभि[2]रूपता ॥

प्रधानानामाह—

॥ जग्निवतीर्याज्यानुवाक्याः कुर्यात् ॥

---

१. 'अपराह्णतः' क. पाठः. २. 'इत्युक्ता साभि' ख. पाठः.

---

* 'परोवरीयसोमवान्तरदीक्षामुपेयाद् यः कामयेतामुष्मिन् लोकेऽर्धुकं स्यादिति चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षामुष्मिन्नेवास्मै लोकेऽर्धुकं भवति' इति तै० सं० ६-२-३. † ऋक्सं० ५-२-१८-१. ‡ ऋक्सं० २-५-२७-१.
§ 'उपसद्याय मीह्लुष इति तिस्र एकैका त्रिरनवानन्ताः सामिधेन्यः । एवैवापराह्णे इमां मे अग्ने समिधमिमामिति तु सामिधेन्यः' इति आ० श्रौ० सू० ४-८-५, १०, ११.

जघ्निशब्दो वेदविद्भिर्हिंसावाची प्रवर्णितः[1] ।
हिंसावाचिपदयुक्ताः ॥

ताश्च,

॥ *अग्निर्वृत्राणि जङ्घनद् †य उग्र इव शर्यहा ‡त्वं सोमासि सत्पतिर्§गयस्फानो अमीवहे¶दं विष्णुर्विचक्रमे ‖त्रीणि पदा विचक्रम इत्येताः ॥

अग्नेर्द्वे द्वे च सोमस्य द्वे विष्णोरित्यृचस्तु षट् ।
पूर्वाह्ण एताः ॥

॥ विपर्यस्ताभिरपराह्णे यजति ॥

य उग्रो अग्निर्वृत्राणीत्यग्नेः । गयस्फानस्त्वं सोमासीति सोमस्य । त्रीणि पदेदं विष्णुरिति[2] विष्णोः । इत्यपराह्णे‡ इत्यर्थः ॥

स्तौति—

॥ घ्नन्तो वा एताभिर्देवाः पुरो भिन्दन्त आयन् यदुपसदः ॥

यद् याः । एताभिरुपसद्भिः । घ्नन्तो हिंसन्तः ॥

किञ्च ताः,

॥ सच्छन्दसः कर्तव्याः ॥

---

१. 'प्रवर्तितः' क पाठः. २. 'विष्णुर्वीति' ख. ङ. पाठः.

---

* ऋक्सं० ४-५-२७ ४. † ऋक्सं० ४-५-२८-४. ‡ ऋक्सं० १-६-१३-५. § ऋक्सं० १-६-२१-२. ¶ ऋक्सं० १-२-७ २. ‖ ऋक्सं० १-२-७-३. ‡ 'विपर्यासो याज्यानुवाक्यानाम्' इति आ० श्रौ० सू० ४-८-११. 'याः प्रातर्याज्याः स्युस्ताः सायं पुरोनुवाक्याः कुर्यादयातयामत्वाय' इति तै० सं० ६-२-३.

एता हि तुल्यच्छन्दस्काः षड् गायत्र्य इमाः खलु ॥

स्पष्टयति—

॥ न विच्छन्दसः ॥

विर्नाना ॥

नानाच्छन्दस्त्वं[1] निन्दति—

॥ यद् विच्छन्दसः कुर्याद् ग्रीवासु तद् गण्डं दध्यात् ॥

यद् यदि । चुबुकादधो गण्डः* स्यात् ॥

ततश्च,

॥ ईश्वरो ग्लावो जनितोः ॥

†ग्लौस्तोदः । शम् । तोदान् जनयितुं समर्थः स्यात् ।

सिरानिष्कर्षजस्तोदो विच्छन्दस्त्वे भवेदिह ॥

निगमयति—

॥ तस्मात् सच्छन्दस एव कर्तव्या न विच्छन्दसः ॥

उक्तमर्थं पूर्वशिष्टवाक्येन द्रढयत्यथ—

॥ तदु ह स्माहौपाविर्जानश्रुतेय‡ उपसदां किल वै तद् ब्राह्मणे ॥

---

१ 'नानाच्छन्दस्तु' क. पाठः.

---

* 'निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले । महान् वा यदि वा ह्रस्वस्तं गण्ड इति निर्दिशेत् ॥' इति सुश्रुते निदा० अ० १२. † 'ग्लावो जनितुमीश्वरो भवति । ग्लावो हर्षक्षयः शोक इत्यनर्थान्तरम् । द्वितीयाबहुवचनान्तं वैतद् ग्लाव इति । तदा जनयितुमिति योज्यम्' इति गोविन्दस्वामी. 'ग्लानिविशेषान्' इति सायणः.
‡ शतपथब्राह्मणे मैत्रायणीसंहितायां च दक्षिदौपाविर्जानश्रुतेयः पठ्यते.

किल पुरा। कश्चिदुपसद्ब्राह्मणे[1] जानश्रुतेयः *जनश्रुतपुत्रः। †शुभ्रादिढक्। उपाविर्नामाचार्यः । तत् तत्र। तद् उक्तमर्थरूपम्। उ पुनः[2]। ह खलु आह स्म उक्तवान् ॥

कथमुक्तवान्,

॥ यस्मादप्यश्लीलस्य श्रोत्रियस्य मुखं व्येव ज्ञायते तृप्तमिव रेभतीवेत्याज्यहविषो ह्युपसदो ग्रीवासु मुखमध्याहितम् ॥

'ग्रीवा उपसद' ‡इत्युक्तम्। आज्यहविष उपसदो ग्रीवासु स्थिताः। ग्रीवात्वेन स्थिताः। तासु च मुखं चुबुकोपरिगतगण्डमेवा[3]ध्याहितम्। §'आशंसायां भूतवच्च'। उपरि निधातव्यम्‖। यस्मादेवं तस्मादेव लोकेऽपि अश्लीलस्य निःश्रीकस्य। ‖कपिलकादित्वाल्लत्वम्। ¶मत्वर्थे लच्। श्रोत्रियस्य छन्दोध्ययनसम्पन्नस्य अपिच मुखं §तृप्तमिव हर्षयुक्तं रेभति। रेभिः शब्दार्थः। शब्दायते। विज्ञायते उपलभ्यते।

एतद्धि तुल्यच्छन्दस्त्वं मुखरोगनिवृत्तये ।
लोकस्य स्यादित्युपाविराचार्यो ह्युक्तवान् पुरा ॥

निगमयति—

॥ तस्माद्ध स्म तदाह ॥

१. 'कश्चिदुपसदां ब्राह्मणे' ङ. पाठः. २. 'पुनः आह स्म उक्तवान् यस्माद्' घ. ङ. पाठः. ३. 'गण्डकमेवा' क. पाठः.

* 'जनश्रुतायाः स्त्रिया अपत्यम्' इति सायणः. † पा० सू० ४-१-१२३. ‡ page 155. § पा० सू० ३-३-१३२. ‖ 'लोकेऽपि शोभमानासु ग्रीवासु अध्याहितम् आश्रितम्' इति सायणः. ‖ भा० वा० ८-२-१८. ¶ पा० सू० ५-२-९७. § दृप्तमिवेति गोविन्दस्वाम्यभिमतः पाठः. तथाच तद्व्याख्या—'दृप्तमिव दर्पयुक्तमिव, रेभतीव जल्पतीव अर्चतीव वा। एतदुक्तं भवति—यस्मादश्लीलस्यापि श्रोत्रियस्य मुखं शोभते वेदाभ्यासदर्पात् तस्मादाज्यहविष उपसदः कर्तव्याः; आज्यमपि मुखशोभाहेतुर्यस्मात्' इति.

*तत् तस्मात् ह खलु आह स्म । कः,

महिदासैतरेयः स्यादनिर्दिष्टे तु वक्तरि । इत्युक्तम्† ।
इत्येवं स्थापितं तुल्यच्छन्दस्त्वमुपसत्स्विह ॥

अष्टमः खण्डः ।

---

अथ लोपं प्रयाजादेरुपसत्सु ब्रवीति ह—

॥ देववर्म वा एतद् यत् प्रयाजाश्चानुयाजाश्च ॥

‡प्रयाजानूयाजकर्म कवचं देवनिर्मितम् ॥

ततः किम्,

॥ अप्रयाजमननुयाजं भवति ॥

उपसत्कर्म । सूत्र्यते हि§—' स्विष्टकृदादि लुप्यते प्रयाजा आज्यभागौ च ' इति ॥

एतच्च प्रयाजाद्यकरणम्,

॥ इष्वै संशित्यै ॥

इस्रो ङे । इष्वाः शरस्य संशित्यै तैक्ष्ण्याय ।

¶शाच्छोरन्यतरस्यामिच्छो तनूकरणे क्तिनि ।
इषोरुपसदां तैक्ष्ण्यमेवं हि स्यादकुण्ठितम् ॥

---

* 'तस्मात् कारणादृषिरेवमाह स्म' इति गोविन्दस्वामी. 'तस्मात् कारणात् शोभनमीवादितमुखसाम्यमाज्यहविष्कत्वमित्यभिप्रेत्य स ऋषिस्तद् वाक्यमाह' इति सायणः.
† page 74. ‡ 'यत् प्रयाजानूयाजा इज्यन्ते वर्मैव तद् यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै' इति तै० सं० २-६-१. § आ० श्रौ० सू० ४-८-६.
¶ पा० सू० ७-४-४१.

वर्मचर्माभिहनने स्याच्छरस्य तु कुण्ठता* ॥

तच,

॥ अप्रतिशराय ॥

अप्रतिघाताय। 'शॄ हिंसायाम्'। भावे †'ऋदोरप्'। तादर्थ्ये ङे ॥

अत्र च,

॥ सकृदतिक्रम्याश्रावयति ॥

सूत्र्यते ह्यापस्तम्बेन‡—'ग्रीवादघ्नौ जुह्वौ गृह्णाति । चतुरुपभृति । घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्त उपांशुयाजवत् प्रचरति । अर्धेन जौहवस्याग्निं यजत्यर्धेन सोमम् । औपभृतं जुह्वामानीय विष्णुमिष्ट्वा प्रत्याक्रम्य' इत्यादि ॥

आश्रावणं त्रिः करिष्यन् सकृत् कुर्यादतिक्रमम्[1] । इत्यर्थः ॥

एतच,

॥ यज्ञस्याभिक्रान्त्यै ॥

व्याचष्टे—

॥ अनपक्रमाय ॥

---

१. 'कुर्यादभिक्रमम्' च. पाठः.

---

* 'उपसदाख्यं कर्म प्रयाजानुयाजरहितं कर्तव्यं कवचस्यानुपयुक्तत्वात् । परकीयप्रहाराद् रक्षार्थं हि कवचं सम्पाद्यते । नात्र परप्रहारः सम्भवति । पूर्वोक्ताया इषोस्तीक्ष्णत्वेन सकृत् प्रयोगादेव मारितेषु शत्रुषु प्रहर्तॄणामभावात् । एवं सति यदि कवचं सम्पाद्यते तदानीं स्वकीयाया इषोरतीक्ष्णत्वं शङ्क्येत । स्वस्य च शत्रुभिः सम्पादिता प्रतिहिंसा शङ्क्येत । तथाचोक्तं तस्मादियं संशितं स्वकीयस्य बाणस्य सम्यक्तीक्ष्णत्वार्थम् अप्रतिशराय स्वेषु शत्रुकर्तृकप्रतिहिंसायाः शङ्कापरिहारार्थं च प्रयाजानुयाजवर्जनं युक्तम्' इति सायणः. † पा० सू० ३-३-५७. ‡ श्रौ० सू० ११-३-९, १०, ११, १२.

स्वीकारः स्यादभिक्रान्तिः* परित्यागस्त्वपक्रमः[1] ॥

अथ सोमाप्यायनं तु हेतुयुक्तं ब्रवीति ह—

॥ तदाहुः क्रूरमिव वा एतत् सोमस्य राज्ञोऽन्ते चरन्ति ॥

अन्ते समीपे। क्रूरं दुःसहम् ॥

किं तत्,

॥ यदस्य घृतेनान्ते चरन्ति ॥

कुत एवं,

॥ †घृतेन हि वज्रेणेन्द्रो वृत्रमहन् ॥

इन्द्रो हि वृत्रं हतवान् वज्रेणैतद् घृतस्तुतिः।

इति क्रूरत्वमुक्तम् ॥

तच्छान्तिमाह—

॥ तद्यदंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाप्याययास्मान् सखीन् सन्या मेधया स्वस्ति ते देव सोम सुत्यामुदृचमशीयेति

---

१. 'स्त्वभिक्रमः' ख. पाठः.

---

* 'अभिक्रान्त्यै अभिक्रमणाय भवति अनभिक्रान्तश्च नातिदूरं गतः। प्रयाजानुयाजानामनुष्ठाने सकृदभिक्रमणे चोपसर्पणः शीघ्रमनुष्ठितो भवतीत्यर्थः' इति गोविन्दस्वामी. 'उभयपक्षस्य सर्वत आक्रमणं भवति स्वैर्य भवति। अन्यथा पुनः पुनरुत्तरस्यां दिशि गमने लब्धावसरः सन् यज्ञोऽप्यपक्रामेत्' इति सायणः. † 'घृतं वै देवा वज्रं कृत्वा सोममघ्नन् अन्तिकमिव खलु वा अस्यैतच्चरन्ति यत्तानूनप्त्रेण प्रचरन्ति' इति तै० सं० ६-२-२.

राजानमाप्याययन्ति यदेवास्य तत् क्रूरमिवान्ते चरन्ति तदेवास्यैतेनाप्याययन्ति* ॥

तत् तत्र । आप्यायनमुदकसेकः । आप्याययन्ति यत् शमयन्ति तत् ॥

न केवलं शान्तिरेव,

॥ अथो एनं वर्धयन्त्येव ॥

एनं सोमम् ॥

अथ निह्नवमाह—

॥ द्यावापृथिव्योर्वा एष गर्भो यत् सोमो राजा ॥

यद् यः ॥

ततः किं,

॥ तद् यदेष्टा राय एष्टा वामानि प्रेषे भगाय । ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति प्रस्तरे निह्नवते द्यावापृथिवीभ्यामेव तन्नमस्कुर्वन्ति[1] ॥

तत् तत्र ।

†निह्नवः प्रस्तरे पाण्योर्निधानमिति वै विदुः ।
'प्रस्तरे पाणीनि'त्यादि स्वरूपं ह्यस्य सूत्र्यते‡ ॥

---

१. 'नमस्कुर्वन्ति । निह्नवः' ख. ङ. पाठः.

---

* 'मदन्तीरुपस्पृश्य तानूनप्त्रिणो विस्रस्य राजानं साहिरण्यैः पाणिभिराप्याययन्ति अंशुरंशुस्ते देव सोमाप्यायतामिति' इति आप० श्रौ० सू० ११-१-११. † निह्नवो नमस्कारः. ‡ 'स्पृष्ट्वोदकं निह्नवन्ते प्रस्तरे पाणीन् निधायोत्तानान् दक्षिणान् सव्यानीच एष्टा राय एष्टा वामानि प्रेषे भगाय ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति' इति आ० श्रौ० सू० ४-५-७. 'अथ निह्नुवते दक्षिणे वेद्यन्ते प्रस्तरं निधाय दक्षिणान् पाणीनुत्तानान् कृत्वा सव्यानीच एष्टा रायः प्रेषे भगायेति' इति आप० श्रौ० सू० ११-१-१२.

*'ह्रस्यात्' । शपो लुङ् न । तद् तेन निह्नवेन ॥

॥ अथो एने वर्धयन्त्येव वर्धयन्त्येव ॥

एने द्यावापृथिव्यौ द्वे । द्विरुक्तिरुक्तार्था† ॥

नवमः खण्डः ।

इति षड्गुरुशिष्यविरचितायां सहिदासैतरेयब्राह्मणवृत्तौ
सुखप्रदायां[1] चतुर्थोऽध्यायः ॥

---

## अथ पञ्चमोऽध्यायः ।

सोमक्रयणमारभ्य यावदग्निः प्रणीयते ।
तावद्वक्तुमुपांशुत्वमितिहासं ब्रवीत्यथ—

॥ ‡सोमो वै राजा गन्धर्वेष्वासीत् ॥

पुरा गन्धर्वलोके वै सोमो राजा बभूव ह ॥

॥ तं देवाश्च ऋषयश्चाभ्यध्यायन् ॥

§'ऋत्यकः' ॥

---

१. 'इति ब्राह्मणवृत्तौ सुखप्रदायां' क. ख., 'इति षड्गुरुशिष्येण विरचितायां ब्राह्मणव्याख्यायां' घ. ङ. पाठः.

---

* पा० सू० ७-१-५. † page 44. ‡ 'स्वानभ्राजेत्याह । एते वा अमुष्मिन् लोके सोममरक्षन्', 'तं सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्' इति तै० सं० ६-१-१०, ६-१-६. § पा० सू० ५-१-१२८.

देवर्षयस्तं गन्धर्वलोकस्थं समचिन्तयन् ॥

चिन्तास्वरूपमाह—

॥ कथमयमस्मान् सोमो राजागच्छेदिति ॥

प्रतीति शेषः । आगच्छेत् ॥

एवं स्थिते,

॥ सा वागब्रवीत् ॥

सा प्रसिद्धेत्यर्थः ॥

कथं,

॥ *स्त्रीकामा वै गन्धर्वाः ॥

काम इच्छा स्त्रीषु येषां ते स्त्रीकामा इहोदिताः ।
कामयन्ते स्त्रिय इति †शीलिकामादिणोऽपिवा ॥
कमेः कर्मणि घञ् काम्या स्त्री येषामिति वा भवेत् ॥

ततश्च,

॥ मयैव स्त्रिया भूतया पणध्वमिति ॥

पणध्वं व्यवहरत ।

तेभ्यो दत्त्वा स्त्रियं मां तु सोममानेतुमर्हथ ॥

॥ नेति देवा अब्रुवन् । कथं वयं त्वदृते स्यामेति ॥

त्वत् त्वत्तः । ऋते विना ॥

---

* 'ते देवा अब्रुवन् स्त्रीकामा वै गन्धर्वाः स्त्रिया निष्क्रीणामेति ते वाचं स्त्रियमेक-हायनीं कृत्वा तया निरक्रीणन्' तै० सं० ६-१-६. † पा० सू० वा० ३-३-१.

ततः,

॥ साब्रवीत् ॥

कथं,

॥ क्रीणीतैव यर्हि वाव वो मयार्थो भविता तर्ह्येव वोऽहं पुनरागन्तास्मीति ॥

क्रीणीत स्वीकुरुत। यर्हि यस्मिन् काले। तर्हि तदानीम्। अर्थः प्रयोजनम्। वः युष्मान्। आगन्तास्मि। लुट्[1]। आगमिष्यामि॥

॥ तथेति ॥

देवा निश्चिक्युः॥

॥ तया महाणग्न्या भूतया सोमं राजानमक्रीणन् ॥

*नग्नोपभोगयोग्या स्त्री सुन्दरी महती मता।

ईत्वणत्वे छान्दसे॥

तथेदानीमपि,

॥ तामनुकृतिमस्कन्ना वत्सतरीमाजन्ति सोमक्रयणीम् ॥

†तां कृतिमनु तदनुसारेण। क्रीञः करणे ल्युट्।

‡वत्सोक्षेति ष्टरच् प्राप्तद्वितीयवयसं तु गाम्[2]।

आ अजन्ति मूल्यत्वेनानयन्ति।

§अप्राप्तवृषयोगा गौरस्कन्ना स्याद्वर्पणात्॥

---

१. 'आगन्ता। लुट्' ध. पाठः. २. 'ताम्' क. ख. पाठः.

---

* 'रूपलम्पत्तिविवक्षया महत्त्वमुच्यते बाल्यविवक्षया नग्नत्वम्' इति सायणः. 'महानग्न्या अत्यन्तबालभूतया इत्यर्थः। उपांशुत्वं हि वाचो बाल्यम्' इति गोविन्दस्वामी.

† 'तामनुकृतिं तां क्रीतां वाचमनुकिरणानां निष्पन्नां तत्सदृशीमित्यर्थः' इति सायणः.

‡ पा॰ सू॰ ५-३-९१. § 'अस्कन्नां गर्भस्कन्दनरहितामप्राप्तयौवनाम्' इति सायणः.

आनीय च,

॥ *तया सोमं राजानं क्रीणन्ति ॥

†'भाभ्यस्तयोरात्वः' ॥

॥ तां पुनर्निष्क्रीणीयात् ॥

मूल्यभूतां वत्सतरीं गृह्णीयात् पुनरेव हि ॥

कस्मादेवम्,

॥ ‡पुनर्हि सा तानागच्छत् ॥

सा वाक् । तान् देवर्षीन् ॥

॥ §तस्मादुपांशु वाचा चरितव्यं सोमे राजनि क्रीते[1] ॥

कुतः,

॥ गन्धर्वेषु हि तर्हि वाग् भवति ॥

तर्हि तदानीम् ॥

---

१. 'क्रीते । गन्धर्वेषु' घ. ङ. पाठः.

---

* 'पुरस्तात्प्रतीची सोमक्रयण्यवस्थिता भवत्येकहायनी द्विहायनी वर्षीयसी वा । अकूटयाकर्णयेति रूपाणि । या रोहिणी बभ्रुलोम्नी पृश्निवाला पृश्निशफा शुच्यक्षी श्वित्रोपकाशा तया क्रीणीयादित्येके' इति आप० श्रौ० सू० १०-२२-२, ३, ४. † पा० सू० ६-४-११२. ‡ 'सा रोहिद्रूपं कृत्वा गन्धर्वेभ्योऽपक्रम्यातिष्ठत् तद्रोहितो जन्म ते देवा अब्रुवन्नप युष्मदक्रमीन्नास्मानुपावर्तते विह्वयामहा इति ब्रह्म गन्धर्वा अवदन्नगायन् देवाः सा देवान् गायत उपावर्तत तस्माद् गायन्तं स्त्रियः कामयन्ते कामुका एनं स्त्रियो भवन्ति' इति तै० सं० ६-१-६. § 'इदम्प्रभृतिकर्मणां शनैस्तरामुत्तरोत्तरम्' इति आ० श्रौ० सू० ४-१-२१.

॥ साम्नावेव प्रणीयमाने पुनरागच्छति ॥

अग्निप्रणयनाद्युच्चैर्वेदितव्यमिति[1] स्थितिः ।

सूत्र्यते[2] हि—*"ऊर्ध्वं प्रथमाया अग्निप्रणयनीयाया औपवसथ्येऽनियमः' इति ॥

प्रथमः खण्डः ।

---

अथाग्निप्रणयनीया ऋचः[3] संविदधाति ह—

॥ †अग्नये प्रणीयमानायानुब्रूहीत्याहाध्वर्युः ॥

उक्तार्थम्‡ ॥

॥ §प्रदेवं देव्या धिया भरता जातवेदसम् । हव्या नो वक्षदानुषगिति गायत्रीं ब्राह्मणस्यानुब्रूयात् ॥

होता ॥

कुतः,

॥ गायत्रो वै ब्राह्मणः ॥

सृष्टिवाक्ये[4] सहपाठात् । ¶'गायत्रीं छन्दसां ब्राह्मणं मनुष्याणाम्' इति ॥

॥ तेजो वै ब्रह्मवर्चसं गायत्री ॥

---

१. 'वेदितव्यमिति' क. पाठः. २. 'सूत्र्यते ऊर्ध्वं' ख. ङ. पाठः. ३. 'अथाग्निप्रणयनी ऋचः' क पाठः. ४. 'सृष्टिवाक्येन' ख. ङ. पाठः.

---

* आ॰ श्रौ॰ सू॰ ४-१-२६. † 'प्राचीनवंशगत आहवनीयेऽवस्थितस्याग्नेः सौमिक्यामुत्तरवेद्यां नयनं यदस्ति तदेतदत्राग्निप्रणयनम्' इति सायणः. ‡ 'सोमाय क्रीताय —' (page 79.) इत्यनेन तुल्यार्थत्वादुक्तार्थत्वम्. § ऋक्सं॰ ८-८-३४-२. ¶ 'गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात् ते मुख्या मुखतो ह्यसृज्यन्त' तै॰ सं॰ ७-१-१.

ततः किं,

॥ तेजसैवैनं तद् ब्रह्मवर्चसेन समर्धयति ॥

तत् तत्र ॥

॥ *इमं महे विदथ्याय शूषमिति त्रिष्टुभं राजन्यस्यानुब्रूयात् ॥

कुतः,

॥ त्रैष्टुभो वै राजन्यः ॥

†स्रष्टौ सहपाठात् ॥

॥ ओजो वा इन्द्रियं वीर्यं त्रिष्टुप् । ओजसैवैनं तदिन्द्रियेण वीर्येण समर्धयति ॥

तत् तत्र । एनं राजन्यम् ॥

अत्रास्ति,

॥ शश्वत्कृत्व ईड्याय प्रजभ्रुरिति । स्वानामेवैनं तच्छ्रैष्ठ्यं गमयति ॥

तत् तेन । स्वानां ज्ञातीनाम् । शश्वत्कृत्वः सदा । ईड्याय स्तुत्याय । राज्ञे उपायनाय[1] प्रहृतवन्त इति ह्यस्यार्थः ॥

॥ शृणोतु नो दम्येभिरनीकैः शृणोत्वग्निर्दिव्यैरजस्र इति ॥

अस्यार्थमाह—

॥ आजरसं ह्यस्मिन्नजस्रो दीदाय ॥

---

१. 'उपायनादि' क पाठः.

---

* ऋक्सं० ३-३-२४-१. † 'उरसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवतान्वसृज्यत त्रिष्टुप्छन्दो बृहत्साम राजन्यो मनुष्याणामविः पशूनां तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त' तै० सं० ७-१-१.

अस्मिन् राजन्ये । आजरसं सर्वमायुः । अजस्रोऽक्षीणः । दीदाय दीप्यतेऽग्निः ॥

॥ य एवं वेद ॥

तस्मिन्नपि[1] वेदितरि ॥

॥ *अयमिह प्रथमो धायि धातृभिरिति जगतीं वैश्यस्यानुब्रूयात् ॥

कुतः, †

॥ जागतो वै वैश्यः ॥

स्रष्टौ सहपाठात् ॥

॥ जागताः पशवः पशुभिरेवैनं तत् समर्धयति ॥

एनं वैश्यम् ॥

॥ वनेषु चित्रं विभ्वं विशे विश इत्यभिरूपा ॥

विट्शब्दयोगात्[2] ॥

॥ यद् यज्ञेऽभिरूपं तत् समृद्धम् ॥

उक्ता आद्या[3] ‡प्रेममयं विप्रक्षत्रविशां क्रमात् ।

---

१. 'अस्मिन्नपि', २ 'विट्शब्दप्रयोगात्' प, क. पाठः. ३. 'आद्याः' ख. पाठः.

---

* ऋक्सं० ३-५-६-१. † मध्यतः सप्तदशं निरमिमीत तं विश्वेदेवा देवता अन्वसृज्यन्त जगती छन्दो वैरूपं साम वैश्यो मनुष्याणां गावः पशूनां तस्मात्त आद्या अप्रधानाद्ध्यसृज्यन्त तस्माद् भूयांसोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त' तै० सं० ७-१-१. ‡ प्रेममयं=प्रदेवं, इमं महे, अयमिह इति ऋच इत्यर्थः.

सूत्र्यते हि*—'इमं महे विदथ्याय शूषमयमिह'[1] प्रथमो धायि धातृभिरिति तु राजन्यवैश्ययोराद्ये' इति ॥

अथ सप्तायमुष्यादि सर्वेषां तुल्यमुच्यते—

॥ †अयमु ष्य प्र देवयुरिति ॥

एतां द्वितीयामन्वाह ॥

अनुब्रुवन्,

॥ अनुष्टुभि वाचं विसृजते ॥

उच्चैरुच्चारणं विसर्गः ॥

॥ वाग् वा अनुष्टुप् ॥

तच्च,

॥ वाच्येव तद् वाचं विसृजते ॥

‡अनुष्टुबिति वाङ्नामसु पाठात्। तदनुष्टुभ्युच्चैस्त्वम् ॥

स्पष्टयति—

॥ अयमु ष्य इति यदाहायमु स्यागमं या पुरा गन्धर्वेष्ववात्सम्-
मित्येव तद् वाक् प्रब्रूते ॥

अयमियम् । उ पुनः । स्या सा । आगमम् आगतवत्यस्मि । याहं पुरा गन्धर्वेष्ववात्समुषितवती । इत्येव वाक् प्रब्रूते तत् । गमेर्लुङि लृदित्वादङ्§ । वसेर्हलन्तवृद्धिः¶ । ‡'सः स्यार्धधातुके' ॥

1. 'शूषमयमिहेत्यादि' घ. ङ. पाठः.

* आ० श्रौ० सू० २-१७-७. † ऋक्सं० ८-८-३४-२. ‡ या० निरु० १-११ 'अनुष्टुभो वाग्रूपत्वस्य सर्वश्रुतिप्रसिद्धत्वादनुष्टुभ्रूपायां वाच्येवोपांशुध्वनिरूपां वाचं तन्मन्त्रपाठेन विसृजते' इति सायणः § पा० सू० ३-१-५५. ¶ पा० सू० ७-२-३. ‡ पा० सू० ७-४-४९.

॥ *अयमग्निरुरुष्यतीति ॥

तृतीयामनुब्रूयात् ॥

व्याचष्टे—

॥ अयं वा अग्निरुरुष्यति ॥

†रक्षार्थादुरुषि उरुष्यति । ‡कण्ड्वादेर्यक् ॥

अत्रास्ति,

॥ अमृतादिव जन्मन इत्यमृतत्वमेवास्मिंस्तद् दधाति ॥

तत् तेनामृतपदेन । अस्मिन् यजमाने ॥

॥ सहसश्चित् सहीयान् देवो जीवातवे कृत इति ॥

अस्ति ॥

॥ देवो ह्येष एतज्जीवातवे कृतो यदग्निः ॥

एतदेतस्य लोकस्य । जीवातवे । §जीवेरातुः, जीवनाय कृतः स्थापितः । यत् यः ॥

॥ ¶इळायास्त्वा पदे वयं नाभा पृथिव्या अधीति ॥

चतुर्थीमन्वाह ॥

व्याचष्टे—

॥ एतद् वा इळायास्पदं यदुत्तरवेदी नाभिः ॥

---

* ऋक्सं० ८-८-२४-४. † 'उरुष्यति रक्षति प्रकाशयति उद्वहति वा' इति गोविन्दस्वामी. ‡ पा० सू० ३-१-२७. § उणादि० १-८२. ¶ ऋक्सं० ३-१-३२-४.

*इळाया भुवः पदं [1]मुख्यस्थानं मध्यं नाभिः । वेदेर्ङीष् ॥

॥ जातवेदो निधीमहीति ॥

अस्ति ॥

॥ निधास्यन्तो ह्येनं भवन्ति ॥

निदध्मह इत्यर्थे निधीमहीति छान्दसम् ॥

॥ अग्ने हव्याय वोह्ळव इति ॥

एतदप्यभिरूपमेवास्ति ॥

कथं,

॥ हव्यं हि वक्ष्यन् भवति ॥

वहेर्लृट् । † 'षढोः कः सि' ।

अयमग्निर्हुतं हव्यं देवान् प्रति हि वक्ष्यति ॥

॥ ‡अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिमिति ॥

पञ्चमीमन्वाह ॥

---

१. 'मुख्यं स्थानम्' ग. ङ. पाठः.

---

* "इळायाः पद इति । इळाशब्दो गोवाची । इळाख्यां देवतां प्रकृत्य 'गौर्वा अस्यै शरीरम्' (तै० सं० १-७-२) इति श्रुतत्वात्. इळेऽनन्ते सरस्वतीति वाङ्नामसु श्रुतत्वात् । तस्याः पदं घृतनिष्पीडनेन प्रशस्तं 'सा यत्र यत्र न्यक्रामत् ततो घृतमपीड्यत' (तै० सं० २-६-७) इति श्रुतेः । तत्पदरूपत्वविशेषणेन उत्तरवेदिनाभिः प्रशस्यते । यद्वा सोमक्रयण्या गोपदपांसुरस्यां नाभौ प्रक्षिप्यत इति तत्पदरूपत्वम्" इति सायणः.
† पा० सू० ८-२-४१ ‡ ऋक्सं० ४-५-२०-१.

॥ विश्वैरेवैनं तद् देवैः सहासादयति ॥

एनमग्निं सह सुरैः सर्वैः स्थापयतीह वै ।

तत् तत्र ॥

॥ कुलायिनं घृतवन्तं सवित्र इति ॥

अभिरूपमस्ति[1] ॥

कथं,

॥ *कुलायमिव ह्येतद् यज्ञे क्रियते यत् पैतुदारवाः परिधयो गुग्गुलूर्णास्तुकाः सुगन्धितेजनानीति ॥

नीडं कुलायम् । पितुदारुः खदिरः, देवदारुरित्यन्ये । गुग्गुलु प्रसिद्धम् । ऊर्णास्तुकाः अविलोमानि । सुगन्धितेजनानि कावषतृणानि ॥

॥ यज्ञं नय यजमानाय साध्विति[2] ॥

अस्ति ॥

व्याचष्टे—

यज्ञमेव तदृजुधा प्रतिष्ठापयति ॥

ऋजुधा ऋजु साधु[3] । चेत्युपजनः ॥

॥ †सीद होतः स्व उ लोके चिकित्वानिति ॥

षष्ठीमन्वाह ॥

१. 'अभिरूपमास्ति । कुलायमिव' घ. ङ. पाठः. २. 'साध्विति । व्याचष्टे' ङ. पाठः, 'साध्विति । यज्ञमेव' क. पाठः. ३. 'सुष्ठु' घ. ङ. पाठः.

* 'अग्नेर्भस्मान्तरासुत्तरवेद्यां सम्भारानिवपति गुग्गुलु सुगन्धितेजनं श्वेतामूर्णास्तुकां पैत्वस्यान्तराश्वह्लीयां स्तनस्याद्धनपूर्वस्य वा' इति आप० श्रौ० सू० ७-६-१.
† ऋक्सं० ३-१-३३-२.

॥ अग्निर्वै देवानां होता ॥

देवेषु यज्ञं कुर्वत्सु हौत्रमग्निः पुराकरोत् ॥

॥ तस्यैष स्वो लोको यदुत्तरवेदी नाभिः ॥

स्वः आत्मीयः लोकः स्थानम् ॥

॥ सादया यज्ञं सुकृतस्य योनाविति ॥

व्याचष्टे—

॥ यजमानो वै यज्ञः ॥

*प्रवर्तकत्वात् फलित्वाच्च ॥

॥ यजमानायैवैतामाशिषमाशास्ते ॥

इष्टमर्थमर्थयते ॥

॥ †देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धा इति ॥

अत्रास्ति ॥

तत्र,

॥ प्राणो वै वयः ॥

‡वयो धनं तेन साध्यं प्राणस्य स्थापनं त्विति ॥

---

* 'इज्यत इति व्युत्पत्त्या यज्ञशब्दः सर्वत्र यागवाची । इह तु यजतीति व्युत्पत्त्या यष्टारमाचष्टे' इति सायणः. † 'देवापीः देवानां भक्षणहेतो' इति गोविन्दस्वामी. 'देवान् वेति कामयत इति देवावीः देवप्रिय हे अग्ने' इति सायणः. ‡ 'अत्र वयःशब्देन प्राण उपलक्ष्यते । बाल्यादिवयोविशेषहेतोरायुषो निमित्तत्वात् 'यावदस्मिन् शरीरे प्राणो वसति तावदायुः (कौषी० उप० ३-२) इति श्रुतेः' इति सायणः.

॥ प्राणमेव तद्यजमाने दधाति ॥

तत् तेन वयश्शब्देन ॥

॥ *नि होता होतृषदने विदान इति ॥

सप्तमीमन्वाह ॥

॥ अग्निर्वै देवानां होता । तस्यैतद्धोतृषदनं यदुत्तरवेदी नाभिः ॥

होता यत्र सीदति तत् ॥

अत्रास्ति,

॥ त्वेषो दीदिवाँ असदत्सुदक्ष इति ॥

अभिरूपमेतत् ॥

कुतः,

॥ आसन्नो हि स तर्हि भवति ॥

असदत् । †लृदित्वादङ् । आसन्नः आसदतेः[1] क्तः । ‡'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' ॥

॥ अदब्धव्रतप्रमतिर्वसिष्ठ इति ॥

§वसेः प्रशस्यार्थाद्विष्ठनि टिलोपः । अदब्धमहिंसितं व्रतं कर्म यस्य स च प्रमतिः प्रकृष्टमतिकरश्चेति¶ ॥

॥ अग्निर्वै देवानां वसिष्ठः । सहस्रंभरः शुचिजिह्वो अग्निरिति[2] ॥

अस्ति ॥

१ 'आसदेः', २ 'अग्निरिति । एषा' घ. ङ. पाठः.

* ऋक्सं० २-६-१-१. † पा० सू० ३-१-५५ ‡ पा० सू० ८-२-४२ § 'वसिष्ठो वसीयान्' इति गोविन्दस्वामी. 'वसिष्ठः अतिशयेन निवासहेतुः हविर्वहनेन देवानां स्वस्वस्थाने निवासहेतुत्वादग्नेर्वसिष्ठत्वम्' इति सायणः. ¶ 'प्रकृष्टा मतिर्यस्य' इति सायणगोविन्दस्वामिनौ.

॥ एषा ह वा अस्य सहस्रंभरता यदेनमेकं सन्तं बहुधा विहरन्ति ॥

एकमोपासनं गार्ह्यं बहून् श्रौता हि कुर्वते ॥

॥ प्र ह वै साहस्रं पोषमाप्नोति ॥

सहस्रसंख्यगोरत्नहेमादि लभते यजन् ।

*'व्यवहिताश्च' । प्राप्नोति ॥

॥ य एवं वेद ॥

सोऽपि ॥

॥ †त्वं दूतस्त्वमु नः परस्पा इत्युत्तमया परिदधाति ॥

अष्टम्या समापयेत् त्रिरुक्तया ॥

॥ त्वं वस्य आ वृषभ प्रणेता अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन् दीद्यद् बोधि गोपा इति[1] ॥

अस्ति ॥

॥ अग्निर्वै देवानां गोपाः ॥

गोपाः । ‡पचाद्यचो दीर्घः । रक्षकः ॥

॥ अग्निमेव तत् सर्वतो गोप्तारं परिदत्त आत्मने च यजमानाय च यत्रैवं विद्वानेतया परिदधाति ॥

---

१. 'इति अग्निर्वै' इ. पाठः.

---

* पा० सू० १-४-८२. † ऋक्सं० २-६-१-२. ‡ पा० सू० ३-१-१३४.

तत् तेन गोपा इति पदेन । सोऽस्मत्, यत्र[*] यः[1] । स होता परिदत्ते प्रार्थयते । [†]'आभ्यस्तयोरातः' । [‡]'खरि च' । आत्मने स्वस्मै ॥

॥ अथो संवत्सरीणामेवैतां स्वस्ति कुरुते ॥

अथो अपिच । भवार्थे संवत्सरात् खः[§] । स्वस्तिमविनाशम् ॥

॥ ता एता अष्टावन्वाह रूपसमृद्धाः ॥

[¶]प्रदेवादित्वंदूतान्ताः ॥

॥ एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृगभिवदति । तासां त्रिः प्रथमामन्वाह । त्रिरुत्तमाम् । ता द्वादश सम्पद्यन्ते द्वादश वै मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद । त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद् बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥

[$]उक्तार्थानि ॥

द्वितीयः खण्डः ।

---

१. 'यः होता' ख. पाठः.

---

* 'यत्र यस्मिन् कर्मणि' इति सायणगोविन्दस्वामिनौ. † पा॰सू॰ ६-४-११२. ‡ पा॰ सू॰ ८-४-५५ § पा॰ सू॰ ५-१-९२. ¶ तथाचाश्वलायनसूत्रम्—'प्र देवं देव्या धिया इति तिस्र इडायास्त्वा पदे वयमग्ने विश्वेभिः स्वनीक देवैरित्यर्धर्च आरभेत् । आसीनः प्रथमामन्वाहोपांशु. सप्रणवाम् । निहितोऽग्नी सीद होतः स्व उ लोके चिकित्वान् नि होता होतृषदने विदान इति द्वे परिधाय तस्मिन्नेवासन उपविश्य भूर्भुवःस्वरिति वाचं विसृजेत' इति २-१७-३, १०. $ page 90 & 91.

अथर्चौ विदधात्यष्ट हविर्धानप्रवर्तनीः—

॥ [*]हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहीत्याहाध्वर्युः ॥

प्रोहः प्रवृत्तिः ॥

॥ [†]युजे वां ब्रह्म पूर्व्यं नमोभिरित्यन्वाह ब्रह्मणा वा एते देवा अयुञ्जत यद्धविर्धाने ॥

यद् ये । [‡]ब्रह्मणा वेदेन । अयुञ्जत नियुक्तवन्तः ॥

ततश्च,

॥ ब्रह्मणैवैने एतद् युङ्क्ते ॥

एतदेतर्हि काले । युङ्क्ते नियोजयति[1] । युजे वामिति वदन् । एने हविर्धानाख्ये शकटे । युजेर्लट् तङ् । [§]'श्नसोरल्लोपः' ॥

॥ न वै ब्रह्मण्वद्रिष्यति ॥

[¶]उक्तार्थम् ॥

अथ,

॥ [‡]प्रेतां यज्ञस्य शंभुवेति तृचं द्यावापृथिवीयमन्वाह[ॻ] । तदाहुः ॥

चोद्यस्वरूपमाह[2]—

१. 'योजयति', २. 'चोद्यं । स्वरूपमाहुर्ब्राह्मणाः' क. पाठः.

* हविः सोमरूपं धत्तः धारयतः इति हविर्धाने शकटे । तत्स्वरूपं चापस्तम्बसूत्रे—'प्रयुक्तपूर्वे शकटे नद्धयुगं प्रतिहृतशम्ये प्रक्षाल्य तयोः प्रथमग्रथितान् ग्रन्थीन् विस्रस्य नवान् प्रज्ञातान् कृत्वाग्रेण प्राग्वंशमभितः पृष्ठ्यामव्यपनयन् परिश्रिते यच्छदिषी अवस्थापयति' इति ११-६-३. तत्प्रवर्तनं च तत्रैव—'प्राची प्रेतमध्वरमित्युद्गृह्णन्तः प्रवर्तयन्ति' (११-६-११) इति. + ऋक्सं० ७-६-१३-१. ‡ 'ब्राह्मणमुखेन' इति सायणः. § पा० सू० ६-४-४१. ¶ page 80. ‡ ऋक्सं० २-८-१०-४. ॻ तथाचानुक्रमणी—'द्यावापृथिव्योऽन्त्यस्तृचो हाविर्धानो वा' म० २. सू० ४१

॥ यद्धविर्धानाभ्यां प्रोह्यमाणाभ्यामनुवाचाहाथ कस्मात्
तृचं द्यावापृथिवीयमन्वाहेति ॥

*व्याख्यातप्रायम् । †देवतार्थे छः ॥

परिहरति—

॥ द्यावापृथिवी वै देवानां हविर्धाने आस्ताम् ॥

औङो लुक् । अभवताम् ॥

॥ ते उ एवाद्यापि हविर्धाने ॥

ते द्वे । उ पुनः । अद्यापि द्यावापृथिव्यौ । हवींषि धीयन्ते ययोस्ते तयोक्ते ॥

उपपादयति—

॥ ते हीदमन्तरेण सर्वं हविर्यदिदं किञ्च ॥

ते अन्तरेण तयोर्मध्ये । सर्वमिति व्याचष्टे— यदिदं किञ्चेति ॥

॥ तस्मात् तृचं द्यावापृथिवीयमन्वाह ॥

इति चतस्र उक्ताः‡ ॥

॥ §यमे इव यतमाने यदैतमिति ॥

पञ्चमीमन्वाह ॥

व्याचष्टे—

॥ यमे इव ह्येते यतमाने प्रबाहुगितः ॥

---

* 'यदग्रो मध्यमानाय....' (page 100) इत्यादिना तुल्यजातीयत्वात्.
† पा० सू० ४-२-३२. ‡ युजे वामित्येका, प्रेतां यज्ञस्येत्याद्यास्तिस्रः. § ऋक्सं० ७-६-१३-२.

यमे सहजे इव यतमाने । यकः शप् । यत्यमाने[*] । अध्वर्युप्रतिप्रस्थातृभ्यां प्रवर्त्यमाने । प्रवाहुक् सहेत्यर्थः । इतः गच्छतः ॥

॥ प्र वां भरन् मानुषा देवयन्त इति ॥

अस्ति ॥

व्याचष्टे—

॥ देवयन्तो ह्येने मानुषाः प्रभरन्ति ॥

देवान् यष्टुमिच्छन्तो देवयन्तः । क्यचः शतुर्जसि नुम् । एने शकटे द्वे प्रभरन्ति । प्राङ्नयन्ति । हृग्रहोर्भः[†] । मानुषाः मनुष्याः ॥

॥ आसीदतं स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे न इति ॥

अस्ति ॥

व्याचष्टे—

॥ सोमो वै राजेन्दुः सोमायैवैने एतद् राज्ञ आसदेऽचीक्लृपत् ॥

आसदे भावे क्विपो ङे । आसनार्थम् । एतदेतेन पादेन । एने शकटे । [‡]'कृपो रो लः' । [§]'णौ चङ्युपधाया ह्रस्वः' । [¶]'उरत्' । कल्पयति ॥

॥ [‡]अधि द्वयोरदधा उक्थ्यं वच इति ॥

षष्ठीमन्वाह ॥

---

* 'प्रवर्तमाने' इति गोविन्दस्वामी. 'प्रयत्नं कुर्वती' इति सायणः. † पा० सू० वा० ८-२-३२. ‡ पा० सू० ८-२-१८. § पा० सू० ७-४-१. ¶ पा० सू० ७-४-६६. ‡ ऋक्सं० १-६-४-३.

॥ द्वयोर्ह्येतत् तृतीयं छदिरधि निधीयते ॥

एतदेतर्हि । अस्या ऋच उच्चारणकालेऽध्वर्युणा ।
छदिर्द्वयस्योपरिष्टात् तृतीयं स्तीर्यते छदिः* ॥

॥ उक्थ्यं वच इति यदाह यज्ञियं वै कर्मोक्थ्यं वचो यज्ञमेवैतेन समर्धयति ॥

उक्थ्यं स्तुत्यम् । यज्ञियं यज्ञे भवम् । यज्ञाद् घः† ॥

॥ यतस्रुचा मिथुना या सपर्यतः । असंयत्तो व्रते ते क्षेति पुष्यतीति ॥

अस्ति ॥

॥ यदेवादः पूर्वं यत्तवरपदमाह तदेवैतेन शान्त्या शमयति ॥

संग्रामवाचीह यतिः समय(त)न्तेति‡ दर्शनात् ।
यतेति सूचितं युद्धं पोषोक्त्या शमयत्यसौ ॥

शान्त्या । ङेर्यं टा । शान्तये । एतेन पुषिधातुना ॥

॥ भद्रा शक्तिर्यजमानाय सुन्वत इत्याशिषमाशास्ते ॥

---

* 'हविर्धानाख्ययोः शकटयोरुपरि सोमस्यावस्थानाय गृहाकारेण परितो वेष्टनम् उपर्याच्छादनं यत् क्रियते तदेतदाच्छादनं छदिःशब्दवाच्यम् । तादृशे द्वे छदिषी द्वयोर्हविर्धानयोरवस्थाप्य तयोश्छदिषोरुपरि तृतीयं छदिर्हविर्धानयोरुदाहृतयोरवस्थाप्यते । तदेतत् तैत्तिरीया आमनन्ति—'दण्डो वा औपरस्तृतीयस्य हविर्धानस्य वषट्कारेणाक्षमाच्छिनद् यत् तृतीयं छदिर्हविर्धानयोरुदाह्रियते तृतीयस्य हविर्धानस्यावरुद्ध्यै' (तै० सं० ६-२-९) इति सायणः. † पा० सू० ५-१-७१. ‡ page 93.

सुन्वतो यजमानस्य भद्रा शक्तिर्भवत्विति ॥

॥ *विश्वा रूपाणि प्रतिमुञ्चते कविरिति विश्वरूपामन्वाह ॥

सप्तमीं विश्वरूपाम् । †अर्शआद्यच् । विश्वा रूपाणीत्युक्ते विश्वरूपशब्दवतीम् ॥

अत्र च,

॥ ‡स ररराट्यामीक्षमाणोऽनुब्रूयात् ॥

स होता ।

§हिरण्यकेशिनां सूत्रे रराट्या लक्षणं श्रुतम्—

'रराटी तेजन्यैषीकी प्राच्यणूकाण्डा मध्ये विष्यूता तां वंशे निबध्नाति' इति । अर्थस्तु—तेजनं तेजनीति च यष्टिनाम । ‖'तद्यथैवाद इति ह स्माह तेजन्या उभयत' इति, ¶'चतुःसन्धिर्हीषुरनीकं शल्यं तेजनं पर्णानि' इतिच दर्शनात् । ऐषीकी । इषीका काशास्तद्विकारभूता । प्राची प्राक्प्रत्यग्वितता नतु दक्षिणोदग्वितता । अणूकाण्डा । दीर्घणत्वे छान्दसे । अनुकाण्डा काण्डं पर्व । ‡'काण्डात् काण्डात् प्ररोहन्ति' इति यथा । अनुलोमपर्वका प्रग्रहपर्वकेत्यर्थः । मध्ये विष्यूता मध्यतः सुषिरं कृत्वा सूत्रेण प्रोता । तामेवंभूतां रराटीं बध्नाति । क्व वंशे । 'अग्रेण हविर्धाने स्थूणे निहन्ति अनयोरुदगग्रं वंशं निधाय' इति पूर्वोक्त इति । अमर्थे केराम् । रराटीं पश्यन् ॥

---

* ऋक्सं० ४-४-२४-२. † पा० सू० ५-२-१२७ ‡ 'विश्वा रूपाणि प्रतिमुञ्चते कविरिति व्यवस्तायाम्' इति आ० श्रौ० सू० ४-६-५. § प्र० ४, ख० १७, ‖ page 74. ¶ page 157. ‡ तै० सं० ४-२-९.

आभिरूप्यमाह—

॥ विश्वमिव हि रूपं रराट्याः ॥

बहुविधम् ॥

कथं,

॥ शुक्लमिव च कृष्णमिव च ॥

यष्टेः पर्वणि कृष्णत्वं काण्डमध्ये तु शुक्लता[*]।
इव एवम् ॥

विदुषो होतुराह—

॥ विश्वं रूपमवरुन्ध आत्मने च यजमानाय च यत्रैवं विद्वानेतां रराट्यामीक्षमाणोऽन्वाह ॥

अमो कि, रराटीम्[†]। यत्र सोऽह्नत् यः। अवरुन्धे संप्राप्नोति। रूपं वस्तु। विश्वम् विशेः कर्मणि कन्[†]। अद्धेयमत्र गोधनादि प्रवेष्टव्यम् ॥

॥ [‡]परि त्वा गिर्वणो गिर इत्युत्तमया परिदधाति[§] ॥

अष्टम्या त्रिः समापयेत् ॥

कालमाह—

॥ स यदैव हविर्धाने संपरिश्रिते मन्येताथ परिदध्यात् ॥

स होता। यदा ते परिश्रिते सच्छादिष्के कृते। अथ तदा ॥

---

* 'दर्भमालाया अत्यन्तशुष्कास्तृणविशेषाः शुक्ला इत्युच्यन्ते। अशुष्कास्तु कृष्णाः' इति सायणः. † उणादिसू० १-१५७. ‡ ऋक्सं० १-१-२०-६ § 'मेध्योपनिहितयोः परि त्वा गिर्वणो गिर इति परिदध्यात्' आ० श्रौ० सू० ४-६-६.

॥ अनग्नंभावुका ह होतुश्च यजमानस्य च भार्या भवन्ति यत्रैवं विद्वानेतया हविर्धानयोः संपरिश्रितयोः परिदधाति ॥

यत्र यदीत्यर्थः । *'कर्तरि भुवः खिष्णुच्खुकञौ' । †'अरुर्द्विषदजन्तस्य मुम्' । प्रयोगापेक्षं बहुत्वम् ।

होतुर्यष्टुश्च भार्याणां वस्त्रकार्श्यं न वै भवेत् ॥

स्तौति—

॥ यजुषा वा एते संपरिश्रियेते यद्धविर्धाने‡ ॥

§यत् यः । परिश्रयः छादनम् । कर्मणि यकि दीर्घाभावः ॥

प्रपञ्चयति—

॥ यजुषैवैने एतत् परिश्रयन्ति ॥

एतद् एतर्हि ॥

शङ्कुनिखातान्तः परिश्रय इत्याह—

॥ ¶तौ यदैवाध्वर्युश्च प्रतिप्रस्थाता चोभयतो मेथ्यौ निहन्यातामथ परिदध्यात् । अत्र हि ते संपरिश्रिते भवतः ॥

---

* पा० सू० ३-२-५७. † पा० सू० ६-३-६७. ‡ 'विष्णोः पृष्ठमसीति तेषु मध्यमं छदिरध्यूहति न्यरत्निविस्तारं नवायामम्' इति आप० श्रौ० सू० ११-८-१. § 'यद् हविर्धाने ये शकटे' इति सायणः. ¶ तथाच तैत्तिरीयसंहिता— 'दिवो वा विष्ण उतवा पृथिव्या इत्याशीर्पदयर्चा दक्षिणस्य हविर्धानस्य मेथीं निहन्ति' ६-२-९ इति. 'आपस्तम्बश्चाह – 'दिवो वा विष्णविति ध्वर्युर्दक्षिणस्य हविर्धानस्य दक्षिणं कर्णान्तर्देशमनु मेथीं निहन्ति तस्यामीषां निनह्यति । एवमुत्तरस्य प्रतिप्रस्थाता विष्णोर्नु कमित्युत्तरं कर्णान्तर्देशमनु' इति ११-७-३, ४.

तौ प्रसिद्धौ । मेथी नाम महाशङ्कुः । अथ तदा । लिङ् यासुट् । तसस्ताम्[1] । निहन्यातां स्थापयेताम् । भवतः सम्पद्येते ॥

॥ ता एता अष्टावन्वाह रूपसमृद्धाः ॥

*युजेवामादिपरित्वान्ताः ॥

॥ एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृगभिवदति । तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां, ता द्वादश सम्पद्यन्ते, द्वादश वै मासाः संवत्सरः, संवत्सरः प्रजापतिः, प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद । त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद्बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥

उक्तार्थानि† ॥

तृतीयः खण्डः ।

---

आग्नीध्रकाग्नेः प्रणये लतासोमस्य चैव हि ।
वाच्या ऋचः सप्तदश मन्त्रवीति प्ररोचयन्—

---

१. 'ताम् । अत्र हि ते सम्परिश्रिते निहन्यातामु' क. पाठः.

---

* तथाचाश्वलायनसूत्रं—'युजे वां ब्रह्म पूर्व्यं नमोभिः प्रेतां यज्ञस्य शम्भुवा युवामिमे इव वर्तमाने यदीतमधि द्रुयोरदधा उरुम्यं वच इत्यर्धर्चे आरभेदन्ववस्ता चेद्राठो । विश्वा रूपाणि प्रतिमुञ्चते कविरिति अवस्तायाम् मेथ्योरुपर्निहितयोः परि त्वा गिर्वणो गिर इति परिदध्यात्' इति ४-५ ४, ५, ६. † pages 90 & 91.

॥ अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीत्याहाध्वर्युः* ॥

इह ईत्वं छान्दसं सूक्तहविःप्रतियोगिदेवताद्वन्द्वत्वाभावात् ॥

॥ †सावीर्हि देव प्रथमाय पित्र इति सावित्रीमन्वाह ॥

इयं च सूत्रपठिता‡ ।

॥ तदाहुः ॥

चोद्यस्वरूपमाह—

॥ यदग्नीषोमाभ्यां प्रणीयमानाभ्यामनुवाचाहाथ कस्मात् सावित्रीमन्वाहेति ॥

अग्निसोमदेवत्यया हि भाव्यमिति भावः ॥

परिहरति—

॥ सविता वै प्रसवानामीशे ॥

§व्याख्यातम् ॥

॥ सवितृप्रसूता एवैनौ तत् प्रणयन्ति ॥

---

* 'योऽयमग्निः प्राचीनवंशाख्यायाः शालाया मुखे द्वारभागे पूर्वसिद्धाहवनीयरूपेणावतिष्ठते तस्माच्छालामुखीयादग्नेः सकाशात् कियानप्याग्नीध्रीये धिष्ण्ये नेतव्यः सोमश्च पूर्वं शालामुखीयसमीपेऽवस्थितस्तेनाग्निना सहानीतः सन् पुनरपि हविर्धानमण्डपे नेतव्यः । तदिदमग्नीषोमप्रणयनम् । तदर्थं होतारं प्रत्यध्वर्युः प्रैषमन्त्रं ब्रूयात् । तदेतत् सर्वमापस्तम्ब आह – 'शालामुखीये प्रणयनीयमिध्ममादीप्य सिकताभिरुपयम्याग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यति । अग्निप्रथमाः सोमप्रथमा वा प्राचीमभिप्रव्रजन्ति । आग्नीध्रीयेऽग्निं प्रतिष्ठाप्य इति च । सोमो जिगाति गातुविदिति पश्चया द्वारा हविर्धानं राजानं प्रपादयति इति च' (११-१७-२, ३, ४, ८) इति सायणः. † अथर्वसं० ७-४-३. ‡ आ० श्रौ० सू० ४-१०-१. § page 100.

एनौ अग्निसोमौ[1] । तद् तत्र ॥

॥ तस्मात् सावित्रीमन्वाह ।

*प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यामन्वाह† ॥

पत्यन्ताण्ण्यः‡ ॥

॥ तदाहुर्यदग्नीषोमाभ्यां प्रणीयमानाभ्यामनुवाचाहाथ कस्माद् ब्राह्मणस्पत्यामन्वाहेति ॥

पूर्ववत् ॥

परिहरति—

॥ ब्रह्म वै बृहस्पतिः । ब्रह्मैवाभ्यामेतद् पुरोगवमकः ॥

आभ्याम् अग्नेः सोमस्य चार्थाय । अकः निरुक्तम्§ । अकार्षीत् ॥

॥ न वै ब्रह्मण्वद्रिष्यति ॥

अत्रास्ति,

॥ प्र देव्येतु सूनृतेति ससूनृतमेव तद् यज्ञं करोति ॥

तद् तत्र ।

यज्ञं ससूनृतं कुर्यात् प्रियं सत्यं च सूनृतम् ॥

॥ तस्माद् ब्राह्मणस्पत्यामन्वाह ॥

द्वितीयाम् ॥

---

१. 'अग्नीषोमौ' क. ङ. पाठः.

---

* ऋक्सं० १-३-२०-१. † 'उत्तिष्ठाग्नी ब्राह्मणस्पत्याम्' इति सर्वा० म० १. सू० ४०. ‡ पा० सू० ४-१-८५. § page 80.

॥ [*]होता देवो अमर्त्य इति तृचमाग्नेयं [†]गायत्रमन्वाह
सोमे राजनि प्रणीयमाने ॥

प्राङ् नीयमाने ॥

स्तौति—

॥ सोमं वै राजानं प्रणीयमानमन्तरेणैव सदो हविर्धाना-
न्यसुरा रक्षांस्यजिघांसन् ॥

हविर्धानानोद्वयस्य सदसश्चैव मध्यतः ।
प्राङ् नीयमानं सोमं तु दैत्या रक्षांसि चैव हि ॥
हन्तुमैच्छन् हनः सन् द्वे दीर्घोऽज्झनगमां सनि[‡] ।
अङभ्यासाच्चेति[§] कुत्वमजिघांसन् लङा पदम् ॥

॥ तमग्निर्माययात्यनयत् ॥

तं सोममग्निः मायया[¶] प्रज्ञयात्यनयदतिनीतवान् ॥

तदेतदाह—

॥ पुरस्तादेति माययेति[1] ॥

व्याचष्टे—

॥ मायया हि स तमत्यनयत् तस्माद्धस्याग्निं पुरस्ताद्धरन्ति ॥

अस्य सोमस्य । उ खलु । [ǁ]'मय उञो वो वा' । नयन्ति ।
ऋत्विजः ॥

---

१. 'माययेति । मायया' घ. ङ. पाठः.

---

* ऋक्सं० ३-१-२९-२. † 'प्र वः गयोना गायत्रम्' इति सर्वा० मं० ३० सू० २७. ‡ पा० सू० ६-४-१६. § पा० सू० ७-३-५५. ¶ 'मायया प्रज्ञया' इति सायणः. ǁ पा० सू० ८-३-३३.

॥ [*]उप त्वाग्ने दिवे दिवे [†]उपप्रियं पनिप्नतमिति तिस्रश्चैकां चान्वाह ॥

उपत्वातिस्र एकात्रोपप्रियेति क्रमाद्भवेत् ॥

चतुर्ऋचं स्तौति—

॥ ईश्वरौ ह वा एतौ संयन्तौ यजमानं हिंसितोः ॥

[‡]संयन्तौ सङ्गच्छमानौ यजमानं हिंसितुं समर्थौ स्याताम् ॥

एतौ कौ,

॥ यश्चासौ पूर्व उद्धृतो भवति यमु चैनमपरं प्रणयन्ति ॥

पूर्व उत्तरवेदिगतः । उ पुनः । अपर आग्नीध्रीयगतः[1] ॥

एवं स्थिते,

॥ तद् यत् तिस्रश्चैकां चान्वाह संजानानावेवैनौ तत् सङ्गमयति ॥

संजानानौ सम्मतिपन्नौ । [§]'संप्रतिभ्यामनाध्याने' इति तङ् । तत् तत्र ॥

व्याचष्टे—

॥ प्रतिष्ठायामेवैनौ तत् प्रतिष्ठापयत्यात्मनश्च यजमानस्य चाहिंसायै ॥

---

1. 'आग्नीध्रगतः' घ. ङ. पाठः.

---

* ऋक्सं० १-१-२-२. † ऋक्सं० ७-२-१८-४. ‡ 'संयन्तौ सपंमानौ' इति गोविन्दस्वामी. 'संग्रामं कुर्वन्तौ' इति सायणः. § पा० सू० १-३-४६.

प्रतिष्ठायाम् । ङेर्थे ङि । प्रतिष्ठार्थम्* । आत्मयष्टृहिंसानिवृत्तये च । प्रतिष्ठापयति सङ्गमयति ॥

॥ †अग्ने जुषस्व प्रति हर्य तद्वच इत्याहुत्यां ‡हूयमानायामन्वाह ॥

निहिताग्नीध्राग्नेरिति[1] शेषः । सूत्र्यते हि§— 'आग्नीध्रीये निहितेऽभिहूयमानेऽग्ने जुषस्व[2] प्रतिहर्य तद्वच' इति ॥

॥ अग्नय एव तज्जुष्टिमाहुतिं गमयति ॥

¶'गत्यर्थकर्मणि—' इति चतुर्थी। अग्निम्$ । जुष्टिम् । ङेर्थेऽम्, प्रीतये आहुतिं प्रापयति ॥

॥ ‡सोमो जिगाति गातुविदिति तृचं सौम्यं गायत्रमन्वाह सोमे राजनि प्रणीयमाने स्वयैवैनं तद् देवतया स्वेन छन्दसा समर्धयति¥ ॥

---

१. 'निहिताग्नीध्राग्नेरपरीति', २. 'जुषस्वेति' क. पाठः.

---

* 'प्रतिष्ठामेव उत्तरवेद्यामीध्रलक्षणस्वस्थोचितस्थान एव' इति सायणः. † ऋक्सं॰ २-२-१४-७. ‡ आहुतिस्तु—'नयवत्यर्चाग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिजित्यै' इति (६-३-२) यजुर्वेदगता. 'आग्नीध्रीयेऽग्निं प्रतिष्ठाप्याग्ने नयेत्यर्धमाज्यशेषस्य जुहोति' इति आप॰ श्रौ॰ सू॰ ११-१७-४. § आ॰ श्रौ॰ सू॰ ४-१०-३. ¶ पा॰ सू॰ २-३-१२. $ 'अग्नये जुष्टिं प्रीतिम्' इति गोविन्दस्वामी. 'आहुतिमग्नेः प्रियं सम्पादयति' इति सायणः. ‡ ऋक्सं॰ ३-४-११ ३. ¥ 'सौम्यर्चा प्रपादयति स्वयैवैनं देवतया प्रपादयति' इति तै॰ सं॰ ६-३-२. 'उत्तरेणाग्नीध्रीयमतिक्रमत्स्वतिक्रम्य सोमो जिगाति गातुविद् देवानां तमस्य राजा वरुणस्तमश्विनेत्यर्धर्चे आरमेत्' आ॰ श्रौ॰ सू॰ ४-१०-४. 'सोमो जिगाति गातुविदित्यपरया द्वारा हविर्धाने राजानं प्रपादयति' ११-१७-८. इति चापस्तम्बः.

अत्रास्ति,

॥ *सोमः सधस्थमासददिति ॥

आभिरूप्यमाह—

॥ आ सत्स्यन् हि स तर्हि भवति ॥

तर्हि तदानीम् । सत्स्यन् । सदेः 'लृटः सद्वा'† ॥

॥ तदतिक्रम्यैवानुब्रूयात् पृष्ठत इवाग्नीध्रं कृत्वा ॥

तद् गायत्र्यृचं सोम इत्यादि । अनुब्रूयात् । एव पुनः । आग्नीध्र-मतिक्रम्य । व्याचष्टे—पृष्ठत इवेति ॥

अथ,

॥ ‡तमस्य राजा वरुणस्तमश्विनेति वैष्णवीमन्वाह ॥

वैष्णवत्वद्योतनाय पठति—

॥ क्रतुं सचन्त मारुतस्य वेधसः । दाधार दक्षमुत्तममहर्विदं
व्रजं च विष्णुः सखिवाँ अपोर्णुत इति ॥

व्याचष्टे—

॥ विष्णुर्वै देवानां द्वारपः स एवास्मा एतद् द्वारं विवृणोति ॥

सर्वसम्पदुपायानां विष्णुर्निर्वाहकः खलु ।

एतदेतया ऋचा । द्वारं हविर्धानं पश्चिमम् । विवृणोति उद्घाटयति अस्मै आगताय सोमाय ॥

---

* ऋक्सं० ३-४-११-५. † पा० सू० ३-३-१४. ‡ ऋक्सं० २-२-२६-४

॥ *अन्तश्च प्रागा अदितिर्भवासीति प्रपाद्यमानेऽन्वाह† ॥

प्रवेश्यमाने सोमे ॥

॥ श्येनो न योनिं सदनं धिया कृतमित्यासन्ने ॥

अन्वाहेत्येव । आसन्ने निविष्टे सोमे ॥

॥ हिरण्ययमासदं देव एषतीति ॥

अस्ति ॥

॥ हिरण्मयमिव ह वा एष एतद् देवेभ्यश्छदयति यद् कृष्णाजिनम्‡ ॥

§एष सोमः छदयति अध्यास्ते । देवेभ्यः देवानामर्थाय ।

एतत् कृष्णाजिनं स्वस्य[1] राज्ञः सिंहासनं यथा ।
मृदुस्पर्शं बिन्दुचित्रं सावनं सुमनोरमम् ॥

॥ तस्मादेतामन्वाह । ¶अस्तभ्नाद् द्यामसुरो विश्ववेदा इति वारुण्या परिदधाति⁑ । वरुणदेवत्यो वा एष तावद् यावदुपनद्धो यावत् परिश्रितानि प्रपद्यते । स्वयैवैनं तद् देवतया स्वेन छन्दसा समर्धयति ॥

---

१. 'तस्य' ब. पाठः

---

* ऋक्सं० ६-४-११-२. † 'प्रपाद्यमानं राजानमनुप्रपद्येत अन्तश्च प्रागा अदितिर्भवासि श्येनो न योनिं सदनं धिया कृतम्' इति आ० श्रौ० सू० ४-१०-५. ‡ कृष्णाजिनास्तरणं चापस्तम्ब आह—'दक्षिणस्य हविर्धानस्य नीडे पूर्ववत् कृष्णाजिनास्तरणं राज्ञश्चासादनम्' इति ११-१७-१०. § 'एषोऽध्वर्युः छदयत्यास्तृणाति' इति सायणः. ¶ ऋक्सं० ६-३-२८-१. ⁑ 'अस्तभ्नाद् द्यामसुरो विश्ववेदा इति परिदध्यात्' आ० श्रौ० सू० ४-१०-५

[*]उक्तार्थमेतत् सोमप्रवहणे ॥

अत्र किञ्चिन्नैमित्तिकमाह—

॥ तं यद्युप वा धावेयुरभयं वेच्छेरन् [†]एवा वन्दस्व वरुणं बृहन्तमित्येतया परिदध्यात् ॥

उपधावेयुर्वा । अभयमिच्छेयुर्वा । [‡]उपधावनं समाश्रयणम् । सूत्र्यते हि[§]—'उत्तरया वा क्षेमाचारे' इति ॥

एवं कृते,

॥ यावद्भ्यो ह्यभयमिच्छति यावद्भ्यो ह्यभयं ध्यायति तावद्भ्यो ह्यभयं भवति यत्रैवं विद्वानेतया परिदधाति ॥

यावद्भ्यो भूतेभ्यः । [¶]यत्र यदि ॥

॥ तस्मादेवं विद्वानेतयैव परिदध्यात् ॥

क्षेमकामः । एवेति । पूर्वा अस्तभ्नान्द्या भूदिति ॥

॥ ता एताः सप्तदशान्वाह ॥

सावीरादिवारुण्यन्ताः ॥

॥ रूपसमृद्धाः । एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृगभिवदति । तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां ता एकविंशतिः सम्पद्यन्ते एकविंशो वै प्रजापतिः ॥

---

* page 88　† ऋक्सं० ६-३-२८-२.　‡ 'उपधावनमुपद्रवः' इति गोविन्दस्वामी.　§ आ० श्रौ० सू० ४-१०-५.　¶ 'यत्र यागे' इति सायणः.

कथं,

॥ द्वादश मासाः पञ्चर्तवः ॥

हेमन्तशिशिरैक्येन ॥

॥ त्रय इमे लोकाः ॥

भूर्भुवस्वराख्याः । इति विंशतिः ॥

॥ असावादित्य एकविंशः ॥

स च,

॥ उत्तमा प्रतिष्ठा ॥

सर्वजगदाधारत्वात् ॥

॥ तद् दैवं क्षत्रम् ॥

*'आदित्यो वै दैवं क्षत्रम्' इति हि वक्ष्यते ॥

॥ सा श्रीः ॥

श्रयणीयत्वात् । †'त एनमनुमदन्त्युदगादुदगाद्' इत्यारण्यके हि वक्ष्यते ॥

॥ तदाधिपत्यम् ॥

स्वार्थे ष्यञ् । ‡'आदित्य एषां भूतानामधिपतिः' इति हि वक्ष्यते ॥

॥ तद् ब्रध्नस्य विष्टपम् ॥

* ऐ० ब्रा० ३४-२. † ऐ० आ० १-३-४. ‡ ऐ० ब्रा० ३४-२.

सोऽर्कम् । *ब्रध्न आदित्यः । विष्टपं स्थानम् । आदित्याख्यं स्थानं च ॥

॥ तत् प्रजापतेरायतनम् ॥

सोऽर्कम् । ईश्वरः प्रजापतिः[†] सर्वस्यायतनं स्थानम् ॥

॥ तत् स्वाराज्यम् ॥

स्वयमीशिता[§] । स्वार्थे ष्यञ् ॥

॥ ऋक्षोत्येतमेवैताभिरेकविंशत्यैकविंशत्या ॥

एकविंशतिसंख्याभिराभिरादित्यमीश्वरम् ।
प्राप्नोति यष्टा होता च द्विरुक्तेरर्थ ईरितः[¶] ॥

चतुर्थः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ
सुखप्रदायां[२] पञ्चमोऽध्यायः ॥

**प्रथमपञ्चिका समाप्ता ॥**



---

१. 'स्वराट्' ख. ङ. पाठः. २. 'इति ब्राह्मणवृत्तौ सुखप्रदायां' क. ग., 'इति षड्गुरुशिष्येण विरचितायां ब्राह्मणव्याख्यायां' ख. ङ पाठ.

---

* 'ब्रध्न आदित्यः तस्य स्थानं त्रिविष्टपं विष्टप इति स्वर्गादित्ययोः साधारणनामत्वादिह स्वर्गार्थे परिगृहीतम् ' इति गोविन्दस्वामी. 'ब्रध्नस्यादित्यस्य विष्टपं स्थानभूतम् ' इति सायणः. † 'प्रजापतिर्गृहस्थः प्रजोत्पादनात् साधु । गृहस्थस्याप्यादित्यायतनत्वात्तगवर्गीयस्यायां प्रजापतेरायतनमित्युच्यते ' इति गोविन्दस्वामी. 'तदेव मण्डलं प्रजापतेरप्यायतनं स्थानम् । आदित्यमण्डले प्रजापत्युपासनस्याभिधानात् ' इति सायणः. § 'स्वाराज्यं नाम परमात्मतादात्म्यम् । 'आदित्यो ब्रह्म ' इति श्रुतेः तत् स्वाराज्यमित्युच्यते ' इति गोविन्दस्वामी. ¶ page 44.

## अथ षष्ठोऽध्यायः ।

अथाग्नीषोमीयपशौ यूपं वक्तुं ब्रवीति ह—

॥ यज्ञेन वै देवा ऊर्ध्वाः स्वर्गं लोकमायन् ॥

देवा इष्टेन यज्ञेन गतवन्तो दिवं प्रति ॥

गच्छन्तश्च[1],

॥ तेऽबिभयुः ॥

भीतवन्तः ॥

कथम्,

॥ इमं नो दृष्ट्वा मनुष्याश्च ऋषयश्चानु प्रज्ञास्यन्तीति ॥

स्वर्गमिति शेषः । "‘कल्पकः’ ।

नरर्षयो दृष्टयज्ञाः स्वर्गं यास्यन्ति हीत्यतः ॥

॥ तं वै यूपेनैवायोपयन् ॥

मिश्रणार्थाद् युपेः स्वार्थे णिचो लङ् ।

यूपेनामिश्रयन् यज्ञं पशुस्थापनकारिणा ॥

॥ तं यद् यूपेनैवायोपयंस्तद् यूपस्य यूपत्वम्† ॥

---

१. ‘गतवन्तश्च’ घ. ङ. पाठः.

---

* पा०सू० ६-१-१२८. † ‘यज्ञेन वै देवाः सुवर्गं लोकमायन् तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति । ते यूपेन योपयित्वा सुवर्गं लोकमायन् । तमृषयो यूपेनैवानुप्राजानन् तद् यूपस्य यूपत्वम् । यद् यूपं मिनोति सुवर्गस्य लोकस्य प्रज्ञात्यै’ इति तै० सं० ६-३-४.

यूपशब्दप्रवृत्तेस्तन्निमित्तमिति श्रूयताम् ॥

॥ तमवाचीनाग्रं निमित्योर्ध्वा उदायन् ॥

अधश्शिरस्कं संस्थाप्य यूपं जग्मुः सुरा दिवम् ।

अवाचीनं *'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः । निमित्य, ल्यपि तुक् ॥

॥ ततो वै मनुष्याश्च ऋषयश्च देवानां यज्ञवास्त्वभ्यायन् ॥

†'ऋत्यकः' ॥

केनाभिप्रायेण,

॥ यज्ञस्य किञ्चिदेषिष्यामः प्रज्ञात्या इति ॥

एषिष्यामः अधिगमिष्यामः । इषिर्गत्यर्थः । यत्किञ्चिद् यज्ञस्य सम्बन्धि । प्रज्ञात्यै ज्ञानाय ॥

आगत्य च,

॥ ते वै यूपमेवाविन्दन्नवाचीनाग्रं‡ निमितम् ॥

नान्यत् किञ्चित् ॥

॥ ते विदुः ॥

ज्ञातवन्तः ॥

कथम्,

॥ अनेन वै देवा यज्ञमयूयुपन्निति ॥

---

* पा० सू० ५-४-८.　† पा० सू० ६-१-१२८.　‡ 'अवाचीनाग्रम् अधस्ताग्रम्' इति गोविन्दस्वामी.

ततस्ते,

॥ तमुत्खायोर्ध्वं न्यमिन्वन् ॥

ऊर्ध्वरूपं स्थापितवन्तः ॥

॥ ततो वै ते प्र यज्ञमजानन् ॥

प्राजानन् ॥

॥ प्र स्वर्गं लोकम् ॥

अजानन्नित्येव ॥

॥ तद् यद् यूप ऊर्ध्वो निमीयते यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै ॥

निमीयते स्थाप्यते यत् तत् । अनुख्यातिरुपलम्भः ॥

किञ्च,

॥ *वज्रो वा एष यद् यूपः ॥

यद् यः ॥

॥ सोऽष्टाश्रिः कर्तव्यः ॥

अश्रिः कोटिः ॥

कुत एतत्,

॥ अष्टाश्रिर्वै वज्रस्तं तं प्रहरति द्विषते भ्रातृव्याय वधम् ॥

तं वधम् । द्वार्येऽस्मद्वयम् ।

तेनाष्टाश्रिवज्ररूपयूपेन वधकारिणा ।

---

* 'इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयम्' इति तै० सं० ६-१-३.

तं द्विषन्तं द्वेषयुक्तम्। भ्रातृव्यं शत्रुम्*। अमर्थे ॐहृयम्। प्रहरति ताडयति॥

व्याचष्टे—

॥ योऽस्य स्तृत्यस्तस्मै स्तर्तवै ॥

स्तृणः क्यप् छन्दस्त्वात्। †'कृत्यानां कर्तरि वा' इति षष्ठी।

अनेन हिंसनीयो यस्तस्मै तं हिंसितुं त्विति।
अमर्थे ॐ तुमर्थे तु तवैप्रत्यय‡ एव च।
अष्टाश्रितैवमर्थात्र यूपस्येति च शेषता॥

पुनः स्तौति—

॥ वज्रो वै यूपः स एष द्विषतो वध उद्यतस्तिष्ठति ॥

उद्यतः सन्नद्धः। वधः वधकारी§॥

॥ तस्माद्धाप्येतर्हि यो द्वेष्टि तस्याप्रियं भवत्यमुष्यायं यूपोऽमुष्यायं यूप इति दृष्ट्वा ॥

तस्मात् तथाहि। ह खलु। अपि एतर्हि इदानीमपि। अमुष्य मम शत्रोः। अप्रियं यूपावस्थानम्¶।

---

* 'वज्रोऽपि ब्राह्मणैः तं च तं च प्रहरति द्विषते भ्रातृव्याय वधोद्यम' इति गोविन्दस्वामी. 'द्विषते भ्रातृव्याय वधं द्वेष कुर्वतः शत्रोर्वधहेतुं तं वज्रं तं यूपं च पुरुषः प्रहरति प्रहारार्थं प्रयुङ्क्ते' इति सायणः. † पा॰ सू॰ २-३-७१. ‡ पा॰ सू॰ ३-४-९. § 'वधहेतुः' इति गोविन्दस्वामी. 'वधे निमित्तभूते सति' इति सायणः. ¶ 'अप्रियं यूपो भवति नपुंसकत्वं छान्दसः। कथं कृत्वा, वेदिदेशे तिष्ठन्तं यूपं दृष्ट्वा अमुष्यायं यूप इति क्रोधः संजायते यज्ञकार्यसौ इति कृत्वा। वीप्सावचनं प्रायिकत्वज्ञापनार्थम्' इति गोविन्दस्वामी. 'अमुष्य विरोधिनो यूप इति निश्चये सत्यप्रियं ननु यूपमात्रदर्शनेन' इति सायणः.

अथ यूपप्रकृतिद्रव्यमाह—

॥ *खादिरं यूपं कुर्वीत स्वर्गकामः ॥

कुतः,

॥ खादिरेण वै यूपेन देवाः स्वर्गं लोकमजयन् ॥

वशीकृतवन्तः ॥

॥ तथैवैतद् यजमानः खादिरेण यूपेन स्वर्गं लोकं जयति ॥

एतत् एषः ॥

॥ बैल्वं यूपं कुर्वीतान्नाद्यकामः पुष्टिकामः ॥

पुष्टिरनुभवः ॥

कथमेतत्,

॥ समां समां वै बिल्वो गृभीतस्तदन्नाद्यस्य रूपम् ॥

फलैरिति शेषः । गृहीतः सम्बद्धः । हृग्रहोर्भः† । वै यस्मात् । समां समां संवत्सरे संवत्सरे । तत् तेन । अन्नाद्यस्य फलस्य रूपम् अनुरूपं योग्यम् ॥

॥ आ मूलाच्छाखाभिरनु चितस्तत् पुष्टेः ॥

रूपमित्येव ।

---

* 'यूप्या वृक्षाः पलाशखदिरबिल्वरौहीतकाः । पालाशं तेजस्कामो यज्ञकामो वा खादिरं स्वर्गकामो वीर्यकामो वा बैल्वमन्नाद्यकामो ब्रह्मवर्चसकामो वा रौहीतकं प्रजाकामश्चक्षुष्कामो वा' इति आप० श्रौ० सू० ७-१-१५, १६. तथा तल्लक्षणं च तत्रैव—'समे जातमवालाग्रं बहुपर्णशाखमप्रतिशुष्काग्रमसुषिरमव्यावृत्तमपूर्णवक्रमूर्ध्व-मूर्ध्वशकलमय ईषदुपावनतं प्रागुदक् प्रत्यग् वोपनतम्' इति ७-१-१७. † पा० सू० वा० ८-२-३२

चितश्शाखानुशाखत्वाद् बिल्वोऽनुभवरूपवान ।
चितः पूरितः । तत् तेन ॥

ततश्च,

॥ पुष्यति प्रजां च पशूंश्च य एवं विद्वान् बैल्वं यूपं कुरुते ॥

पुष्यति अनुभवति । कुरुते सङ्गृह्णाति ॥

पुनः स्तौति—

॥ यदेव बैल्वा३म् ॥

*'अनुदात्तं प्रश्नान्ता—' इत्यभिपूजिते प्लुतः । कुरुत इत्येव ।

यूपस्य बिल्वद्रव्यत्वं यत् तत् सर्वैर्हि पूज्यते[1] ॥

किञ्च,

॥ बिल्वं ज्योतिरिति वा आचक्षते ॥

†ज्योतिर्दीप्तिकरं बिल्वं श्रियः स्थानं वदन्ति वै ॥

ततश्च,

॥ ज्योतिः स्वेषु भवति श्रेष्ठः स्वानां भवति य एवं वेद ॥

वेदिता ज्ञातिषु स्वेषु प्रदीपसदृशो भवेत् ।
ज्योतिः स्वेष्विति व्याचष्टे—श्रेष्ठः स्वानामिति ॥

---

1. 'पूज्यते बिल्वम्' घ. ङ. पाठः.

---

* पा० सू० ८-२-१००. † 'ज्योतिः ज्योतिष्टोमसाधनम्' इति गोविन्दस्वामी. 'श्रीवृक्षनामकत्वेन लक्ष्मीस्वरूपत्वात् पूज्यत्वेन ज्योतिर्भवति' इति सायणः

॥ पालाशं यूपं कुर्वीत तेजस्कामो ब्रह्मवर्चसकामः* ।
तेजो वै ब्रह्मवर्चसं वनस्पतीनां पलाशः ॥

वनस्पतीनां वृक्षाणां मध्ये ॥

ततश्च,

॥ तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् पालाशं
यूपं कुरुते ॥

स्तौति—

॥ यदेव पालाशा३म् ॥

यूपं कुरुत इत्येव । पूर्ववत् प्लुतः ।
यूपस्य पालाशत्वं तु सर्वदा संमतं सताम् ॥

किञ्च,

॥ सर्वेषां वा एष वनस्पतीनां योनिर्यत् पलाशः ॥

यद् यः । योनिः कारणम् ॥

उपपादयति—

॥ तस्मात् पलाशस्यैव पलाशेनाचक्षतेऽमुष्य पलाशममुष्य
पलाशमिति ॥

पलाशशब्दो वृक्षादेः पर्णेषु खलु वर्तते ।
शब्दश्चायं पलाशस्येत्येष सर्वस्य[1] कारणम् ॥

---

1. 'शब्दस्य' घ. ङ. पाठः.

---

* 'पुष्पाणामतिरक्तत्वात् पलाशस्य तेजस्त्वं, पत्रब्रह्मत्वश्रवणाद् ब्रह्मवर्चसत्वम् । तथाच शाखान्तरे श्रूयते—'देवा वै ब्रह्मावदन्त तत् पर्ण उपाशृणोद् (तै० सं० ३-५-७) इति' इति सायण:.

तस्मात् तथाहि ॥

ततश्च,

॥ सर्वेषां हास्य वनस्पतीनां काम उपाप्तो भवति य एवं वेद ॥

अस्यानेन वेदित्रा । उपाप्तो लब्धः ॥

प्रथमः खण्डः ।

---

अथ यूपाञ्जनोच्छ्रायपरिव्याणाभिधायिनीः ।
*ऋचः सप्तानुवक्तव्याः प्रब्रवीति प्ररोचयन्—

॥ †अञ्ज्मो यूपमनुब्रूहीत्याहाध्वर्युः ॥

अञ्ज्मः अञ्जनं कुर्मः । ‡'श्नान्नलोपः' । §'श्नसोरल्लोपः' । चुत्वम् ॥

होतापि,

॥ ¶अञ्जन्ति त्वामध्वरे देवयन्त इत्यन्वाह ॥

---

* 'पश्चात् पाशुबन्धिकाया वेदेः सन्निहित प्रेषितो यूपायाज्यमानायाञ्जन्ति त्वामध्वरे देवयन्त इत्युत्तमेन वचनेनार्धर्चं आरभेत् । उच्छ्रयस्व वनस्पते समिद्धस्य श्रयमाणः पुरस्तादूर्ध्व ऊषु ण ऊतय इति द्वे जातो जायते सुदिनत्वे अह्नामित्यर्धर्चं आरभेत् ।' इति आ० श्रौ० सू० ३-१-८, ९. † 'यूपायाज्यमानायानुब्रूहीति संप्रेष्यति, अज्यमानायानुब्रूहि अञ्ज्मो यूपमनुब्रूहीति वा' इति आप० श्रौ० सू० ७-१०-१. अञ्जनप्रकारश्च तत्रैव—'अथैनमसंस्कृतेनाज्येन यजमानोऽग्रतः शकलेनानक्ति । ऐन्द्रमसीति चषालमक्त्वा सुपिप्पलाभ्यस्त्वौषधीभ्य इति प्रतिमुच्य देवस्त्वा सविता मध्वानक्त्विति स्रुवेण सन्ततमविच्छिन्नमतिप्रावमनक्त्योपरात्' इति ७-१०-२, ३. ‡ पा० सू० ६-४-२३. § पा० सू० ६-४-१११. ¶ ऋक्सं० ३-१-२-१.

व्याचष्टे—

॥ अध्वरे ह्येनं देवयन्तोऽञ्जन्ति ॥

देवयन्तः देवान् यष्टुमिच्छन्तः । *क्यपि छन्दसि शतृ । ऋत्विजः ॥

॥ वनस्पते मधुना दैव्येनेति[1] ॥

अस्ति ॥

॥ एतद् वै मधु दैव्यं यदाज्यम् ॥

दैव्यं देवार्हम् । †देवस्य यञ्जौ ॥

दैव्येन †मधुनेत्यस्य त्वाज्येनेत्यर्थ इष्यताम् ॥

॥ यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद् यद्वा क्षयो मातुरस्या उपस्थे इति ॥

अस्ति ॥

व्याचष्टे—

॥ यदि च तिष्ठासि यदि च शयासै द्रविणमेवास्मासु धत्तादित्येव तदाह ॥

हे यूप यदि शेषे त्वमूर्ध्वस्तिष्ठसि वा यदि ।
सर्वथा धनमस्मभ्यं प्रभूतं दातुमर्हसि ॥

तिष्ठासि । लेट् आट् । शयासै । सिप् । ‡'वैतोऽन्यत्र' । आट् । अस्या मातुर्भुवः । उपस्थे उपरि । क्षयः निवासः ॥

1. 'दैव्येनेति एतद्' च ङ. पाठः.

* पा॰ सू॰ वा॰ ४-१-८५. † 'मधुना मधुरेण' इति सायणः
‡ पा॰ सू॰ ३-४-९६.

॥ [*]उच्छ्रयस्व वनस्पत इत्युच्छ्रीयमाणाय ॥

उच्छ्रीयमाणमभिप्रातुमुच्छ्रयस्वेति द्वितीयामन्वाह[†] ॥

इयं च,

॥ अभिरूपा । यद् यज्ञेऽभिरूपं तत् समृद्धम् । वर्ष्मन्
पृथिव्या अधीति ॥

अत्रास्ति ॥

॥ एतद् वै वर्ष्म पृथिव्यै यत्र यूपमुन्मिन्वन्ति ॥

वर्ष्म [‡]उत्कृष्टदेशः । पृथिव्यै पृथिव्याः । उदूर्ध्वं मिन्वन्ति स्थापयन्ति ॥

[||]॥ सुमिती मीयमानो वर्चो धा यज्ञवाहस इति ॥

अस्ति ॥

॥ आशिषमाशास्ते ॥

हे यूप सुष्ठु मित्या स्थापनेन[§] मीयमानः वर्चस्तेजः धाः देहि । यज्ञस्य वाहसे निर्वाहाय[¶] त्वमिति वदन् ॥

॥ [$]समिद्धस्य श्रयमाणः पुरस्तादिति ॥

तृतीयामन्वाह ॥

---

* ऋक्सं० ३-१-३-३. † 'यूपायोच्छ्रीयमाणायानुब्रूहीति संप्रेष्यत्युच्छ्रीयमाणाया-नुब्रूहीति वा उद्दीप्त स्तमानान्तरिक्षं प्रणेत्युच्छ्रयति' इति आप० श्रौ० सू० ७-१०-६, ७. ‡ 'वर्ष्मणि शरीरभूते यूपावटदेशे', § 'सुमित्या कल्याण्या प्रक्षया' इति गोविन्दस्वामी. ¶ 'यज्ञनिर्वाहकाय यजमानाय' इति सायणः. $ ऋक्सं० ३-१-३-२.

व्याचष्टे—

॥ समिद्धस्य ह्येष एतत् पुरस्ताच्छ्रयते ॥

*समिद्धाहवनीयात् प्राग् यूप उच्छ्रीयते खलु ।

यकः श्नप् । एतदेतर्हि ॥

॥ ब्रह्म वन्वानो अजरं सुवीरमिति ॥

अस्ति ॥

॥ आशिषमेवाशास्ते ॥

एव पुनः । वन्वानः संभजन् । ब्रह्म यज्ञं सुवीरं सुपुत्रं निर्जरमिति वदन् ॥

॥ आरे अस्मदमतिं बाधमान इति ॥

अस्ति ॥

अमतिशब्दं निराह—

॥ अशनाया वै पाप्मामतिः ॥

अशनाया बुभुक्षा क्षुत् पाप्मोपद्रव एव सः ।
अमतिः क्षुदुपेतानां न किञ्चित् प्रतिभाति हि† ॥
‡अशनात् क्यच्यशनायोदन्येति हि निपात्यते ॥

॥ तामेव तदारान्नुदते यज्ञाच्च यजमानाच्च ॥

तां क्षुधम् । आराद्दूरे । नुदते द्रावयति । यजमानात् यज्ञात् तत्कारिभ्य ऋत्विग्भ्यश्च ॥

---

* 'अग्रेणाहवनीयं यूपावटं परिलिख्यार्धमन्तर्वेद्यर्धं बहिर्वेदि' इति आप० श्रौ० सू० ७-९-६. † तथाच महाभाष्ये—'बुभुक्षितं न प्रतिभाति किंचित्' इति (२-३-२). ‡ पा० सू० ७-४-३४.

॥ उच्छ्रयस्व महते सौभगायेति । आशिषमेवाशास्ते ॥

एव पुनः । महते सौभाग्याय संपदे त्वमुत्तिष्ठेति वदन् ॥

॥ *ऊर्ध्व ऊ षु ण ऊतये ॥

इत्यन्वाह ॥

अत्रास्ति,

॥ तिष्ठा देवो न सवितेति ॥

नमोऽर्थमाह—

॥ यद् वै देवानां नेति तदेषामोमिति ॥

†अवोचामास्य वाक्यस्य व्याख्यानं ह्यग्निमन्थने ॥

॥ तिष्ठ देव इव सवितेत्येव तदाह ॥

यूप यज्ञे प्रकाशस्व यथा सूर्योऽन्तरिक्षगः ॥

॥ ऊर्ध्वो वाजस्य सनितेति ॥

अस्ति ॥

व्याचष्टे—

॥ वाजसनिमेवैनं तद्धनसां सनोति ॥

सनोति सान्त्वेन प्रवर्तयति । ‡'छन्दसि वनसन—' इतीन् । वाजस्यान्नस्य दाता वाजसनिः । धनसाम् । §'जनसन—' इति विट्यात्वम् । तत् तत्र । एनं यूपम् । वाजस्यार्थो धनमिति¶ ॥

---

* ऋक्सं० १-३-१०-३. † pages 104 & 105. ‡ पा० सू० ३-२-२७. § पा० सू० ३-२-६७. ¶ 'वाजसनिमेवान्नदातारमेव सनोति करोतीत्यर्थः । एतस्योपलक्षणत्वाद् धनसां सुवर्णादिदातारं च करोति' इति सायणः.

॥ यदङ्गिभिर्वाघद्भिर्विह्वयामह इति ॥

अस्ति ॥

॥ छन्दांसि वा अङ्गयो वाघतः ॥

*ऋत्विङ्नाम वाघदिति सुहृद् स्निग्धोऽङ्गिरुच्यते† ।
छन्दांसि गायत्र्यादीनि सुहृदित्यृत्विगादिवत्‡ ॥

निर्वाहक्षमाणि[1] ॥

कथं,

॥ तैरेतद् देवान् यजमाना विह्वयन्ते मम यज्ञमागच्छत मम यज्ञमिति ॥

§'निसमुपविभ्यो ह्वः' इति तङ् । एतद्देवे । तैश्छन्दोभिः विविधमाह्वयन्ति ॥

स्तौति—

॥ यदि ह वा अपि बहव इव यजन्तेऽथ हास्य देवा यज्ञमेव गच्छन्ति यत्रैवं विद्वानेतामन्वाह ॥

इव एव ॥

कुर्वत्सु यज्ञं बहुषु यज्वनोऽस्याध्वरे सुराः ।
आगच्छन्त्येव होता य एवं विद्वान् भवेद्यदि ॥

यत्र सोऽस्त्, यः ॥

---

१. 'निर्वाहक्षमाणि । तैरेतद्' ख. पाठः

---

* या० निघ० ३-१८. † 'अङ्गिभिः आज्येनाक्तैः' इति गोविन्दस्वामी. 'अङ्गिभिः कृत्स्नमिश्रफलकारिभिः', ‡ 'अत्राङ्गिवाघच्छब्दाभ्यामृत्विग्रूपमापन्नाः छन्दोभिमानिनो देवा उच्यन्ते' इति सायणः. § पा० सू० १-३-३०.

॥ [*]ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दहेति ॥

अन्वाह ॥

अत्रिण इति व्याचष्टे—

॥ रक्षांसि वै पाप्माऽत्रिणः ॥

[†]अदेस्त्रिरत्रिर्त्रीत्रादीन्[‡] जसि णत्वेऽत्रिणः पदम्[§] ।

पाप्मा पापमुपद्रवः ॥

ततश्च,

॥ रक्षांसि पाप्मानं दहेत्येव तदाह[1] ॥

तत् सः ।

सर्वस्य भक्षकान् रक्षोजातीयान् पापमेव च ।
यूप सन्दह रक्षास्मानंहसश्चेति वै वदन् ॥

॥ कृधी न ऊर्ध्वा चरथाय जीवस इति यदाह कृधी न ऊर्ध्वा चरणाय जीवस इत्येव तदाह ॥

[¶]चरेरथः कृतो भाव इति वक्ति ल्युटं वदन् ।
कुरु नो बहुसंपर्कान् गतये जीवनाय च ॥
बहुना किं त्वमूर्ध्वः सन् सम्पदोर्ध्वाय चेह नः ॥

---

1. 'तदाह । सर्वस्य' घ. पाठः.

---

* ऋक्सं० १-३-१०-४. † उणादिसू० ४-६९. ‡ पा० सू० ५-२-११६. § 'त्रिलोका यस्य न भवन्ति इति सोऽत्रिः तानि च रक्षांसि पापं वा' इति गोविन्दस्वामी. ¶ 'चशब्दः पूर्ववाक्येन समुच्चयार्थः । अपि हे यूप रथाय जीवसे रथारोहणपूर्वकाय जीवनाय । यद्वा चरथमित्येकमेव पदं चरथं चरणमाचारः तस्मै' इति सायणः.

॥ यदि ह वा अपि नीत इव यजमानो भवति, परि हैवैनं तत् संवत्सराय ददाति ॥

इति वदन् होतेति शेषः।

यमेन यदि यज्वायं नीतः[1] संयमनीं पुरीम्।
तथाप्येनं शताब्दाय* होता परिददाति वै ॥
एवं नामायुषो वृद्धिं कुर्याद्धोतेतिवै वदन्।
जीवसे चरथायेति पदयुग्ममिति स्तुतम् ॥

॥ विदा देवेषु नो दुव इत्याशिषमेवाशास्ते ॥

एव पुनः। नोऽस्माकम्। दुवः परिचर्याः। देवेषु †विदाः विद्धीति वदन् ॥

॥ ‡जातो जायते सुदिनत्वे अह्नामिति ॥

व्याचष्टे—

॥ जातो ह्येष एतज्जायते ॥

एतदेतर्हि ॥

पूर्वं वृक्षतया जातो यज्ञियत्वेन जायते ॥

॥ समर्य आ विदथे वर्धमान इति वर्धयन्त्येवैनं तत् ॥

एनं यूपं वर्धयन्त्यृत्विजः। तत् तत्र ॥

॥ पुनन्ति धीरा अपसो मनीषेति पुनन्त्येवैनं तत् ॥

---

१. 'यद्वा स्वार्थातः' ग. पाठः.

---

* 'संवत्सराय आयुष्प्रदाय कालात्मने', † 'विदा वेदय कथयेत्यर्थः' इति सायणः. ‡ ऋक्सं० ३-१-३-५.

पुनन्ति शोधयन्ति। तत् तत्र॥

॥ देवया विप्र उदियर्ति वाचमिति देवेभ्य एवैनं तन्निवेदयति ॥

तत् तत्र। निवेदयति ज्ञापयति॥

॥ *युवा सुवासाः परिवीत आगादित्युत्तमया परिदधाति† ॥

सप्तम्या त्रिः समापयेत्॥

यूपं प्राणतया स्तौति व्याचक्षाण इमामृचम्—

॥ प्राणो वै युवा सुवासाः ॥

कथं,

॥ सोऽयं शरीरैः परिवृतः ॥

‡सर्वशरीरवर्तित्वात् प्राणस्य॥

॥ स उ श्रेयान् भवति जायमान इति श्रेयान् श्रेयान् ह्येष एतद् भवति जायमानः ॥

एतदेतैर्लक्षणजोषणाञ्जनोच्छ्रयणपरिव्याणैर्जायमानो यूपीभवन्। §वीप्सा प्रयोगापेक्षा॥

॥ तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त इति॥

---

* ऋक्सं० ३-१-३-४. † 'युवा सुवासाः परिवीत आगादिति परिदध्यात्' इति आ० श्रौ० सू० ३-१-९. ‡ 'कदाचिदपि जरारहितत्वात् प्राणस्य युवत्वं प्राणेनाच्छन्न-रूपत्वाच्छरीरावयवानां वस्त्ररूपत्वम्' इति सायनः. § 'वीप्सा यूपानां भूयस्तया प्रतिसंस्कारं यूपभेदः' इति गोविन्दस्वामी.

कवय इति व्याचष्टे—

॥ ये वा अनूचानास्ते कवयः ॥

अनूचानः सर्ववेदपाठार्थाध्यापनादिमान् ॥

॥ त एवैनं तदुन्नयन्ति ॥

तत् तस्मिन् काले उन्नयन्त्यूर्ध्वं स्थापयन्ति ॥

॥ ता एताः सप्तान्वाह रूपसमृद्धाः ॥

अञ्जन्त्यादियुवास्वन्ताः ॥

॥ एतद् वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत् कर्म क्रियमाणमृगभिवदति तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां ता एकादश सम्पद्यन्ते ॥

सप्तसु चतुराधिक्यात् ॥

॥ एकादशाक्षरा वै त्रिष्टुप् ॥

पादद्वारा ॥

॥ त्रिष्टुबिन्द्रस्य वज्रः ॥

इन्द्रबलोपोद्वलकत्वात् ॥

॥ इन्द्रायतनाभिरेवाभी राघ्नोति य एवं वेद । त्रिः प्रथमां त्रिरुत्तमामन्वाह यज्ञस्यैव तद् बर्सौ नह्यति स्थेम्ने बलायाविस्रंसाय ॥

*व्याख्यातम् ॥

द्वितीयः खण्डः ।

---

* page 91.

पशौ समाप्ते यूपोऽग्नौ त्याज्यो नेति विचार्य तु ।
तस्य स्थाने स्वरुर्नाम निधेय¹ इति कथ्यते—

॥ तिष्ठेद् यूपा३ः । अनु प्रहरे३दित्याहुः ॥

पशुप्रयोगे प्रवृत्ते हृञ् त्यागे संशये प्लुतौ ।
ह्रियेत वर्त्विजा सोऽग्नौ यक्तङोः शप्सिपौ लिङि ॥

तत्र,

॥ तिष्ठेत् पशुकामस्य ॥

यष्टुः ॥

अत्रेतिहासमाह—

॥ देवेभ्यो वै पशवोऽन्नाद्यायालम्भाय नातिष्ठन्त ॥

अन्नाद्यकामैर्देवैस्तु पशवो हि जिघांसिताः ।
नात्रातिष्ठन्त तङ् चापि तिष्ठतेर्वै प्रकाशने* ॥
†श्लाघह्नुङ्स्थेति ‡ङेर्यश्च §लभेश्चेत्येव नुं² घञि ॥

स्पष्टयति—

॥ तेऽपक्रम्य प्रतिवावदतोऽतिष्ठन्नास्मानालप्स्यध्वे नास्मानिति ॥

लभेर्लृट् ध्वम् । ¶'खरि च' इति भस्य पः । वदेर्यङ्लुगन्ताच्छतुर्जस् । $'नाभ्यस्ताच्छतुः' इति नुंप्रतिषेधः³ ॥

---

१. 'विधेय', २. 'लभेश्चैव च नुं' ख. ग. पाठः. ३. 'नाभ्यस्ताच्छतुर्नुम् ।' क. पाठः.

---

* पा० सू० १-३-२३. † पा० सू० १-४-३४. ‡ पा० सू० ७-१-१३. § पा० सू० ७-१-६४. ¶ पा० सू० ८-४-५५ $ पा० सू० ७-१-७८

॥ ततो वै देवा एतं यूपं वज्रमपश्यन् ॥

दृष्ट्वा च,

॥ तमेभ्य उदश्रयन् ॥

एभ्यः एषां पशूनामर्थाय । उच्छ्रितमकुर्वन् ॥

॥ तस्माद् बिभ्यत उपावर्तन्त ॥

तस्मादुच्छ्रिताद्[1] यूपात् । बिभ्यतो भीताः पशव उपावर्तन्त देवसमीपमागताः ॥

॥ तमेवाद्याप्युपावृत्ताः ॥

तं यूपम् ॥

॥ ततो वै देवेभ्यः पशवोऽन्नाद्यायालम्भायातिष्ठन्त । तिष्ठन्तेऽस्मै पशवोऽन्नाद्यायालम्भाय य एवं वेद ॥

अस्मै वेदित्रे ॥

॥ यस्य चैवं विदुषो यूपस्तिष्ठति ॥

तस्मै च यष्ट्रे ॥

तिष्ठेत्तु पशुकामस्येत्युक्तोऽर्थ उपपादितः ॥

॥ अनु प्रहरेत् स्वर्गकामस्य ॥

यष्टुश्च स्वर्गकामस्य यूपमग्नौ क्षिपेत् सुखम् ॥

कुतः,

॥ तमु ह स्मैतं पूर्वेऽन्वेव प्रहरन्ति ॥

---

१. 'तस्मादुच्छ्रिताद् बिभ्यतः' क. पाठः.

*एतं स्वरुम्, एतस्य स्वर्गकामस्य यष्टुः । तं यूपम् । उ पुरा । पूर्वे महर्षयः । अनुप्रहरन्ति स्म ह अग्नौ क्षिपन्तः ।

पूर्वप्रवृत्त आचारोऽत्रास्माभिः क्रियतामिति ॥

उपपादयति—

॥ यजमानो वै यूपो यजमानः प्रस्तरोऽग्निर्वै देवयोनिः । सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेष्यतीति ॥

यष्टृत्वेन स्थितो[1] यूपो वेदे प्रस्तरवत्ततः ।
देवत्वापादने हेतुरग्निश्च श्रूयते श्रुतौ ॥

इत्येभ्यर्थम् ।

अग्नेर्यूपाहुतेर्जातो हिरण्यीकृतदेहकः ।
भूत्वा स्वर्गं यास्यतीति हेतुं ते चाब्रुवन्निति[2] ॥

प्रकारान्तरमाह—

॥ अथ ये तेभ्योऽवर आसंस्त एतं स्वरुमपश्यन् यूपशकलम् ॥

अथेति पक्षान्तरे । अवरेऽर्वाचीनाः । तेभ्यः पूर्वेभ्यः[3] । ये ते । एतं लुप्तोपमं, यूपमिव ।

स्वरुसंज्ञं यूपकार्ये शकलं ददृशुः पुरा ॥

---

१. 'स्थितो', २. 'चाब्रुवन्निति । अथ', ३. 'पूर्वेभ्यः एतं' प. क. पाठः.

---

* 'तमेतं यूपम्' इति सायणः.

ततश्च,

॥ तं तस्मिन् कालेऽनु प्रहरेत्* ॥

यूपानुप्रहृतेः काले स्वरुरग्नौ निधीयताम् ।
यूपस्य तक्षणे जातं[1] शकलं स्वरुरुच्यते† ॥

स्तौति—

॥ तत्र स काम उपाप्तो योऽनुप्रहरणे ॥

तत्र स्वरौ प्रहृतेऽपि यूपानुप्रहरणे यः कामः स उपाप्तः स्यात् ॥

किञ्च,

॥ तत्र स काम उपाप्तो यः स्थाने ॥

तत्र स्वरौ प्रहृते यूपे च स्थिते सति यूपस्थितौ यः कामः स उपाप्तः स्यात् ॥

अथाग्नीषोमदेवत्यं विधातुं पशुमाह ह—

॥ सर्वाभ्यो वा एष देवताभ्य आत्मानमालभते यो दीक्षते ॥

दीक्षमाणः स्वकं देहं देवेभ्यो दत्तवान् खलु ॥

ततः किम्,

॥ अग्निः सर्वा देवताः सोमः सर्वा देवताः । स यदग्नीषोमीयं पशुमालभते सर्वाभ्य एव तद् देवताभ्यो यजमान आत्मानं निष्क्रीणीते‡ ॥

१ 'यूपतक्षणेऽपजातम्' क पाठः

* 'देवा वै संस्थिते सोमे प्र स्रुचोऽहरन् प्र यूपं तेऽमन्यन्त यज्ञवेशसं वा इदं कुर्म इति ते प्रस्तरं स्रुचां निष्क्रयणमपश्यन् स्वरुं यूपस्य संस्थिते सोमे प्र प्रस्तरं हरति जुहोति स्वरुमयज्ञवेशसाय' इति तै॰ सं॰ ६-३-४. 'जुह्वां स्वरुमवदायानूयाजान्ते जुहोति द्यां ते धूमो गच्छतु' इति आप॰ श्रौ॰ सू॰ ७-२७-४. † 'अवतक्षणानां स्वरुः' इति आप॰ श्रौ॰ सू॰ ७-३-३. ‡ 'पुरा खलु वावैष मेधायात्मानमारभ्य चरति यो दीक्षितो यदग्नीषोमीयं पशुमालभत आत्मनिष्क्रयण एवास्य सः' इति तै॰ सं॰ ६-१-११.

स दीक्षितः । आलभत इति यत् तत् तेन[1] । निष्क्रीणीते मेचयति ॥

॥ तदाहुर्द्विरूपोऽग्नीषोमीयः कर्तव्यो द्विदेवत्यो हीति ॥

पशुः शुक्लादिरूपेषु द्विवर्णः स्याद् द्विरूपकः ।
देवताद्वित्वयोगेन द्विवर्णत्वं च सोऽर्हति ॥

॥ तत्तन्नादृत्यम् ॥

उक्तार्थम्* ॥

कथं तर्हि,

॥ पीव इव कर्तव्यः ॥

इव एव । पीवस् पीवन् पीन इति पर्यायाः ।

†अत्वसन्तस्य सौ दीर्घः[2] छन्दस्त्वान्नैव पीवसः ॥
पीनाङ्गस्तु पशुः कार्यस्तत्र कारणमुच्यते—

॥ पीवोरूपा वै पशवः ॥

परिपुष्टाङ्गाः[3] ॥

॥ कृशित इव खलु वै यजमानो भवति । तद् यत् पीवा पशुर्भवति यजमानमेव तत् स्वेन मेधेन समर्धयति ॥

तत् तत्र । पीनः पशुर्भवतीति यत् तत् तेन । मेधेन यज्ञयोग्याभिरूपेण ॥

---

१. 'तेन तदाहुः', २. 'सोदीर्घः', ३. 'परिपुष्टाङ्गाः । कृतः । कृशितः' क. पाठः.

---

* page 29. † पा० सू० ६-४-१४.

पशोः पीनाहुतोच्छाय शेषभक्षं निषेधति—

॥ *तदाहुर्नाग्नीषोमीयस्य पशोरश्नीयात् ॥

हुतशेषमिति शेषः ॥

कुतः,

॥ पुरुषस्य वा एषोऽश्नाति योऽग्नीषोमीयस्य पशोरश्नाति ॥

कुतः,

॥ यजमानो ह्येतेनात्मानं निष्क्रीणीत इति ॥

ब्रह्मवादिन आहुरित्यर्थः ॥

॥ तत् तन्नादृत्यम् । †वार्त्रघ्नं वा एतद्धविर्यदग्नीषोमीयः ॥

पशुः । यत् यः ॥

कथम्,

॥ अग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्‡ ॥

अग्निः सोमश्च शक्रस्य पुरा वृत्रं जिघांसतः ।
साहाय्यं कृतवन्तौ यत्[1] तद्वार्त्रघ्नं पशोरभूत् ॥

हतो ऽवधीत्यहन् ॥

---

१. 'तद् वार्त्रघ्नतं पशोरभूत' घ. ङ. पाठः.

---

* 'तस्मात् तस्य नाश्यं पुरुषनिष्क्रयण इव हि' इति तै० सं० ६-१-११. 'न यजमानोऽग्नीषोमीयस्याश्नाति अश्नीयाद् वा' इति आप० श्रौ० सू० ११-२०-१४. † 'अथो खल्वाहुरग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवास्य स तस्माद्वाद्यम्' इति तै० सं० ६-१-११. ‡ अयं चार्थः 'त्वष्टा हतपुत्रो वीन्द्रं सोममाहरद्' (तै० सं० २-५-२) इत्यनुवाके प्रपञ्चितः.

उपपादयति—

॥ तावेनमब्रूतामावाभ्यां वै वृत्रमवधीः । वरं ते वृणावहा इति ॥

तावग्नीषोमौ । एनमिन्द्रम् । अवधीः *'लुङि च' इति वधादेशः । ते त्वत्तः । त्वत्तः वृणावहै वरमिति । लोट् आट् । †'एत ऐ' ॥

॥ वृणाथामिति ॥

इन्द्र उक्तवान् । वरणं कुरुतम् । आथां टेरेत्वम् । ‡'आमेतः'[1] ॥

ततः,

॥ तावेतमेव वरमवृणाताम् ॥

वृतवन्तौ ॥

एतमित्युक्तमाह—

॥ श्वः सुत्यायां पशुम् ॥

अवृणातामित्येव ।

सुत्यायां श्वः स्थितायां यः पूर्वेद्युः क्रियते पशुः ।
आवयोः सोऽस्त्वितीन्द्राद् वृतवन्तौ वरं हि तौ ॥

ततश्च,

॥ स एनयोरेषोऽच्युतः ॥

स एष पशुः । एनयोरग्नीषोमयोः । अच्युतो नित्यः ॥

---

1. 'आमेतः तावेतं' घ. ङ. पाठः.

---

* पा० सू० २-४-४३. † पा० सू० ३-४-९३. ‡ पा० सू० ३-४-९०.

क्रुतः,

॥ वरवृतो ह्येनयोः ॥

भ्याम ओम्, आभ्याम् । वरवृतः वररूपेण वृतः ॥

॥ तस्मात् तस्याशितव्यं चैव लीप्सितव्यं च ॥

मांसमस्य पशोस्तस्मादेष्टव्यं भोज्यमेव च ।

लभेः *'सनिमीमा—' इत्यच इस् । तस्य इद् । ईत्वं छान्दसम् ॥

तृतीयः खण्डः ।

---

†एकादश प्रयाजाः स्युस्तिष्ठत्येव पशौ हि ये ।
तद्याज्या ऋच ‡आप्रयः स्युस्ताभिर्यागं ब्रवीत्यथ—

॥ आप्रीभिराप्रीणाति ॥

आप्रीत्यत्र प्रीतिकारी यजने वर्तते खलु ।
यागेन तर्पयेदत्र समिदाद्यास्तु देवताः ॥

स्तौति—

॥ तेजो वै ब्रह्मवर्चसमाप्रयः ॥

ततश्च,

॥ तेजसैवैनं तद् ब्रह्मवर्चसेन समर्धयति ॥

तत् तत्र ॥

---

* पा० सू० ७-४-५४. † 'तिष्ठति पशावेकादश प्रयाजान् यजति' इति आप० श्रौ० सू० ७-१४-६. 'तथाचाश्वलायनसूत्रं पशाविष्ठाधिकृत्य—'एकादश प्रयाजाः' इति ३-२-१. तेषां देवताश्च—समिधस्तनूनपाद् इळा बर्हिर्द्वार उषासानक्ता दैव्याहोतारा-स्तिस्रो देव्यस्त्वष्टा वनस्पतिः स्वाहाकृतय इति. ‡ तथाच तै० ब्रा० 'आप्रीभिराप्नुवन् तदाप्रीणामाप्रीत्वम्' १-२-८ इति 'आप्रियः कस्मात् । आप्नोतेः प्रीणातेर्वा । आप्रीभिराप्रीणातीति च ब्राह्मणम्' इति या० निरु० ८-४.

अथ विविच्य स्वशब्देनाह—

॥ समिधो यजति ॥

स्तौति—

॥ प्राणा वै समिधः ॥

इन्धेः क्विप् । नलोपः जस् । चक्षुरादयः ॥

॥ प्राणा हीदं सर्वं समिन्धते यदिदं किञ्च ॥

इन्धते प्रकाशयन्ति । *'श्नान्नलोपः' । †'श्नसोरल्लोपः' । इदं जगत् । इदं सर्वमिति व्याचष्टे—यदिदं किञ्चेति ॥

॥ प्राणानेव तत् प्रीणाति ॥

तत् तत्र । प्रीणाति सुष्ठु करोति ॥

॥ प्राणान् यजमाने दधाति ।
तनूनपातं यजति ॥

द्वितीयोऽयम् ॥

॥ प्राणो वै तनूनपात् ॥

कथं,

॥ स हि तन्वः पाति ॥

तन्वः तनूः । शसि यण् । देहान् पाति रक्षति । पातेः पा । नेत्युपजनः क्विपि तुक् ॥

---

* पा० सू० ६-४-२३. † पा० सू० ६-४-१११.

॥ प्राणमेव तत् प्रीणाति । प्राणं यजमाने दधाति ।
नराशंसं यजति ॥

अयमपि द्वितीयो वसिष्ठशुनकात्रिवध्र्यश्वराजन्यानाम् । श्रूयते हि*—'अन्यत्र वसिष्ठ—' इत्यादि ॥

नराशंसशब्दं निराह—

॥ प्रजा वै नरो वाक् शंसः ॥

नरेत्युक्ता प्रजा शंसशब्देनोक्तात्र वाक् खलु ।
इत्यर्थः ॥

॥ प्रजां चैव तद्वाचं च प्रीणाति । प्रजां च वाचं च
यजमाने दधाति ।
इळो यजति ॥

†अन्ननाम्न इळाशब्दाच्छस्याल्लोप इळःपदम् ।
तृतीयोऽयम् ॥

॥ अन्नं वा इळः ॥

‡ईळिधातोरिट्पदेन प्रोक्तं ह्यन्नं सदा स्तुतम् ॥

॥ अन्नमेव तत् प्रीणाति । अन्नं यजमाने दधाति ।
बर्हिर्यजति ॥

चतुर्थोऽयम् ॥

॥ पशवो वै बर्हिः ॥

§बर्हिषा तृणपुञ्जेन वर्धन्ते पशवः सदा ॥

---

* आ० श्रौ० सू० १-५-२१. "अनयोरुभयोर्मन्त्रयोरधिकारिभेदेन व्यवस्थामाप-स्तम्ब आह—'नराशंसो द्वितीयः प्रयाजो वासिष्ठशुनकानां, तनूनपादितरेषां गोत्राणाम्' " इति सायणः. † या० निघ० २-७. ‡ 'इष्यत इति व्युत्पत्त्यान्नमिट्शब्दवाच्यम्', § 'बृंहणस्य पोषणस्य हेतुर्बर्हिः पशवश्च क्षीरादिदानेन तादृशत्वाद् बर्हिःस्वरूपाः' इति सायणः.

॥ पशूनेव तत् प्रीणाति। पशून् यजमाने दधाति।
दुरो यजति ॥

पञ्चमोऽयम्। द्वार इत्यस्य दुर इत्युक्तिः। *'होता यक्षद्दुर' इति प्रैषदर्शनात् ॥

॥ वृष्टिर्वै दुरः ॥

सर्वाभ्युदयद्वारत्वाद् वृष्टेः ॥

॥ वृष्टिमेव तत् प्रीणाति। वृष्टिमन्नाद्यं यजमाने दधाति।
उषासानक्ता यजति ॥

षष्ठोऽयम् ॥

॥ अहोरात्रे वा उषासानक्ता ॥

†उषासेति दिनं प्रोक्तं नक्तेत्युक्ता निशा त्विति ॥

॥ अहोरात्रे एव तत् प्रीणाति। अहोरात्रयोर्यजमानं दधाति।
दैव्या होतारा यजति ॥

सप्तमोऽयम् ॥

॥ प्राणापानौ वै दैव्या होतारा ॥

द्वित्वात् ॥

॥ प्राणापानावेव तत् प्रीणाति। प्राणापानौ यजमाने दधाति।
तिस्रो देवीर्यजति ॥

---

* तै० ब्रा० ३.६.२.　† 'उषाशब्दो लक्षणयाहरर्थः' इति गोविन्दस्वामी.

अष्टमोऽयम् ॥

॥ प्राणो वा अपानो व्यानस्तिस्रो देव्यः ॥

सरस्वतीळाभारत्यस्तिस्रो देव्यो हि ताः पुनः ।
ब्रह्मविष्णुसूर्यपत्न्यस्ताश्च प्राणादिभिः समाः ॥
इळा भूमिः स्त्री तु भानोर्भरतस्य हि भारती* ।
वायुः प्राणो हि निष्क्रामन्[1] प्रविशन् स्यादपानकः ॥
सर्वाङ्गव्यापको व्यान एते देहस्य रक्षकाः ॥

॥ ता एव तत् प्रीणाति । ता यजमाने दधाति[2] ॥

ताः प्राणादिरूपा देवीः ॥

॥ त्वष्टारं यजति ॥

नवमोऽयम् ॥

॥ वाग् वै त्वष्टा ॥

त्वष्टृशब्दं वाचि निराह—

॥ वाग्घीदं सर्वं ताष्टीव ॥

†ताष्टि प्रकाशयति । ‡'आरभमाणा भुवनानि विश्वे'ति मन्त्रवर्णात् । वकारस्याकारः । इव एव ॥

---

१. 'प्राणोऽभिनिष्क्रामन्', २. 'दधाति । त्वष्टारं' ख. पाठः.

---

* 'भरत आदित्यस्तस्य भाः' इति या० नि० ८-१३, 'भरत आदित्यस्तस्य स्वभूता दीप्तिः' इति ऋग्भाष्ये ८-६-९-३ सायणः. † 'त्वक्षिधातोरुत्पन्नः शब्दस्त्वष्टार-माचष्टे वाचश्च तक्षणहेतुत्वात् त्वष्टृत्वम् । यस्मादिदं जगत् सर्वं वाक् ताष्टीव तक्षतीव, यथा तक्ष्णेन काष्ठं प्रौढमपि सूक्ष्मं भवति एवं महान्तोऽपि पर्वतादयोऽल्पेनैव शब्देन गृह्यन्ते तदेतज्जगत् तष्टमिव भवति' इति सायणः. ‡ ऋक्सं० ८-७-१२-३.

॥ वाचमेव तद् प्रीणाति वाचं यजमाने दधाति ।
वनस्पतिं यजति ॥

दशमोऽयम् ॥

॥ प्राणो वै वनस्पतिः ॥

*वननीयत्वात् पतित्वाच्च ॥

॥ प्राणमेव तद् प्रीणाति प्राणं यजमाने दधाति ।
स्वाहाकृतीर्यजति ॥

एकादशोऽयम् ॥

॥ प्रतिष्ठा वै स्वाहाकृतयः ॥

†प्रतिष्ठाहेतुत्वात् ॥

॥ प्रतिष्ठायामेव तद् यज्ञमन्ततः प्रतिष्ठापयति ॥

अन्ततः प्रयाजानामन्ते ॥

तत्र त्व,

॥ ‡ताभिर्यथऋष्याप्रीणीयात् ॥

ताभिराप्रीभिः । यथऋषि । §'ऋत्यकः' इति ह्रस्वप्रकृतिभावौ ।

स्वगोत्रप्रवरर्ष्युक्तसूक्ताप्रीत्वं यथर्षिता ।
¶अनुवाकानुक्रमण्यामुक्ता अप्यृषयो दश ॥

"कण्वाङ्गिरोगस्त्यशुनका विश्वामित्रोऽत्रिरेव च ।
वसिष्ठकश्यपवध्र्यश्वा जमदग्निस्योत्तमः" ॥

---

* 'वनस्पतिजन्यफलानां प्राणावस्थितिहेतुत्वाद् वनस्पतेः प्राणत्वम्'। † 'आहुतिसमाप्तिहेतुत्वात् प्रतिष्ठात्वम्' इति सायणः ‡ 'होता यजत्याप्रीभिः प्रैषसलिङ्गाभिः समिद्धो अग्निरिति शुनकानां जुषस्व नः समिधमिति वसिष्ठानां समिद्धो अद्येति सर्वेषां यथार्षि वा' इति आ० श्रौ० सू० ३-२-५, ६, ७. § पा० सू० ६-१-१२८, ¶ श्लो० १०

इति ।

एभिश्चैकोनपञ्चाशत्प्रवरं जगदन्वितम् ।
गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ॥
ऊनपञ्चाशदेवैषां प्रवराः सर्वसूत्रिताः ।

तत्र—

कण्वगोत्रप्रसूतानां *सुसमिद्धो न आवह ।
अङ्गिरःप्रवर्षीणां †समिद्धो अग्न आवह ॥

अगस्त्यगोत्रजातानां ‡समिद्धो अद्य राजसि ।
§समिद्धो अग्निर्निहितः शुनकानां भवेदिदम् ॥

विश्वामित्रप्रवराणां ¶समित् समिदिति त्विदम् ।
अत्रिगोत्रप्रसूतानां ||सुसमिद्धाय शोचिषे ॥
वसिष्ठगोत्रजातानां **जुषस्व न इदं भवेत् ॥

कश्यपप्रवराणां तु ††समिद्धो विश्वतस्पतिः ।
‡‡इमां मे अग्ने समिधं भवेद् वध्र्यश्वगोत्रिणाम् ।
§§समिद्धो अद्य मनुषो जमदग्न्यृषिगोत्रिणाम् ॥

एतदेव स्तौति—

॥ यद् यथर्ध्याप्रीणाति यजमानमेव तद् बन्धुताया नोत्सृजति ॥

---

* ऋक्सं० १-१-२४-१. † ऋक्सं० २-२-१०-१. ‡ ऋक्सं० २-५-८-१. § ऋक्सं० २-५-२२-१. ¶ ऋक्सं० २-८-२२-१. || ऋक्सं० ३-८-२०-१. ** ऋक्सं० ५-२-१-१. †† ऋक्सं० ६-७-२४-१. ‡‡ ऋक्सं० ८-२-२१-१. §§ ऋक्सं० ८-६-८-१.

बन्धुशब्दात् सामूहिकस्तल्* । ङसिः । न उत्सृजति न च्यावयति तत् ॥

चतुर्थः खण्डः ।

दशप्रयाजयागान्ते प्राक् स्वाहाकृतियागतः ।
पशोः पर्यग्निकरणे यस्तृचः खलु सूच्यते ॥

†'दशसूक्तेषु प्रेषितो मैत्रावरुणोऽग्निर्होता न इति तृचं पर्यग्नयेऽन्वाह' इति । तद्विधित्सुराह—

॥ पर्यग्नये क्रियमाणायानुब्रूहीत्याहाध्वर्युः ॥

‡परितः क्रियमाणाग्निमभिधातुं तृचं वद ।
इत्यध्वर्युप्रेषितस्तु मैत्रावरुणनामकः—

॥ §अग्निर्होता नो अध्वर इति तृचमाग्नेयं ¶गायत्रमन्वाह पर्यग्नि क्रियमाणे ॥

पशौ पर्यग्नि कृत्वा व्याप्यमाने ॥

॥ स्वयैवैनं तद् देवतया स्वेन छन्दसा समर्धयति ॥

तत् तेन ॥

॥ वाजी सन् परिणीयत इति ॥

---

* पा० सू० ४-२-४३. † आ० श्रौ० सू० ३-२-९. ‡ पर्यग्निकरणस्वरूपं चापस्तम्बसूत्रे—'आहवनीयादुल्मुकमादायाग्नीध्रः परि वाजपतिः कविरिति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुं यूपमाहवनीयं शामित्रदेशं चात्वालम् । आज्यानि चैकेके । प्रत्यापिद्यमानोल्मुकं त्रिः प्रतिपर्येति' इति ७-१५-२, ३. § ऋक्सं० ३-५-१५-१. ¶ 'अग्निर्होता दश गायत्रम्' इति सर्वा० मं० ४ सू० १५.

अस्ति ॥

॥ वाजिनमिव ह्येनं सन्तं परिणयन्ति ॥

वाजो हवीरूपमन्नं तद्वन्तम् । इव एव ॥

॥ [*]परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिवेति ॥

अस्ति ॥

॥ एष हि रथीरिवाध्वरं परियाति ॥

रथान्मत्वर्थ ईत्[†] ॥

॥ [‡]परि वाजपतिः कविरित्येष हि वाजानां पतिरतः ॥

हि यस्मात् ।

अतो हेतोर्वाजपतिरित्यग्निरिह वर्ण्यते ।
[§]अभिहिङ्काररहितमाधान्त्यात्रित्वमेव च ॥
[¶]अक्षेष्वेव [‡‡]होत्रकाणामभिहिङ्कारसूत्रतः ॥

अथ,

॥ [‖]उपप्रेष्य होतर्हव्या देवेभ्य इत्याहाध्वर्युः ॥

ततः,

॥ [¶¶]अजैदग्निरसनद्वाजमिति मैत्रावरुण उपप्रैषं प्रतिपद्यते ॥

---

* ऋक्सं० ३-२-१५-२. † पा०सू०वा० ५-२-१०९. ‡ ऋक्सं० ३-५-१५-३. § उप-सहितस्य हिंकारस्याभिहिंकार इति संज्ञा ¶ आ० श्रौ० सू० १-२-२६. ‡‡ मुख्यवर्जिता द्वादशर्त्विजो होत्रका इत्युच्यन्ते. ‖ आश्राव्य प्रत्याश्राविते संप्रैष उपप्रैषः । 'आश्राव्य प्रत्याश्राविते संप्रेष्यति उपप्रेष्य होतर्हव्या देवेभ्यः' इति आप० श्रौ० सू० ७-१५-७. ¶¶ तै० ब्रा० ३-६-५. 'अग्निर्यत्ते प्रैषोपप्रैष्य होतरिति बोक्तोऽजैदग्निरसनद्वाजमिति प्रैषमुक्त्वान्वाहेदं दर्भं निदध्यात्' इति आ० श्रौ० सू० ३-२-१०.

अजैदग्निरिति प्रैष उपप्रैषेतिसंज्ञकः' ॥

॥ तदाहुः ॥

चोद्यस्वरूपमाह—

॥ यदध्वर्युर्होतारमुपप्रेष्यत्यथ कस्मान्मैत्रावरुण उपप्रैषं प्रतिपद्यत इति ॥

यत् यदि । अथ तथासति ।

होतेह होतरित्युक्तः प्रशास्ता कथमत्र तु ।

इति भावः ॥

परिहरति—

॥ मनो वै यज्ञस्य मैत्रावरुणो वाग् यज्ञस्य होता ॥

मनः प्रशास्ता पूर्वत्वाद्वाक् च होता परत्वतः ।
*'मनः पूर्वरूप'मिति वक्ष्यत्यारण्यके खलु ॥

॥ †मनसा वा इषिता वाग् वदति ॥

इषिता प्रेरिता । इषेर्गत्यर्थादन्तर्णीतण्यर्थात् क्तः सेट् ॥

॥ यां ह्यन्यमना वाचं वदत्यसुर्या वै सा वागदेवजुष्टा ॥

‡'असुरस्य स्वम्' इति यत् । देवैर्न सेविता ॥

---

१. 'संज्ञितः' ख. पाठः.

---

* ऐ० आ० ३-१-१. † 'यत् पुरुषो मनसाभिगच्छति तद्वाचा वदति तत् कर्मणा करोति' इति नृसिंहपूर्व० १-१. 'यद्धि हृदयेनाभिगच्छति तज्जिह्वया वदति यज्जिह्वया वदति तदुरसोऽधिनिर्वदति' इति तै० सं० ६-१-१०. ‡ पा० सू० ४-४-१२३.

ततश्च,

॥ तद् यन्मैत्रावरुण उपप्रैषं प्रतिपद्यते मनसैव
तद् वाचमीरयति ॥

सहेति शेषः । तत् तत्र । प्रतिपद्यत इति यत् वाचं मनसा सहेरयति तदित्यर्थः ॥

॥ तन्मनसेरितया वाचा देवेभ्यो हव्यं संपादयति ॥
तत् प्रशास्तुर्वचनम्[1] ॥

पञ्चमः खण्डः ।

---

*अध्रिगुप्रैषसंज्ञो यो मन्त्रो दैव्यादिकः खलु ।
प्रशास्त्रा प्रेषितो होता तं वदेदिति चाह ह—

॥ †दैव्याः शमितार आरभध्वमुत मनुष्या इत्याह ॥

व्याचष्ट आदायादाय प्रैषमान्तादितीष्यताम् ॥

॥ ये चैव देवानां शमितारो ये च मनुष्याणां
तानेव तत् संशास्ति ॥

संशासनं प्रेषणम् । आरभध्वं विशसनं[2] कुरुतेति ह्यर्थः ॥

॥ उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधमिति ॥

---

१. 'प्रशास्तुर्वचनम् । दैव्याः'; २. 'विनाशम्' ख. ङ. पाठः.

---

* 'अध्रिगुः कश्चिद् देवः पशुविशसनस्य कर्ता' इति सायणः. 'अध्रिगुरिति 'दैव्याः शमितार आरभध्वम्' इत्यस्य मन्त्रस्य नाम' इति नारायणवृत्तिः. † तै० ब्रा० ३-६-६.

*दुरः यज्ञगृहद्वाराणि । उपनयत प्रापयत । आशासानाः प्रार्थयमानाः ॥

॥ पशुर्वै मेधः ॥

मेधस्य यज्ञस्य साधकत्वात् । श्रूयते हि—†'मेधो रभीयानिति पश्वभिधाने' इति ॥

मेधपतिशब्दे पूर्वपक्षयति—

॥ यजमानो मेधपतिः ॥

ततश्च,

॥ यजमानमेव तत् स्वेन मेधेन समर्धयति ॥

सिद्धान्तयति—

॥ अथो खल्वाहुः ॥

अपि हि वदन्ति ॥

॥ यस्यै वाव कस्यै च देवतायै पशुरालभ्यते सैव मेधपतिरिति ॥

च चित् ॥

ततश्च,

॥ स यद्येकदेवत्यः पशुः स्यान्मेधपतय इति ब्रूयात् । यदि द्विदेवत्यो मेधपतिभ्यामिति ॥

ब्रूयादित्येव ॥

---

* 'दुरः द्वारो हविर्मार्गान् विशसनहेतीर्वा' इति सायणः. † आ० श्रौ० सू० ३-४-१४.

॥ यदि बहुदैवत्यो मेधपतिभ्य इति ॥

पूर्ववत् ॥

॥ एतदेव स्थितम् ॥

अयमेव सिद्धान्तः ॥

॥ प्रास्मा अग्निं भरतेति ॥

अत्रेतिहासमाह—

॥ पशुर्वै नीयमानः स मृत्युं प्रापश्यत् ॥

स आलब्धः । मृत्युं सर्वप्राणहरम् ॥

॥ स देवान्नान्वकामयतैतुम् ॥

स दृष्टमृत्युको देवान् प्राप्तुं नैच्छद् भयेन वै ॥

॥ तं देवा अब्रुवन् । एहि स्वर्गं वै त्वा लोकं गमयिष्याम इति ॥

आ इहि आगच्छ । गमेर्णिचो लृट् ॥

॥ स तथेत्यब्रवीत् । तस्य वै मे युष्माकमेकः पुरस्तादैत्विति ॥

आ एतु ॥

॥ तथेति तस्याग्निः पुरस्तादैत् ॥

इणो लङाडागमश्च । *'इतश्च'[1] । ऐत्' ॥

॥ सोऽग्निमनु प्राच्यवत ॥

---

१. 'लङाडागमश्च । ऐत्' घ. ङ. पाठः.

---

* पा० सू० ३-४-१००.

स पशुरग्निमन्वगात् ॥

॥ तस्मादाहुराग्नेयो वाव सर्वः पशुरग्निं हि सोऽनु प्राच्यवतेति ॥

सर्वे पशव आग्नेया इति वादोऽत एव च ॥

॥ *तस्माद्धस्याग्निं पुरस्ताद्धरन्ति ॥

ह पुनः। तस्मात् तथाहि ॥

॥ †स्तृणीत बर्हिरिति। ओषध्यात्मा वै पशुः ॥

‡ओषधिपुष्टाङ्गत्वात् ॥

॥ पशुमेव तत् सर्वात्मानं करोति[1] ॥

तद् बर्हिःस्तरणं कर्तृ। सर्वात्मानं सर्वतः पुष्टाङ्गम्§ ॥

॥ ¶अन्वेनं माता मन्यतामनु पिता भ्राता सगर्भ्योऽथ सखा सयूथ्य इति जनित्रैरेवैनं तत्समनुमतमालभन्ते[1] ॥

---

1. 'करोति। सर्वात्मानं' घ. ङ. पाठः.

---

* 'अग्निना पुरस्तादेति रक्षसामपहत्यै' इति तै० सं० ६-३-८. 'प्रास्मा अग्निं भरत स्तृणीत बर्हिरिति होतुरभिज्ञायाहवनीयादुल्मुकमादायाग्नीध्रः पूर्वः प्रतिपद्यते' इति आप० श्रौ० सू० ७-१५-८. † 'पृथिव्याः संपृचः पाहीति बर्हिरुपास्यत्यस्कन्दायास्कन्नं हि तद्यद् बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं करोति' इति तै० सं० ६-३-८. 'तं दक्षिणेन प्रत्यञ्चं पशुमवस्थाप्य पृथिव्याः संपृचः पाहीति तस्याधस्ताद् बर्हिरुपास्यति उपाकरणयोरन्वन्तरत्' इति आप० श्रौ० सू० ७-१६-४. ‡ 'पशुभक्षितानामोषधीनां पश्ववयवत्वेन परिणतत्वात् पशोरोषध्यात्मत्वम्', § 'सर्वात्मानं सर्वौषध्यात्मत्वम्' इति सायणः. 'ओषधीनां पश्वाद्याप्यायनहेतुत्वेन ओषध्यात्मत्वम्' इति गोविन्दस्वामी. ¶ 'देवत्रायन्तमवसे सखायोऽनु त्वा मातापितरो मदन्त्वित्याहानुमतमेवैनं मात्रा पित्रा सुवर्गं लोकं गमयति' इति तै० सं० ६-३-११.

सं सह ।

माता पिता तथा भ्राता सोदरस्तुल्ययूथकः[1] ।
पशुमेतेऽनुमन्यन्तां जनित्रा बन्धवो मताः ॥

आलभन्ते घ्नन्ति ॥

॥ *उदीचीनाँ अस्य पदो निधत्तात् सूर्यं चक्षुर्गमयताद् वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरमिति ॥

पदः पादान् । निधत्तात्, †'तस्य तात्' । निधत्त । तथा गमयतात् सृजत ॥

॥ एष्वेवैनं तल्लोकेष्वादधाति ॥

लोकेषु सूर्यादिस्थानेषु । आ साधु दधाति स्थापयति । ‡असुं बलम् ॥

॥ एकधास्य त्वचमाच्छ्यतात् पुरा नाभ्या अपिशसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वादिति§ ॥

‖'ध्वमो ध्वात्' । वारयध्वम् । छ्यतात् । छो छेदने । ¶'ओतः श्यनि' । छ्यत । §अपिशसः अपिशस् मांसम् ॥

॥ पशुष्वेव तत् प्राणान् दधाति ॥

तत् तत्र ॥

---

१. 'यूथकः' घ ङ. पाठः

---

* 'तस्मिन् संज्ञपयन्ति प्रत्यक्शिरसमुदीचीनपादम्' इति आप० श्रौ० सू० ७-१६-५. † पा० सू० ७-१-४४. ‡ 'असुं जीवम्' इति सायणः. § 'अमायुं कृण्वन्तं संज्ञपयतेत्युक्त्वा पराङावर्ततेऽध्वर्युः' इति आप० श्रौ० सू० ७-१६-६. ‖ पा० सू० ७-१-४२. ¶ पा० सू० ७-३-७१. § 'नाभ्या अपिशसश्छेदात् पूर्वमेव' इति सायणभट्टभास्करौ. 'नाभ्याः पुरा वर्तुलदेशात् पैशं पीतं मांसं तस्मादन्यत् अपिशः तस्मादपिशसो देशात्' इति गोविन्दस्वामी.

॥ श्येनमस्य वक्षः कृणुतात् प्रशसा बाहू शला दोषणी कश्यपेवांसाच्छिद्रे श्रोणी कवषोरू स्रेकपर्णाष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयः । ता अनुष्ठ्योच्च्यावयताद् गात्रं गात्रमस्यानूनं कृणुतादिति ॥

श्येनं श्येनाकृतिकम् । *प्रशसा प्रशस्तौ शला दोषणी शलाकाकारे दोषणी । दोर्बाहुमूलं तस्य दोषन्† । कश्यपा कच्छपौ । कवषा चाषाख्यशकुनी । स्रेकपर्णा रक्तकरवीरपत्रसदृशौ । अष्ठीवन्ता जानुदेशौ । वङ्क्रयः पार्श्वास्थीनि । अनुष्ठिर्यत्नः‡ । उच्च्यावयतात् उच्च्यावयत । उद्धरत । किं बहुना गात्रं गात्रमस्यानूनं कृणुतात्[1] पूर्णं कृणुतात् कुरुतेत्यर्थं मत्वाह ॥

॥ अङ्गान्येवास्य तद्गात्राणि प्रीणाति ॥

प्रीणाति पूर्णानि करोति । गात्रं गात्रमित्यस्य विवरणं गात्राणीति ।· अस्य त्वङ्गानीति ॥

॥ §ऊवध्यगोहं पार्थिवं खनतादित्याह ॥

¶ऊवध्यस्य हि भुक्तस्य गोहं छादनकारि यत् ।
तन्मांसमवटे भूम्यां खनताधो निधत्त हि ॥

इत्यर्थं मत्वाह ॥

---

1. 'कृणुतात् । कुरुतेत्यर्थं' घ. ङ. पाठः.

---

* 'प्रशसा प्रकृष्टच्छेदनौ' इति सायणभट्टभास्करौ. † पा० सू० ६-१-६३. ‡ 'अनुष्ठया अनुक्रमेण स्वस्थानगतानि' इति सायणः. § 'ऊवध्यगोहं पार्थिवं खनतादित्यभिप्रायोवध्यगोहं खनति' इति आप० श्रौ० सू० ७-१६-१. ¶ 'ऊवध्यगोहं ऊवध्यमपक्वाशयगतः तत् शरीरवर्ति किंचिद्द्रव्यं तस्य गोहो गूहनम्' (?) इति गोविन्दस्वामी. 'पुरीषगूहनस्थानम्' इति सायणः. 'उदरगतमसुरभि शकृदापूर्णमूवध्यम्, 'ऊवध्यमुदरस्थापयति' इति लिङ्गात् तद् गूह्यते छाद्यते यस्मिन्नवटे स ऊवध्यगोहः' इति महादेवदत्तः.

॥ औषधं वा ऊवध्यम् । इयं वा ओषधीनां प्रतिष्ठा ॥

व्रीह्याद्युत्पत्त्याधारत्वात् पृथिव्याः ॥

॥ तदेनत् स्वायामेव प्रतिष्ठायामन्ततः प्रतिष्ठापयति ॥

तत् तेन । एनत् ऊवध्यगोहाख्यं मांसम् । अन्ततः निश्चयेन* ।

षष्ठः खण्डः ।

---

॥ अस्ना रक्षः संसृजतादित्याह ॥

अस्ना रक्तेन रक्षस्तु संसृष्टं यज्ञयोगि वै[1] ।
कुरुतेत्याह होतात्र कथामाह प्ररोचयन्—

॥ †तुषैर्वै फलीकरणैर्देवा हविर्यज्ञेभ्यो रक्षांसि
निरभजन्नस्ना महायज्ञात् ॥

महायज्ञाः सोमयागा हविर्यज्ञास्ततोऽपरे ।
निर्भेजेरर्थ आत्मीयभागप्राप्तेः बहिष्कृता ॥
वैतृष्ण्यं च ततोऽन्यस्मिन् महायज्ञात्तु केर्ङ्सिः ।
भ्यः सुवर्थे हविर्यज्ञादन्तर्ण्यर्थाद् भजेश्च लङ् ॥

---

१. 'अस्ना रक्षोऽस्तु संसृष्टं यथा तथज्ञयोगि वै' ष. ङ. पाठः

---

* 'अन्ततः पशुविशसनान्ते' इति सायणः. † तथाच तै० ब्रा० 'रक्षसां भागोऽसीत्याह तुषैरेव रक्षांसि निरवदयते' इति ३-२-५. 'रक्षसां भागोऽसीति स्थविमतो बर्हिरक्तापास्यत्यस्नैव रक्षांसि निरवदयते' इति च तै० सं० ६-३-९. 'मध्यमे पुरोडाशकपाले तुषानोप्य रक्षसां भागोऽसीत्यधस्तात् कृष्णाजिनस्योपवपति', 'बर्हिषोऽग्रं सव्येन पाणिनादत्तेऽथ मध्यं वत आछेति तदुभयतो लोहितेनाक्त्वा रक्षसां भागोऽसीत्युत्तरमपरमवान्तरदेशं निरस्याथैनत् सव्येन पदाभितिष्ठतीदमहं रक्षोऽवबाध इदमहं रक्षोऽधमं तमो नयामीति' इति च आप० श्रौ० सू० १-२०-१ & ७-१८-१३, १४.

॥ स यदक्षा रक्षः संसृजतादित्याह रक्षांस्येव तत् स्वेन भागधेयेन यज्ञान्निरवदयते ॥

निरवदयतिः किञ्चिद्दत्त्वा प्रक्षालनार्थः ॥

॥ तदाहुः ॥

केचित् ॥

कथं,

॥ न यज्ञे रक्षसां कीर्तयेत् ॥

रक्षःसम्बन्धि किञ्चिदपि । कुतः,

॥ कानि रक्षांस्यृते ॥

*ऋते इति खल्वित्यर्थः । कानि, क्षेपे किंशब्दः । कुत्सितानि हि रक्षांसि ॥

किञ्च,

॥ अरक्षा वै यज्ञ इति ॥

चाहुरिति शेषः ।

---

* ऋतेरक्षा इति सायणाभिमतः पाठः. तथाच तद्व्याख्या—'कानिचिदपि रक्षांसि न कीर्तयेत् जातिविशेषानपेक्षया बहुवचननिर्देशः । राक्षसामान्तरजातीनां मध्ये राक्षसमसुरं पिशाचं वा न कञ्चिदपि कीर्तयेत् । अकीर्तने हेतुमृतेरक्षा इति पदेनोपन्यस्यति । तदेतत् समस्तमेकमेव पदम् । ऋतेशब्दो वर्जनवाची । वर्जितं रक्षो यस्मिन् यज्ञे सोऽयमृतेरक्षाः' इति. 'प्रथमं तावत् कानि तानि रक्षांसि नाम इत्यनवक्लृप्तिः । यद्यपि सन्ति तथाप्यृतेरक्षा अस्मद्यज्ञः । ऋतेरक्षा गतरक्षा (!) । अथ च कानि प्रयोजनानि रक्षांसि ऋते रक्षोभ्य ऋते । न सिध्यन्ति इत्यध्याहारः' इति गोविन्दस्वामी.

रक्षोभिर्वर्जितो यज्ञः स्यादिति प्रथितं खलु ॥

॥ तदुवा आहुः ॥

उवै खलु । तत् तत्र ॥

कथं,

॥ कीर्तयेदेत्र ॥

रक्षांसीत्येव ॥

कुत एवं,

॥ यो वै भागिनं भागान्नुदते चयते वैनम् ॥

भागिनमंशार्हं भागादंशात् नुदते नुदति कालयति चयते बाधते । वेति चेत्यर्थः । एनं स्वांशात् प्रच्यावयितारम् ॥

किञ्च,

॥ स यदिवैनं न चयतेऽथ पुत्रमथ पौत्रं चयते त्वेवैनमिति ॥

यदिवा यद्यपि । अथ तदापि ।

न चेद्धानिकरं हन्याद्धन्यादेवाथ तत्सुतम् ।
तत्पौत्रं वा तयोर्बाधाप्यात्मबाधैव[1] वै भवेत् ॥

भगवांश्च मनुः प्राह श्रुतिमेतां विलोकयन्—
"नाधर्मश्चरितो लोके सद्यः फलति गौरिव ॥
न चेदात्मनि पुत्रेषु न चेत् पौत्रेषु नप्तृषु"* ॥ इति ॥

१. 'बाधेव' घ. ङ. पाठः.

* अध्या० ४, श्लो० १७२ व १७३.

॥ स यदि कीर्तयेदुपांशु कीर्तयेत् ॥

रक्षांसि कीर्तयन् होता तान्युपांश्वेव कीर्तयेत्।
यदीत्यसंशये वेदाः प्रमाणं यदि वै यथा ॥

युक्तं चैतदित्याह—

॥ तिर इव वा एतद् वाचो यदुपांशु तिरैवैतद्[1] यद् रक्षांसि ॥

*तिरस्कारो वाच एष यदुतोपांशुकीर्तनम्।
तिरश्शब्दस्य पर्यायस्तिराशब्द इवैव हि ॥

रक्षांस्यन्यैर्न दृश्यन्ते गूढचारितयैव हि ॥
उपांशुत्वं रोचयितुमुच्चैस्त्वे दोषमाह ह—

॥ अथ यदुच्चैः कीर्तयेदीश्वरो हास्य वाचो रक्षोभाषो जनितोः ॥

अस्य यजमानस्य। वाचः, जन्म्। रक्षोभाषः कर्मणि क्विप्। रक्षोभिर्भाष्यन्त इति। जनितोः जनयितुम्। जनेरन्तर्णीतणिच: †ईश्वरे तोसुन तुमर्थे ॥

किञ्च,

॥ योऽयं राक्षसीं वाचं वदति सः ॥

योऽयं होता सोऽपि वाचं राक्षसीमेव वै वदन् ॥

---

१. 'तिर इवैतद्' इति सायणभाष्यानुसारी पाठः.

---

* 'वाचः सम्बन्धि यदुपांशुकीर्तनम् एतत् तिर इव तिरोहितमिव भवति। यथा कुड्यादिव्यवहितं स्तम्भादिकं चक्षुषा न दृश्यते तथैवोपांशुकथितं न श्रूयते। रक्षांसीति यदस्त्येतदपि तिर इव चोरवद् यतो रक्षसां गूढचारित्वाद्' इति सायणः. † पा० सू० ३-४-१३

का पुना राक्षसी वागित्यत[1] आह—

॥ यां वै दृप्तो वदति यामुन्मत्तः सा वै राक्षसी वाक् ॥

दर्पोन्मादान्वितैर्या वाग् भाष्यते सा तु राक्षसी ॥

विदुषः फलमाह—

॥ नात्मना दृप्यति नास्य प्रजायां दृप्त आ जायते य एवं वेद ॥

आत्मना स्वयं वेदिता। प्रजायां सन्ततौ। आ पुनः। अस्य वेदितुः।

उपांश्वक्ता रक्ष इति वदेदित्येष निर्णयः।

सूत्र्यते हि— "'अक्ता रक्षः संसृजताच्छमितारोऽपापेत्युपांशु' इति॥

॥ वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रविता रवच्छमितार इति ॥

उरूकं वपां मन्यमाना वनिष्ठुं मा यूयं राविष्ट लाविष्ट मा च्छिन्त। वः युष्माकं तोके तनये। स्वर्थे ङिद्वयम्। पुत्रः पौत्रो[2] वा। रविता लविता वपां मत्वा वनिष्ठुं मा रवत् न[3] लुनीयादित्यर्थं मत्वा व्याचष्टे॥

१. 'वागत' ख. ङ. पाठः २. 'पौत्रो वपां', ३. 'रवत् खलु न' क. पाठः.

* आ० श्रौ० सू० ३-३-२. † 'तोके पुत्रे तनये तदीयापत्ये च रविता शब्दयिता नेत् नैव रवद् भूयात्', ‡ 'वनिष्ठुं वपायाः समीपवर्तिनं मांसखण्डम्' इति सायणः. 'अस्य वनिष्ठुं गुदमध्यमार्द्रमांसं मा राविष्ट मा छिन्दत। उरूकम् उरुं महान्तमिमं मन्यमानाः अवगच्छन्तः आर्तं मा कार्ष्ट। केचिदाहुः—उलूकाकारं मन्यमानाः मा राविष्ट शब्दनं मा कार्ष्ट। उलूकशब्दवदसहत्योऽस्य शब्द इति बोधयितुमेवमुक्तम्', 'कश्चिदपि रविता शब्दयिता रोदिता रवद् स्यात् मैव रोदीद्। अस्य छेदनं शब्दनं वा ताडनहेतुः स्यादिति दर्शितं भवति तत्परिहारार्थं मा राविष्टेति' इति भट्टभास्करः.

॥ ये चैव देवानां शमितारो ये च मनुष्याणां तेभ्य
एवैनं तत् परिददाति ॥

तत् तत्र । एनं पशुं परिददाति श्रद्धया हस्ते ददाति ॥

॥ अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३उ
इति त्रिर्ब्रूयात् । अपापेति च ॥

अध्रिगो इत्यस्य प्लुतः* । तद्विकाराविदुतौ च ।
†अध्रिग्वादि त्रिरुक्त्वेति अपापान्तं च सूत्र्यते[1] ॥

व्याचष्टे—

॥ अध्रिगुर्वै देवानां शमिता ॥

‡शमिता यज्ञसूत्रेण पशोर्हन्ता निपातितः ॥

॥ §अपापो निग्रभीता ॥

देवानामित्येव ।

निग्रभीता पशुं बद्धा यो हन्त्रे संप्रयच्छति ।

¶'हृग्रहोर्भः' ।

निगृहीतस्त्वपापेनाध्रिगुणा मार्यते पशुः ॥

---

1. 'सूत्र्यते अध्रिगुर्वै' ख. क. पाठः.

---

* यान्यप्रगृह्याणि सन्ध्यक्षराणि तानि विविच्याकारमेव प्लावयेत् । तथाचाश्वलायनसूत्रं —'विविच्य सन्ध्यक्षराणामकारम्' इति १-५-९. † आ० श्रौ० सू० ३-३-४. ‡ पा० सू० ६-४-५४. § 'अध्रिगुश्चापापश्चोभौ देवानां शमितारौ' इति तै० ब्रा० ३-६-६. ¶ पा० सू० वा० ८-२-३२.

शमीध्वम् । *'तुरुस्तुशमि—' इतीट् । शमयत मारयतेत्यर्थः । इति मत्वाह—

॥ शमितृभ्यश्चैवैनं तन्निग्रभीतृभ्यश्च संप्रयच्छति ॥

तत् तत्र । एनं पशुम् । प्रयच्छति निवेदयति ॥

अध्रिगुप्रैषान्ते जपमाह—

॥ शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद् दुष्कृतमन्यत्र तदित्याह ॥

जपरूपेण ॥

अत्रेतिहासमाह—

॥ अग्निर्वै देवानां होतासीत् ॥

वै पुरा ॥

॥ स एनं वाचा† व्यशात् ॥

शासेर्लङ् । ‡'तिप्यनस्तेः' इति दः ॥

॥ वाचा वा एनं होता विशास्ति ॥

अद्यापि ॥

॥ तद्यदर्वाग् यत् परः कृन्तन्ति यदुल्बणं यद्विथुरं क्रियते शमितृभ्यश्चैवैनत् तन्निग्रभीतृभ्यश्च समनुदिशति ॥

अर्वाक् परः । जसोः सुः । §परेऽन्येऽर्वाञ्चः कृन्तन्ति घ्नन्ति । यदित्याद्यस्य विवरणम् । उल्बणमतिकठिनम् । विथुरं कष्टम् ।

---

* पा० सू० ७-३-९५. † वाचा अध्रिगुप्रैषेण। तथाच यास्कः— 'अध्रिगुर्मन्त्रो भवति गव्याधिकृतत्वात् अपि वा प्रशासनमेवाभिप्रेतं स्यात् तच्छब्दवत्त्वात्' इति (निरु० ५-११). ‡ पा० सू० ८-२-७३. § 'अर्वाक् अर्वाचीनम् .... पराचीनम्, उल्बणम् अधिकं विथुरं न्यूनम्' इति गोविन्दस्वामी. 'पशोरर्वाग्भागे यत् कृन्तन्ति यच्च परः परभागे उत्तमाङ्गे कृन्तन्ति, तस्मिन्नुभयस्मिन्नपि छेदने यदुल्बणं शास्त्राचोदतिरिक्तं क्रियते यच्च विथुरं न्यूनं क्रियते' इति सायणः.

*व्ययः क्कुरच् संप्रसारणम् । अनुदेशः संवादः । एनदनभिमतकरणम् ॥

ततश्च,

॥ स्वस्त्येव होतोन्मुच्यते सर्वायुः ॥

निर्णाशकः शताब्दश्च पापान्मुक्तश्च वै भवेत् ॥

॥ सर्वायुत्वाय ॥

सलोपश्छान्दसः । इदं च होतुः सर्वायुष्ट्वाय स्यात् ॥

॥ सर्वमायुरेति य एवं वेद ॥

सोऽप्यायुर्लभते सर्वं वेदिताऽत्र शताब्दकम् ॥

सप्तमः खण्डः ।

---

†वपापुरोळाशहविःप्रदानत्रयवान् पशुः ।
पुरोळाशस्य पशुना सम्बन्धार्थं कथोच्यते—

॥ पुरुषं वै देवाः पशुमालभन्त ॥

यज्ञे नरं पुरा देवाः पशुत्वेनालभन्त ह ॥

---

* 'व्ययेः संप्रसारणं किच्च' इति उणादिसू० १-४१. † 'वपा पुरोडाशो हविरिति पशोः प्रधानानि' इति आ० श्रौ० सू० ३-४-४. 'वपया प्रचर्य पुरोडाशेन प्रचरति पशौ वा पशौ, 'अथ हविषा प्रचरति' इति आप० श्रौ०सू० ७-२२-११, ७-२५-८

॥ तस्मादालब्धान्मेध उदक्रामत् ॥

तस्मान्नरायज्ञियोंऽश उत्क्रम्य प्राद्रवद् भयात् ॥

॥ सोऽश्वं प्राविशत् ॥

स यज्ञियोंऽशः ॥

॥ तस्मादश्वो मेध्योऽभवत् ॥

मेध्यः यज्ञार्हः ॥

॥ अथैनमुत्क्रान्तमेधमत्यार्जन्त ॥

एनं पुरुषम् । उत्क्रान्तः मेधो यस्मात् तम् । अत्यार्जन्त अर्जेस्त्यागार्थादतिपूर्वाल्लङ् । त्यक्तवन्तः ॥

॥ स किंपुरुषोऽभवत् ॥

स त्यक्तः *किंपुरुषः किन्नरजातीयः ॥

॥ तेऽश्वमालभन्त ॥

ते देवाः ॥

॥ सोऽश्वादालब्धादुदक्रामत् ॥

स मेधः ॥

॥ स गां प्राविशत् । तस्माद् गौर्मेध्योऽभवत् ॥

गोशब्दः पुमान् स्त्री च ॥

॥ अथैनमुत्क्रान्तमेधमत्यार्जन्त ॥

एनमश्वम् ॥

* 'किंपुरुषः कापुरुषः, किन्नरजातीयो वा' इति गोविन्दस्वामी.

॥ स गौरमृगोऽभवत् ॥

विकृताश्वाकृतिर्हि सः ॥

॥ ते गामालभन्त । स गोरालब्धादुदक्रामत् ॥

गोः सकाशात् ॥

॥ सोऽविं प्राविशत् ॥

अविः कम्बलच्छागः ॥

॥ तस्मादविर्मेध्योऽभवत् । अथैनमुत्क्रान्तमेधमत्यार्जन्त ॥

एनं गाम् ॥

॥ स गवयोऽभवत् ॥

गोसदृशाकृतिर्हि सः ॥

॥ तेऽविमालभन्त । सोऽवेरालब्धादुदक्रामत् ॥

आलब्धादवेः स मेधः ॥

॥ सोऽजं प्राविशत् । तस्मादजो मेध्योऽभवत् ।
अथैनमुत्क्रान्तमेधमत्यार्जन्त ॥

एनमविम् ॥

॥ स उष्ट्रोऽभवत् ॥

अवितुल्याकृतिर्हि सः ॥

॥ सोऽजे ज्योक्तमामिवारमत ॥

ज्योगिति चिरनाम । *'ज्योक् पश्येम सूर्यम्' इति यथा । †'किमेत्तिङव्ययघादाम्—' । अतिचिरम् । इव एव । अरमत श्रद्धयावर्तिष्ट ॥

---

* ऋक्सं० ६-७-२३-१, ८-१-१३-१. † पा० सू० ५-४-११.

॥ तस्मादेष एतेषां पशूनां प्रयुक्ततमो यदजः ॥

यद् यः । *'आशंसायां भूतवच्च' । प्रयोक्तव्यतमः । एतेषां पुरुषादीनां मध्ये ॥

॥ तेऽजमालभन्त सोऽजादालब्धादुदक्रामत् ॥

स मेधः ॥

॥ स इमां प्राविशत् तस्मादियं मेध्याभवत् ॥

इयं पृथिवी ॥

॥ अथैनमुत्क्रान्तमेधमत्यार्जन्त ॥

एनमजम् ॥

॥ स शरभोऽभवत् ॥

पादाष्टकवानजाकृतिर्हि सः ॥

॥ त एत उत्क्रान्तमेधा अमेध्याः पशवः ॥

किम्पुरादिशरभान्ताः ॥

॥ तस्मादेतेषां नाश्नीयात् ॥

सम्बन्धि मांसम् ॥

॥ तमस्यामन्वगच्छन् ॥

भूम्यां मेधं स्थितं देवा आलम्भाय समन्वयुः ॥

* पा० सू० ३-३-१३२.

॥ सोऽनुगतो व्रीहिरभवत् ॥

देवैरनुगतो मेधो व्रीहित्वं प्रत्यपद्यत।
यवस्याप्युत्तरत्रोक्तेर्व्रीहीत्यत्र निदर्शनम् ॥
'तौ व्रीहिश्चैव यवश्च भूतावि'ति हि वक्ष्यते* ॥

॥ †तद् यत् पशौ पुरोळाशमनु निर्वपन्ति समेधेन नः पशुनेष्टमसत् केवलेन नः पशुनेष्टमसदिति ॥

भावेन कुर्वन्तीति शेषः। ‡नः भिस आमि नस्। अस्माभिः। इष्टमसद् भवेत्। लेट्। तिपोऽट्। मेधस्य व्रीहियवरूपत्वात्। केवलः पूर्णः। केवलेनेत्यादि विवरणम् ॥

विदुषः फलमाह—

॥ समेधेन हास्य पशुनेष्टं भवति केवलेन हास्य पशुनेष्टं भवति य एवं वेद ॥

अस्यानेन वेदित्रा। केवलेनेत्यादि विवरणम् ॥

अष्टमः खण्डः।

---

पुरोळाशगताङ्गानां पश्वङ्गैः साम्यमुच्यते—

॥ स वा एष पशुरेवालभ्यते यत् पुरोळाशः ॥

---

* ऐ॰ ब्रा॰ ७-१. † 'पशुमालभ्य पुरोडाशं निर्वपति समेधमेवैनमालभते' इति तै॰ सं॰ ६-३-१०. ‡ 'नः अस्माकम्' इति सायणभट्टभास्करौ.

यत् यः ॥

कथं,

॥ तस्य यानि किंशारूणि तानि रोमाणि ॥

रजः किंशारु ॥

॥ ये तुषाः सा त्वक् । ये फलीकरणास्तदसृत् ॥

जकारस्य दकारः । असृक रक्तम् ॥

॥ यत् पिष्टं किक्नसास्तन्मांसम् ॥

चेति शेषः । किक्नसः सूक्ष्मांशुः[1] ॥

॥ यत्किञ्चित्कं सारं तदस्थि ॥

यत्किञ्चित्कं, स्वार्थे कः ।

तण्डुलस्य द्विधा भेदे श्वेतं सारं तु मध्यतः ॥

स्तौति—

॥ सर्वेषां वा एष पशूनां मेधेन यजते यः पुरोळाशेन यजते ॥

सर्वमेधसारत्वादस्य ॥

॥ तस्मादाहुः पुरोळाशसत्रं लोक्यमिति ॥

तस्मात् किञ्चेत्यर्थः । *लोक्यं द्रष्टव्यम् ।

पुराळाशेन यागो यः सत्रतुल्यो निरीक्ष्यताम् ॥

इति ब्रह्मवादिनो वदन्तीत्यर्थः[2] ॥

---

१. 'किक्नसाः सूक्ष्मपक्ष्मणः' घ, ङ. पाठः. २. 'इति वदन्ति ब्रह्मवादिन इत्यर्थः' क पाठः.

---

* 'सर्वपुण्यलोकप्राप्तिनिमित्तम् । 'लोकान्तात्—' (पा० सू० ५-१-३१) इति यत्प्रत्ययः' इति भट्टभास्करः.

अथाग्नीषोमीयस्य पशोर्वपाया याज्यामाह—

॥ *युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्। युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतानिति वपायै यजति ॥

†तादर्थ्ये ङे। वपया ॥

स्तौति—

॥ सर्वाभिर्वा एष देवताभिरालब्धो भवति यो दीक्षितो भवति तस्मादाहुर्न दीक्षितस्याश्नीयादिति । स यदग्नीषोमावमुञ्चतं गृभीतानिति वपायै यजति सर्वाभ्य एव तद्देवताभ्यो यजमानं प्रमुञ्चति। तस्मादाहुरशितव्यं वपायां हुतायां यजमानो हि स तर्हि भवतीति ॥

‡आलब्धः स्वीकृतः । तस्माद्द्रव्यं तथाहीत्यर्थे । §दीक्षितस्यान्नं नाश्नीयात् । वपया यजतीति यत् प्रमुञ्चति मोचयति तत् । अशितव्यम् अन्नम् । तर्हि तदानीं वपायागकाले यजमानः नतु दीक्षितः । ल्यबद्वयं पञ्चम्याः ॥

पशुपुरोळाशस्य याज्यामाह—

॥ ¶आन्यं दिवो मातरिश्वा जभारेति पुरोळाशस्य यजति ॥

---

* ऋक्सं० १-६-२८-५. † 'युवमेतानीति वपाया याज्या । वपाया इति कर्मणः संप्रदानत्वाच्चतुर्थी' इति भट्टभास्करः. 'वपायै यजतीति वपाहोमार्थमुक्तं याज्यात्वेन पठेदित्यर्थः' इति सायणः. ‡ 'आलब्ध आत्मार्थतया परिगृहीतो भवति। तस्मादेतदीयं सर्वमपि धनं देवानामेव स्वं भवति' इति भट्टभास्करः. § तथाच मनुः— 'स्तेनगायनयोश्चान्नं तक्ष्णो वार्धुषिकस्य च । दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥' इति ४-२१०. 'दीक्षितोऽक्रीतराजकोऽग्नीषोमीयसंस्थानामेव हुतायां वा वपायां दीक्षितस्य भोक्तव्यं यज्ञार्थे वा निर्दिष्टे शेषाद् भुञ्जीरन्निति हि ब्राह्मणम्' इत्यापस्तम्बधर्मसूत्रं प्र० १, प० ६. ¶ ऋक्सं० १-६-२८-६.

टायें ङम् । पुरोळाशेन ॥

अत्रास्ति—

॥ अमश्चादन्यं परि श्येनो अद्रेरिति ॥

व्याचष्टे—

॥ इत इव च ह्येष इत इव च मेघः समाहृतो भवति ॥

इतश्चेतश्च । इव एव ।

*पुरा वायुर्नष्टमग्निं स्वर्गाद् भूम्यामिहानयत् ।
इन्द्रलोकस्थितं सोमं गरुडोऽप्यानयद् भुवि ।
†अग्निसोमस्थसम्भारात् तच्चन्मेघोऽपि सम्भृतः ॥

अथ,

॥ ‡स्वदस्व हव्या समिषो दिदीहीति पुरोळाशस्विष्टकृतो यजति ॥

टायें ङम् ॥

॥ हविरेवास्मा एतत् स्वदयति ॥

एतदेतर्हि । स्वदयति सरसं करोति । अस्मै अस्य ॥

किञ्च,

॥ इषमूर्जमात्मन् धत्ते ॥

ङिलुक् । आत्मनि । इषमन्नम् । §ऊर्जं बलम् । धत्ते स्थापयति ॥

---

* 'मातरिश्वा वायुरन्यतरमग्नीषोमयोरन्यतरं सोमाख्यदेवं दिवो द्युलोकादाजभाराहृतवान्। गायत्रीरूपं कृत्वा वायुः सोममानीतवान्। श्येनो बलवत्पक्षी। तादृशोऽग्निरन्यमुभयोर्देवयोरन्यतरमग्निमद्रेः पर्वतजन्यात् काष्ठादरणीरूपाद् पर्वमथात्। एष मेघो यज्ञयोग्यः पुरोडाशोऽपि इत इव चेत इव चास्मान्मनुष्यादस्मादश्वाद् गोरवेरजाच्च भूम्याः समाहृतः' इति सायणः. † इतश्चेतश्च मेघः समाहृतो भवति। तद् व्याख्यातं पुरुषं वै देवा इत्यादिना' इति गोविन्दस्वामी. ‡ ऋक्सं० ३-३-२७-७. § 'ऊर्जं रसम्' इति भट्टभास्करः.

॥ इळामुपह्वयते[*] ॥

उपादायाथ होतेळामिळोपेत्यादिकं[†] वदेत् ॥

॥ पशवो वा इळा ॥

[‡]इळेति भूमिनामास्यां वर्धन्ते पशवो यतः ॥

॥ पशूनेव तदुपह्वयते ॥

इळामुपह्वयन् होता पशून् स्वस्यात्मनो ह्वयेत् ॥

किञ्च,

॥ पशून् यजमाने दधाति ॥

स्थापयति ॥

नवमः खण्डः ।

---

॥ [§]मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्याहाध्वर्युः ॥

व्यक्तम् ॥

॥ [¶]त्वं ह्यग्ने प्रथमो मनोतेति सूक्तमन्वाह ॥

कः मैत्रावरुणः ।

---

[*] 'तत्प्रकारश्चाश्वलायनसूत्रे—'प्रत्यालभ्यामङ्गुष्ठेनाभिसंगृह्य प्रत्याहृत्य', 'अङ्गुलीर्मुष्टिं कृत्वा दक्षिणत इडां परिगृह्यास्यसम्मितामुपह्वयते प्राणसम्मितां वा' इति १-७-५, ६.
[†] आ० श्रौ० सू० १-७-७. [‡] 'इळाख्यां देवतामुपह्वयते । 'गौर्वा अस्यै शरीरम्' (तै० सं० १-७-२) इति श्रुत्यन्तरादिडदेवतायाः पशुरूपत्वम्' इति सायणः. 'पशवो वा इति । तद्धेतुत्वात् तात्स्थ्यम्' इति भट्टभास्करः. 'पशूनां पयोद्वारेणाग्निहेतुत्वात् सामानाधिकरण्यम्' इति गोविन्दस्वामी. [§] 'पशोर्वा आलब्धस्य मनोऽपक्रामति मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्याह मन एवास्यावरुन्धे' इति तै० सं० ६-३-१०.
[¶] ऋक्सं० ४-४-३५-१. 'मनोतायै संप्रेषितस्त्वं ह्यग्ने प्रथम इत्यन्वाह' इति आ० श्रौ० सू० ३-६-१.

प्रशास्तुरधिकारे हि पर्यग्नीत्यादि सूत्र्यते* ॥

त्रयोदशर्चमिदम् ॥

॥ तदाहुः ॥

चोद्यस्वरूपमाह—

॥ यदन्यदेवत्य उत पशुर्भवत्यथ कस्मादाग्नेयीरेव मनोतायै हविषोऽवदीयमानस्यान्वाहेति ॥

यत् यदि । †उत खलु । अग्निदेवत्याः अवदीयमानं हविरभिधातुम् ॥

परिहरति—

॥ तिस्रो वै देवानां मनोताः ॥

मनांस्यूतानि सूक्तानि यासु तास्तिस्र एव हि ॥

तदाह—

॥ तासु हि तेषां मनांस्योतानि ॥

तेषां देवानाम् । आ साधु ऊतानि । वेञो यजादेः क्तः ॥

तास्तिस्र आह—

॥ वाग् वै देवानां मनोता ॥

स्तुतिरूपा ॥

उपपादयति—

॥ तस्यां हि तेषां मनांस्योतानि । गौर्वै देवानां मनोता ॥

सर्वहविरुत्पत्तिस्थानत्वात् । पुमान् स्त्री च गोशब्दः ॥

---

* 'दक्षिणतो होतुरुपदनात् प्रह्वोऽवस्थाय वेद्यां दण्डमवष्टभ्य ब्रूयात् प्रैषांश्चादेशम्', 'अनुवाक्यां च संप्रैषे पूर्वां प्रैषात्', 'पर्यग्निस्तोकमनोतोऽग्नीषोमानसूक्तानि च' इति आ० श्रौ० सू० ३-१-२०, २१, २२. † 'उतशब्दश्चार्थे' इति भट्टभास्करः.

॥ तस्यां हि तेषां मनांस्योतानि । अग्निर्वै देवानां मनोता ।
तस्मिन् हि तेषां मनांस्योतानि ॥

*'यदा कदा च सुनवाम सोममग्निष्ट्वा दूतो धन्वात्यच्छ' इत्यग्नेः सर्वयज्ञसूचकत्वदर्शनात् ॥

किञ्च,

॥ अग्निः सर्वा मनोताः ॥

गोर्वाचश्च मनोतात्वं सत्यग्नावुपपद्यते ॥

तदाह—

॥ अग्नौ मनोताः संगच्छन्ते ॥

निगमयति—

॥ तस्मादाग्नेयीरेव मनोतायै हविषोऽवदीयमानस्यान्वाह ॥

†अग्नेर्ढको ङीप् । शस् ॥

अथ,

॥ ‡अग्नीषोमा हविषः प्रस्थितस्येति हविषो यजति ॥

हविषः, टार्थे[1] ङस् हविषा, §हृदयाद्यवदानरूपेण ॥

---

1. 'हविष इति टार्थे' ख. ङ. पाठः.

---

* ऋक्सं० ३-३-१९-४. † पा० सू० ४-२-३३. ‡ ऋक्सं० १-६-२९-१. § तथाच तै० सं०—'एकादशावदानान्यवद्यति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तस्यावद्यति हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसो यद्वै हृदयेनाभिगच्छति तज्जिह्वया वदति यज्जिह्वया वदति तदुरसोऽधिनिर्वदति एतद्वै पशोर्यथापूर्वं यस्यैवमवदाय यथाकाममुत्तरेषामवद्यति' इति ६-३-१०. 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसो यथाकाममितरेषाम्' इति आप० श्रौ० सू० ७-२४-२.

स्तौति—

॥ हविष इति रूपसमृद्धा ॥

किञ्च,

॥ प्रस्थितस्येति रूपसमृद्धा ॥

अग्नीषोमौ प्रति स्वयमेव गन्तुमुपक्रान्तस्येत्यर्थः ॥

विदुष आह—

॥ सर्वाभिर्हास्य समृद्धिभिः समृद्धं हव्यं देवानप्येति य एवं वेद ॥

समृद्धिः पूर्णता । अस्य वेदितुः ॥

॥ वनस्पतिं यजति* ॥

सूत्र्यते हि†—'पशुदेवताभ्यो वनस्पतिमनन्तरम्' इति । कृतावाहनकम्,

उक्तानुवाक्याप्रैषेण प्रशास्त्रा प्रेषितस्ततः ।
वनस्पत्यादिर्खैलिक्या यजेद्धोता वनस्पतिम् ॥
अनुवाक्याप्रैषयाज्यात्रितयं खैलिकं खलु ।

सूत्र्यते हि‡—'प्रैषमभितो याज्यानुवाक्ये' इति ॥

॥ प्राणो वै वनस्पतिः ॥

§वननीयः पतिरिति प्राणः प्रोक्तो वनस्पतिः ॥

---

* तत्प्रकारश्चापस्तम्बसूत्रे—'जुह्वामुपस्तीर्य सकृत् पृषदाज्यस्य उपहत्य द्विरभिघार्य वनस्पतयेऽनुब्रूहि वनस्पतये प्रेष्येति संप्रैषौ वषट्कृते जुहोति' इति ७–२५–१५.
† आ० श्रौ० सू० ३–१–१२. ‡ आ० श्रौ० सू० ३-६-५. § 'प्राणो वा इति । तद्धेतुत्वात् ताच्छब्द्यम्' इति भट्टभास्करः. 'वनस्पतेर्वृक्षशरीरस्य जीवाविष्टत्वात् प्राणत्वम्' इति सायणः.

॥ जीवं ह्यस्य हव्यं देवानप्येति । यत्रैवं विद्वान् वनस्पतिं यजति ॥

यत्र यदि । *जीवं जीवनस्यायुषः प्रदायकम् । अस्य यजमानस्य ॥

अथ,

॥ स्विष्टकृतं यजति† ॥

उक्तानुवाक्याप्रैषेण मशास्त्रा प्रेषितस्ततः ।
‡'अग्ने यद्येति' पुरो वर्जयन्निगदं§ यजेत्[1] ॥
¶'पशौ चे'ति हि सूत्रेण निगदः प्रतिषिध्यते ॥

॥ प्रतिष्ठा वै स्विष्टकृत् ॥

यज्ञसमृद्ध्यर्थत्वात् ॥

॥ प्रतिष्ठायामेव तद् यज्ञमन्ततः प्रतिष्ठापयति ॥

तत् तत्र । अन्ततः अन्ते ॥

---

१. 'वदेत्' घ ङ. पाठः.

---

* 'जीवं ह्यस्येत्यादि । जीवरूपमेवास्य यजमानस्य हव्यं पशुलक्षणं देवानप्येति । यत्र देशेऽप्येवं विद्वान् होता वनस्पतिं यजति किं पुनरस्मिन् कर्मणि' इति महभास्करः. 'विदुषो यष्टुर्हविरेवं प्राणोपेतं चेतनं भूत्वा तद्वद्देवानाप्नोति' इति सायणः. † 'उपर्याहवनीये जुह्वामौपभृतानि विपर्यस्याहाग्नये स्विष्टकृतेऽनुब्रूहि अग्नये स्विष्टकृते प्रेष्येति संप्रैषौ' इति आप० श्रौ० सू० ७-२५-१७. ‡ ऋक्सं० ४-५-१९-४. § निगद इति 'अयाडग्निः' इत्यादिः 'जुषतां हविः' इत्येवमन्त उच्यते. ¶ आ० श्रौ० सू० २-१८-७.

अथ हविरिळामाह—

॥ इळामुपह्वयते । पशवो वा इळा । पशूनेव तदुपह्वयते । पशून् यजमाने दधाति दधाति[1] ॥

उक्तार्थानि* । द्विरुक्तिश्चोक्तार्था† ॥

दशमः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ सुखप्रदायां षष्ठोऽध्यायः ॥

---

## अथ सप्तमोऽध्यायः ।

अथाग्नीषोमीयपशोरुक्तेष्वेव[2] क्वचित् क्वचित् ।
पर्यग्न्युदञ्जनयोर्वध्यखननादिषु वर्ण्यते—

॥ देवा वै यज्ञमतन्वत ॥

वै पुरा । अतन्वत कृतवन्तः ॥

॥ ताँस्तन्वानानसुरा अभ्यायन् यज्ञवेशसमेषां करिष्याम इति ॥

तान् देवान् । एषां देवानाम् । यज्ञस्य वेशसं भ्रेषम् ।

---

१. 'दधाति । इति षड्गुरुशिष्येण विरचितायां ब्राह्मणव्याख्यायां षष्ठोऽध्यायः' ख. ङ. पाठः. २. 'पशोरुक्तस्यैव' क. पाठः.

---

* page 255. † page 44.

रक्षसां चोत्तरत्रोक्तेरसुरेति प्रदर्शनम् ।
करिष्याम इति भावेन ॥

कदा कुत्रेत्याह—

॥ तानाप्रीते पशौ पुर इव पर्यग्नेः ॥

इव एव ।
दशप्रयाजयागान्ते प्राक् पर्यग्निकृतेः किल[1] ।
एष कालः ॥

॥ यूपं प्रति पुरस्तादुपायन् ॥

अन्तर्वेद्यर्धनिहितयूपस्य पुरतः खलु ।
एष देशः ॥

एवमसुररक्षस्स्वागतेषु,

॥ ते देवाः प्रतिबुध्याग्निमयीः पुरस्त्रिपुरं पर्यास्यन्त
यज्ञस्य चात्मनश्च गुप्त्यै ॥

पुरः प्राकारभित्तीः । अग्निमयीरग्निरूपाः । पर्यसनं स्थापनम् । लङ् आट् । *'उपसर्गादस्यत्यूह्योः' इति तङ् । †त्रिपुरं त्रिरूपं पुरं यथा तथा यज्ञात्मरक्षार्थम् ॥

॥ ता एषामिमा अग्निमय्यः पुरो दीप्यमाना भ्राजमाना अतिष्ठन् ॥

---

१. 'किल' च. छ. पाठः.

---

* पा० सू० वा० १-३-२९. † 'त्रिः कृतं पुरम्' इति गोविन्दस्वामी. 'त्रिप्रकारपालनं त्रिप्रकारशरीरं वा यथा भवति तथा' इति भट्टभास्करः. 'वेष्टनत्रयं यथा भवति तथा' इति सायणः.

एषां देवानाम् । ता इमाः अग्निमय्यः दीप्यमानाः । व्याचष्टे—भ्राजमानाः ज्वालामालाकुला इत्यर्थः ॥

॥ ता असुरा अनपधृष्यैवापाद्रवन् ॥

ताः पुरः । अनपधृष्य धर्षणमभिभवमकृत्वा ॥

॥ तेऽग्निनैव पुरस्तादसुररक्षांस्यपाघ्नत ॥

ते देवाः ॥

॥ अग्निना पश्चात् ॥

असुररक्षांस्यपाघ्नतेत्येव ।

प्राक् पश्चाच* कृता रक्षा परितःकृतवह्निना ॥

॥ तथैवैतद्यजमानाय पर्यग्नि कुर्वन्त्यग्निमयीरेव तत्पुरस्त्रिपुरं पर्यस्यन्ते यज्ञस्य चात्मनश्च गुप्त्यै ॥

एतदेतर्हि । पर्यग्नि कुर्वन्ति यत् पुरः पर्यस्यन्ते तत् ॥

॥ †तस्मात् पर्यग्नि कुर्वन्ति ॥

अध्वर्यवः ॥

॥ ‡तस्मात् पर्यग्नयेऽन्वाह ॥

प्रशास्ता ॥

---

* 'पश्चादिति सर्वदिगुपलक्षणार्थम्, असुरान् रक्षांसि च सर्वतोऽपाघ्नन् इति' इति गोविन्दस्वामी. † 'परितो यूपादिकमग्निना यत् कर्म क्रियते तत् पर्यग्नि' इति भट्टभास्करः. तथाचापस्तम्बः—'आहवनीयादुल्मुकमादायाग्नीध्रः परिवाजपतिः कविरिति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुम्' इति ७-१५-२. ‡ अत्रानुवचनं 'अग्निर्होता नः' इति पूर्वं प्रदर्शितम्, page 231.

॥ *तं वा एतं पशुमाप्रीतं सन्तं पर्यग्निकृतमुदञ्चं नयन्ति ॥

उदङ्मुखं गमयन्ति ॥

॥ तस्योल्मुकं पुरस्ताद्धरन्ति ॥

तस्य पशोः। दीप्ताग्रं काष्ठमुल्मुकम् ॥

स्तौति—

॥ यजमानो वा एष निदानेन यत् पशुः ॥

यत् यः। †निदानं सूक्ष्मदृष्टिहेतुः तेन ॥

ततश्च,

॥ अनेन ज्योतिषा यजमानः पुरोज्योतिः स्वर्गं लोकमेष्यतीति[1] ॥

पुरोऽग्रे ज्योतिर्यस्य स इति भावेन ॥

ततश्च,

॥ तेन ज्योतिषा यजमानः पुरोज्योतिः स्वर्गं लोकमेति ॥

किञ्च,

॥ तं यत्र निहनिष्यन्तो भवन्ति तदध्वर्युर्बर्हिरधस्तादुपास्यति ॥

---

१. 'लोकमेष्यतीति। भावेन' घ. ङ. पाठः.

---

* 'यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणमाहरेत्तेनैवैनं श्रपयित्वा करोति' इति तै० सं० ३-१-३. 'आहवनीयादुल्मुकमादायाग्नीध्रः पूर्वः प्रतिपद्यते शमिता पशुं नयति उरोरन्तरिक्षेत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयन्ति' इति आप० श्रौ० सू० ७-१६-८, ९, १०. † 'निदानेन कारणपर्यालोचनया' इति गोविन्दस्वामी. 'निदानेन तत्त्वदृष्ट्या पशुना खलु यजमान आत्मानं देवेभ्यो निष्क्रीणाति इत्येतन्निदानम्' इति भट्टभास्करः.

तत् तत्र । तं पशुम् । अधस्ताद् उपास्यति क्षिपति ॥

॥ यदेवैनमद आप्रीतं सन्तं पर्यग्निकृतं बहिर्वेदि नयन्ति बर्हिषदमेवैनं तत् कुर्वन्ति* ॥

†बर्हिषि सीदतीति बर्हिस्सत् । सलोपश्छान्दसः ॥

॥ तस्योवध्यगोहं खनन्ति‡ ॥

निधातुं भूम्यामिति शेषः । तस्य पशोः । 'ऊवध्यगोहं पार्थिवं खनताद्' इति हि प्रागुक्तम्§ ॥

स्तौति—

॥ औषधं वा ऊवध्यम् । इयं वा ओषधीनां प्रतिष्ठा । तदेनत् स्वायामेव प्रतिष्ठायामन्ततः प्रतिष्ठापयन्ति ॥

तत् तत्र । एनदूवध्यगोहम् । अन्ततः अन्ते प्रतिष्ठापयन्ति । अध्वर्यवः ॥

॥ तदाहुः ॥

---

* 'पृथिव्याः संपृचः पाहीति बर्हिरुपास्यत्यस्कन्दायास्कन्नं हि तद् यद् बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं करोति' इति तै० सं० ६-३-१०. 'अथ पर्यग्निकृते देशे उल्मुकं निदधाति स शामित्रस्तं दक्षिणेन प्रत्यञ्चं पशुमवस्थाप्य पृथिव्याः संपृचः पाहीति तस्याधस्ताद् बर्हिरुपास्यत्युपाकरणयोरन्यतरत् तस्मिन् संज्ञपयन्ति प्रत्यक्शिरसमुदीचीनपादम्' इति आप० श्रौ० सू० ७-१६-२,३,४,५. † 'बर्हिषदमेव दर्भेऽवस्थितमेव कुर्वन्ति । यद्वा बर्हिषदं यज्ञेऽवस्थितं वेद्यामवस्थितम्' इति सायणः. ‡ अस्य खननकालश्चापस्तम्बेन दर्शितः—'ऊवध्यगोहं पार्थिवं खनतादित्यभिज्ञायोवध्यगोहं खनति' इति ७-१६-१. § page 239.

चोद्यस्वरूपमाह—

॥ यद्येष हविरेव यत् पशुरथास्य बह्वपैति लोमानि त्वगसृत् कुष्ठिकाः शफा विषाणे स्कन्दति पिशितं केनास्य तदापूर्यत इति ॥

यत् यदि* । बह्विति व्याचष्टे—लोमानीत्यादि[1] । असृत् असृक् । ककारस्य दकारः । †कुष्ठिकाः दृढमांसानि । शफाः खुराः । विषाणे शृङ्गे । पिशितं मांसम् । स्कन्दति च्यवते । तद् अपेतं लोमादिकं केनापूर्यत इति ॥

परिहरति—

॥ यदेवैतत् पशौ पुरोळाशमनु निर्वपन्ति तेनैवास्य तदापूर्यते ॥

अस्य पशोः । तद् अपगतं लोमादि । यत् यं[2] पुरोळाशम् ॥

कथम्;

॥ पशुभ्यो वै मेधा उदक्रामंस्तौ व्रीहिश्चैव यवश्च भूतावजायेताम् ॥

‡'पुरुषं वै देवा' इति प्रागुक्तमिह कथ्यते ।
नरादिशरभान्तेभ्यो मेधा उत्क्रम्य वै स्थिताः ॥
सन्तो व्रीहियवावास्तां पुरोळाशस्तु तन्मयः ॥

---

१. 'लोमानि । असृत्', २. 'यं पशुपुरोळाशम्' क. ख. पाठः.

---

* 'यद् यदा' इति सायणः. † 'कुष्ठिका उदरवर्तिजघनवसाः' इति गोविन्दस्वामी. ‡ page 247.

॥ तद्यत् पशौ पुरोळाशमनु निर्वपन्ति समेधेन नः पशुनेष्टमसत् केवलेन नः पशुनेष्टमसदिति ॥

भावेनेति शेषः । उक्तार्थम्* ।

॥ समेधेन हास्य पशुनेष्टं भवति केवलेन हास्य पशुनेष्टं भवति य एवं वेद ॥

अस्य अनेन वेदित्रा ॥

प्रथमः खण्डः ।

---

पर्यग्निकरणादूर्ध्वं प्राक् स्वाहाकृतियागतः ।
वपायां श्रप्यमाणायां स्तोकसूक्तं ब्रवीति ह—

॥ †तस्य वपामुत्खिद्याहरन्ति । तामध्वर्युः स्रुवेणाभिघारयन्नाह स्तोकेभ्योऽनुब्रूहीति ॥

तस्य पशोः । आहरन्ति अध्वर्युवर्ग्याः उत्खिद्योत्पाट्य । तां वपाम् अभिघारयन् उपरि घृतं निषिञ्चन् । मैत्रावरुणं प्रति ।

‡प्रशास्तुरधिकारे हि पर्यग्नीत्यादि सूच्यते§ ॥

के स्तोका इत्याह—

॥ तद् यत् स्तोकाः श्चोतन्ति ॥

श्चोतन्ति क्षरन्ति यत् ये विन्दवः तत् ते स्तोकाः ॥

---

* page 251. † 'त्वामु ते दधिरे हव्यवाहमिति स्रुवेण वपामभिजुहोति प्रादुर्भूतेषु स्तोकेषु स्तोकेभ्योऽनुब्रूहीति संप्रेष्यति' इति आप० श्रौ० सू० ७-२०-२, ३. ‡ 'प्रशास्तारं तीर्थेन प्रपाद्य—' (आ० श्रौ० सू० ३-१-१६ इत्यत आरभ्य प्रशास्तुरधिकारः. § आ० श्रौ० सू० ३-१-२३

॥ सर्वदेवत्या वै स्तोकाः ॥

वै किश्चेत्यर्थः ॥

॥ नेन्म इमेऽनभिप्रीता देवान् गच्छानिति ॥

भावेनेति शेषः। इत् एव* ॥

इमे स्तोकाः स्तुतिप्रीता गच्छेयुर्वै सुरानिति।
गच्छानिति च्छान्दसं तु प्राप्तं गच्छेयुरेव हि ॥
+'आयातागच्छानुत्तरा युगानी'ति यथा खलु ॥

॥ ‡जुषस्व सप्रथस्तममित्यन्वाह ॥

प्रशास्ता ॥

॥ वचो देवप्सरस्तमम्। हव्या जुह्वान आसनीति ॥

अस्ति ॥

॥ अग्नेरेवैनांस्तदास्ये जुहोति ॥

एनान् स्तोकान्। आसनीति व्याचष्टे—आस्य इति ॥

॥ §इमं नो यज्ञममृतेषु धेहीति सूक्तमन्वाह ॥

पञ्चर्चम् ॥

---

* 'नेद् इत्ययं शब्दः परिभयार्थः' इति सायणः. + ऋक्सं० ७-६-७-५. ‡ ऋक्सं० १-५-२२-१. 'वपायां श्रप्यमाणायां प्रेषितः स्तोकेभ्योऽन्वाह जुषस्व सप्रथस्तममिमं नो यज्ञम्' इति आ० श्रौ० सू० ३-४-१. 'अत्रानुवचनवक्ता मैत्रावरुणः। तदाह बौधायनः—'यदा जानाति स्तोकेभ्योऽनुब्रूहीति तदा मैत्रावरुणः स्तोकीया अन्वाह जुषस्व सप्रथस्तमम् इति' इति सायणः. § ऋक्सं० ३-१-२१-१.

॥ इमा हव्या जातवेदो जुषस्वेति ॥

अस्ति ॥

॥ हव्यजुष्टिमाशास्ते ॥

*हव्यजुष्टिर्हविर्विषया प्रीतिः[1] ॥

॥ स्तोकानामग्ने मेदसो घृतस्येति ॥

अस्ति ॥

॥ मेदसश्च हि घृतस्य च भवन्ति ॥

स्तोका इति शेषः । मेदः मांसम् ॥

॥ होतः प्राशान प्रथमो निषद्येति ॥

अस्ति ॥

॥ अग्निर्वै देवानां होता[2] अग्ने प्राशान प्रथमो निषद्येत्येव तदाह ॥

तत् तत्र । निषद्य निषण्णो भूत्वा ॥

॥ †घृतवन्तः पावक ते स्तोकाः श्चोतन्ति मेदस इति ॥

अस्ति ॥

॥ मेदसश्च ह्येव हि घृतस्य च भवन्ति ॥

स्तोकाः । एव पुनः ॥

---

१. 'जुष्टिर्हविषा या प्रीतिः' घ. क. पाठः. २. 'होता । ततश्च, अग्ने' क. पाठः.

---

* 'प्रीत्या हव्यस्य स्वीकारो हव्यजुष्टिः' इति भट्टभास्करः. † ऋक्सं० ३-१-२१-२.

॥ स्वधर्मं देववीतये श्रेष्ठं नो धेहि वार्यमिति ॥

अस्ति ॥

॥ आशिषमाशास्ते ॥

उक्तार्थम्* ॥

॥ †तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्येति ॥

अस्ति ॥

॥ घृतश्चुतो हि भवन्ति ॥

श्चुतिर् क्षरणे । घृतस्राविणः ॥

॥ ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भवेति ॥

अस्ति ॥

॥ यज्ञसमृद्धिमाशास्ते ॥

समृद्धिः पूर्णता ॥

॥ ‡तुभ्यं श्चोतन्त्यध्रिगो शचीव स्तोकासो अग्ने
मेदसो घृतस्येति ॥

अस्ति ॥

॥ मेदसश्च ह्येव हि घृतस्य च भवन्ति ॥

स्तोकाः । एव पुनः ॥

---

* page 86. † ऋक्सं० ३-१-२१-३. ‡ ऋक्सं० ३-१-२१-४.

॥ कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिरेति ॥

अस्ति ॥

॥ हव्यजुष्टिमेवाशास्ते ॥

एव पुनः ॥

॥ *ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे । श्चोतन्ति ते वसो स्तोका अधित्वचि प्रति तान् देवशो विहीति ॥

†आभिरूप्यप्रदर्शनार्थः कृत्स्नपाठः । ‡ओजिष्ठं रसवत् । ते त्वदर्थम् । मध्यतः पशोः । मेदः वपाम् । उद्भृतम् । हृत्वो भत्वम् । उद्धृतं प्रददामहे ते तुभ्यं वयम् । श्चोतन्ति क्षरन्ति । हे §वसो प्रशस्य, स्तोकाः अधित्वचि देहस्योपरि तान् स्तोकान् ¶देवशः देवैः सह प्रतिविहि । ह्रस्वश्छान्दसः । ‖प्रतिवीहि सम्यगशानेति ॥

स्तौति—

॥ अग्न्येवैनांस्तद् वषट्करोति यथा सोमस्याग्ने वीहीति ॥

तद् तस्या वपाया $अग्नि अग्रे एनान् स्तोकान् ।

---

* ऋक्सं० ३-१-२१-५. † 'अस्याः कृत्स्नाया ऋच उपादानं वषट्कारसमानार्थतामस्या साक्षात्कारयितुम्' इति भट्टभास्करः. ‡ 'ओजिष्ठं बलिष्ठम्' इति गोविन्दस्वामी. § 'वसूनां वा एकोऽग्निः क्षितिस्थः । हे वसो' इति गोविन्दस्वामी. 'सर्वेषां निवासहेतो' इति सायणः. ¶ 'देवशः एकैकशः सर्वान् देवान् । बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्' इति गोविन्दस्वामी. 'तत्तद्देवतुष्टयर्थम्' इति सायणः. ‖ 'प्रतिप्राशय' इति गोविन्दस्वामी. 'प्रतिवीहि प्रत्येकं पिब' इति सायणः. $ 'अन्वर्थेऽभिशब्दः' इति भट्टभास्करः.

वपायाः स्तोकयागोऽयमग्रे वषडितीष्यताम् ।
यथाहि सोमयागस्य पश्चादनुवषट्कृतिः ॥

पुनः स्तौति—

॥ तद् यत् स्तोकाः श्चोतन्ति सर्वदेवत्या वै स्तोकाः ॥

यत् ये । तत् ते । वै खलु ॥

॥ तस्मादियं स्तोकशो वृष्टिर्विभक्तोपाचरति ॥

स्तोकयागः सर्वदेवप्रीत्यर्थः स च वृष्टिद इत्यर्थः ॥

द्वितीयः खण्डः ।

---

अन्त्यप्रयाजे स्वाहाकृत्याख्ये किञ्चिद् ब्रवीत्यथ—

॥ तदाहुः ॥

चोद्यस्वरूपमाह—

॥ काः स्वाहाकृतीनां पुरोनुवाक्याः कः प्रैषः का याज्येति ॥

परिहरति—

॥ या एवैता अन्वाहैताः पुरोनुवाक्याः ॥

जुपस्वैको मनुः पञ्च चानुवाक्या ऋचस्तु षट् ॥

॥ यः प्रैषः स प्रैषः ॥

*होता यक्षदग्निं स्वाहाज्यस्य स्वाहेत्यादि ॥

---

* 'होता यक्षदग्निं स्वाहाज्यस्य स्वाहा मेदस इति प्रैष उत्तमाप्रीयाज्या' इति आ० श्रौ० सू० ३-४-२।

॥ या याज्या सा याज्या ॥

*आप्रीसूक्तानां दशानामेकादशी ॥

किञ्च,

॥ तदाहुः । का देवताः स्वाहाकृतय इति ॥

स्वाहाकृतय इत्येताः का नाम खलु देवताः ॥

परिहरति—

॥ विश्वे देवा इति ब्रूयात् ॥

चोदकान् प्रति ॥

कुत एतत्,

॥ तस्मात् स्वाहाकृतं हविरदन्तु देवा इति यजन्तीति ॥

तस्मात् तथाहि ॥

†सर्वाप्रीत्वं प्राप्नवति 'समिद्धो अद्यमग्नि'ति ।
सूक्ते सद्यो जात इति पादोऽन्त्योऽयमृचः खलु ॥
देवा इति श्रुतेरत्र सर्वे देवा इतीष्यताम् ॥
अथ स्तोतुं वपायागं कथामाह प्ररोचयन्—

॥ देवा वै यज्ञेन श्रमेण तपसाहुतिभिः स्वर्गं लोकमजयन् ॥

‡श्रमेण तपस्सम्पादितेन । §'अतप्ततनूर्न तदामो अश्नुते' इति हि मन्त्रः ॥

---

* 'दशोऽथैकादशायाज्यमनाविनष्टि' इति आप० श्रौ० सू० ७-१४-८. † ऋक्सं० ८-६-८-१. 'समिद्धो अद्येति सर्वेषाम्' इति आ० श्रौ० सू० ३-२-६. ‡ 'श्रम उपवासादिः तीर्थसेवादिर्वा, तपः कृच्छ्रचान्द्रायणादिकम्' इति भट्टभास्करः. § ऋक्सं० ७-३-८-१.

॥ तेषां वपायामेव हुतायां स्वर्गो लोकः प्राख्यायत ॥

कर्मणि लङ् ।

स्वर्गो लब्धो वपाहोमे कृते देवैरदृश्यत ॥

॥ ततस्ते वपामेव हुत्वानादृत्येतराणि कर्माण्यूर्ध्वाः स्वर्गं लोकमायन् ॥

ते दृष्टस्वर्गकाः । इतराणि वपाहोमात् परभूतानि ॥

॥ ततो वै मनुष्याश्च ऋषयश्च देवानां यज्ञवास्त्वभ्यायन् यज्ञस्य किञ्चिदेषिष्यामः प्रज्ञात्या इति ॥

उक्तार्थम्* ॥

तेऽभ्येत्य च,

॥ तेऽभितः परिचरन्त ऐत् पशुमेव निरान्त्रं† शयानम् ॥

सर्वतो यज्ञदेशं तु गच्छन्तो मानुषर्षयः ।
शयानमुद्धृतवपं पशुमायन् क्रियापराः ॥

इणो लङो झेस्तिप्‡ ॥

॥ ते विदुरियान् वात्र किल पशुर्यावती वपेति ॥

किल अहो । इयान् इदंपरिमाणः । §'यत्तदेतेभ्यः परिमाणे वतुप्' । ¶'किमिदंभ्यां वो घः' । पशुयज्ञो नाम वपायाग एव हीत्यर्थः ॥

---

* page 201. † 'निरान्त्रं निरन्नं, यद्यप्यान्त्रशब्दः पुरीतद्वाची तथाप्यत्र तेन वपोपलक्ष्यते' इति सायणः. ‡ 'ऐद् इत्येकवचनं बहुर्थे द्रष्टव्यम्' इति गोविन्दस्वामी. 'ऐद् आयन् प्राप्नुवन् । वचनव्यत्ययः, प्रत्येकं वा ऐत्' इति भट्टभास्करः. § पा० सू० ५-२-३९. ¶ पा० सू० ५-२-४०.

तदाह—

॥ स एतावानेव पशुर्यावती वपा ॥

इति शर्वः ॥

॥ अथ यदेनं तृतीयसवने श्रपयित्वा जुह्वति भूयसीभिर्न आहुतिभिरिष्टमसत् केवलेन नः पशुनेष्टमसदिति ॥

भूयसीभिः बहुतराभिः । केवलेन पूर्णेनासद् भवेत् । तृतीयसवन इति । वपया प्रातःसवने[1] । पुरोळाशेन माध्यंदिने सवने । अङ्गैस्तृतीयसवने इत्युक्तसवनीयपश्वभिप्रायम् ।

भूयसीभिर्न इत्यादि जुह्वतां भाव उच्यते ॥

विद्वय आह—

॥ भूयसीभिर्हास्याहुतिभिरिष्टं भवति केवलेन हास्य पशुनेष्टं भवति य एवं वेद ॥

अस्यानेन वेदित्रा ॥

तृतीयः खण्डः ।

---

1. 'प्रातःसवने चरन्ति । पुरोळाशेन माध्यन्दिने । अङ्गैः' घ. ङ. पाठः

अथ स्तौति वपाहोमं पश्चादवत्तत्वमत्र च ।
हिरण्यशकलैर्होमस्त्वभावे[1] घृतबिन्दुभिः ॥

॥ सा वा एषामृताहुतिरेव यद्वपाहुतिः ॥

यद् वा ॥

अत्र दृष्टान्तमाह—

॥ अमृताहुतिरग्न्याहुतिरमृताहुतिराज्याहुतिरमृताहुतिः सोमाहुतिः ॥

अग्निमन्थनेष्टि[2] सोमयागेषु ॥

सर्वाः स्तौति—

॥ एता वा अशरीरा आहुतयः ॥

पुनर्जन्माभावहेतुत्वेन शरीरापरिग्रहहेतवः ॥

विस्पष्टयति—

॥ या वै काश्चाशरीरा आहुतयोऽमृतत्वमेव ताभिर्यजमानो जयति ॥

अमृतत्वं मोक्षम् । जयति वशीकरोति ॥

किञ्च,

॥ सा वा एषा रेत एव यद्वपा ॥

यद् या । एव इव ॥

---

१. 'शकलैर्हिरण्याभावे' च. इ. पाठः. २. 'मन्थेष्टि' क. पाठः.

कथं,

॥ प्रेव वै रेतो लीयते प्रेव वपा लीयते ॥

लीङ् श्लेषणे, दिवादिः ।

रेतोवपे हि लीयेते वह्निस्पृष्टं घृतं यथा ॥

किञ्च,

॥ शुक्लं वै रेतः शुक्ला वपा ॥

रेतोवपे श्वेतवर्णे[1] कुन्देन्दुरजतादिवत् ॥

॥ अशरीरं वै रेतोऽशरीरा वपा ॥

कथमशरीरत्वं,

॥ यद् वै लोहितं यन्मांसं तच्छरीरम् ॥

न रेतोवपयो रक्तमांसयोगो हि विद्यते ॥

॥ तस्माद् ब्रूयाद् यावदलोहितं तावत् परिवासयेति ॥

तस्मात् तथाहि । लटो लिङ्, ब्रवीति । अलोहितं निर्गतरक्तं यथा तथा परिवासय शोधय* ॥

किञ्च,

॥ सा पश्चात्त्चा भवति ॥

सा वपा ॥

1. 'शुक्लवर्णे' ग. क. पाठः.

* 'परिवासय छिन्धि' इति गोविन्दस्वाम्यादयः.

किं *'जमदग्नीनां पञ्चावत्तम्' इत्युक्तपञ्चावत्तिविषयमिदं, नेत्याह—

॥ यद्यपि चतुरवत्ती यजमानः स्यादथ पञ्चावत्तैव वपा ॥

अथ तथापि ॥

कथम्,

॥ आज्यस्योपस्तृणाति ॥

टार्थे रूस् । अथ,

॥ हिरण्यशल्कः ॥

स्वर्णशकलम् ॥

॥ वपा ॥

मध्ये । पुनः,

॥ हिरण्यशल्क आज्यस्योपरिष्टादभिघारयति ॥

अभिघारणमुपरिसेचनम् ।

‡आर्दौ घृतं ततो हेम वपा हेम घृतं त्विति ॥

॥ तदाहुः ॥

चोद्यस्वरूपमाह—

॥ यद्धिरण्यं न विद्येत कथं स्यादिति ॥

---

* आप० श्रौ० सू० २-१८-२. 'वत्सा बिदा आर्ष्टिषेणाः पञ्चावत्तिनो भवन्ति अन्ये तु चतुरवत्तिनः', † 'अप्राशिनः षष्ठी द्वितीयार्थो' इति गोविन्दस्वामी. ‡ 'जुह्वामुपस्तीर्य हिरण्यशकलमवधाय कृत्वा वपामवदाय हिरण्यशकलमुपरिष्टात् कृत्वाभिघारयति । एवं पञ्चावत्ता भवति । चतुरवत्तिनोऽपि पञ्चावत्तैव स्याद्' इति आप० श्रौ० सू० ७-२०-९, १०, ११.

यत् यदि । न विद्येत, विन्दतेः कर्मणि लिङ् । विद्यतेर्वा कर्तरि । न लभ्येत न भवेदित्यर्थः ॥

परिहरति—

॥ द्विराज्यस्योपस्तीर्य वपामवदाय द्विरुपरिष्टादभिघारयति ॥

आदौ घृतं द्विर्वपाथ द्विर्घृतं स्विति पञ्चता ॥

कस्मादेवम्,

॥ अमृतं वा आज्यममृतं हिरण्यम् ॥

*अमृतत्वेन हेमाज्ये सम्यग् वेदेषु संस्तुते ॥

॥ तत्र स काम उपाप्तो य आज्ये । तत्र स काम उपाप्तो यो हिरण्ये ॥

†'आशंसायां भूतवच्च'। उपाप्तः प्राप्तव्यः ।

कामो लाभो यो हिरण्ये स एवाज्येऽपि लभ्यते ।
इति हेमाज्यतुल्यत्वाद्धेम्नः प्रतिनिधिर्घृतम् ॥

॥ तत् पञ्च सम्पद्यन्ते ॥

तत् शिलुक् । तान्यवदानानि ॥

ततः किं,

॥ पाङ्क्तोऽयं पुरुषः ॥

पङ्क्तिस्तु पञ्चसंख्यास्याः सम्बन्धी काय उच्यते ॥

---

* 'अमृतं वा आज्यम् । अमृतमेवात्मन् धत्ते' इति तै० ब्रा० ३-१८-१. 'अमृतमायुर्हिरण्यं तदमृत आयुषि प्रतितिष्ठति' इति शत० ब्रा० ५-२-१-२०. 'आज्यहिरण्ययोरमृतत्वं तद्धेतुतया 'हिरण्यदा अमृतत्वं भजन्ते' (ऋक्सं० ८-६-३-२) इति श्रुतेः ।' अमृतत्वं दीर्घायुष्ट्वम् । आह च मनुः—'दीर्घमायुर्हिरण्यदः' (४-२३०) इति । आज्यस्यामृतहेतुत्वमायुर्वेदे प्रसिद्धम्' इति गोविन्दस्वामी. 'आज्यस्य स्वादुत्वेन हिरण्यस्य च दर्शनीयत्वेन प्रियत्वादमृतत्वम्' इति सायणः.
† पा० सू० ३-३-१३२.

कुतः,

॥ पञ्चधा विहितः ॥

निर्मितः ॥

कथं,

॥ लोमानि त्वङ् मांसमस्थि मज्जा ॥

एवमिति शेषः ॥

॥ स यावानेव पुरुषस्तावन्तं यजमानं संस्कृत्याग्नौ देवयोन्यां जुहोति ॥

'देवानां योनौ' प्रिये स्थाने प्रक्षिपति ॥

॥ अग्निर्वै देवयोनिः ॥

सर्वदेवानां मुखत्वेन प्रियत्वात् ॥

॥ सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति ॥*

व्यक्तम् ।

अग्नीषोमीयाख्यपशुरेवं सम्यक् प्रवर्णितः ॥

चतुर्थः खण्डः ।

---

१. 'योनौ स्थाने' क. पाठः.

---

* 'देवत्वकारणे अग्नौ' इति भट्टभास्करः.

अथ प्रातरनुवाकमाख्यायान्ताद् ब्रवीति ह—

॥ *देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहीत्याहाध्वर्युः ॥

प्रातःपूर्वाद्यातेर्वनिप् ॥

॥ एते वाव देवाः प्रातर्यावाणो यदग्निरुषा अश्विनौ ॥

यत् ये ॥

॥ त एते सप्तभिः सप्तभिश्छन्दोभिरागच्छन्ति ॥

†आग्नेयोषस्याश्विनाख्यैश्छन्दस्सप्तकसंयुतैः ।
ऋतुभिः संस्तुताः प्रातर्यज्ञमायन्ति खल्विमे ॥

॥ आस्य देवाः प्रातर्यावाणो हवं गच्छन्ति य एवं वेद ॥

अस्य वेदितुः । हवं यज्ञमागच्छन्ति ॥

अत्रेतिहासमाह—

॥ प्रजापतौ वै स्वयं होतरि प्रातरनुवाकमनुवक्ष्यत्युभये देवासुरा यज्ञमुपावसन्नस्मभ्यमनुवक्ष्यत्यस्मभ्यमिति ॥

कस्यचिद् यज्ञे स्वयं साक्षात् प्रजापतौ होतरि हौत्रं कुर्वति । अनुवक्ष्यति सति । ‡'लृटः सद्वा' । शतुङि । उपावसन् समीपे वसन्ति स्म । अस्मदर्थमनुवचनं करिष्यतीति भावेन ॥

---

* 'प्रातर्यावभ्यो देवेभ्योऽनुब्रूहि' इति आप० श्रौ० सू० १२-३-१५. 'अथैतस्यां रात्रेर्विवासकाले प्रागवयसां प्रवादात् प्रातरनुवाकायामन्त्रितो वाग्यतस्तीर्थेन प्रपद्याग्नीध्रीये जान्वाच्याहुतिं जुहुयात्' इति आ० श्रौ० सू० ४-१३-१. † ताश्च ऋचः 'आपो रेवतीः क्षयथा हि वस्वः—' इत्यादिना आ० श्रौ० सूत्रे (४-१३-७, १४-२, १५-२) उदाहृताः. ‡ पा० सू० ३-३-१४.

॥ स वै देवेभ्य एवान्वब्रवीत् ॥

वै इति त्वर्थः ॥

दैत्यांस्त्यक्त्वा स तु प्रातरनुवाकमनूक्तवान् ॥

॥ ततो वै देवा अभवन् ॥

भवतिः समृद्ध्यर्थः ॥

॥ परासुराः ॥

अभवन्नित्येव । पराभवो नाशः* ॥

॥ भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति
य एवं वेद ॥

आत्मना स्वयम् । अस्य वेदितुः द्विषन् पराभवति । द्विषन् द्वेषयुक्तः । †पाप्मा उपद्रवकारी । भ्रातृव्यः शत्रुः ॥

प्रातरनुवाकशब्दं निराह—

॥ प्रातर्वै स तं देवेभ्योऽन्वब्रवीत् ॥

स प्रजापतिः ॥

॥ यत् प्रातरन्वब्रवीत् तत्प्रातरनुवाकस्य प्रातरनुवाकत्वम् ॥

वचेः कर्मणि घञ् ॥

अस्य कालमाह—

॥ ‡महति रात्र्या अनूच्यः ॥

---

* 'परासुराः पराभूताः असुरा यैर्देवैस्ते परासुरा देवाः । यद्वा असुराः पराभवन् इति सम्बन्धः', † 'पाप्मा पापम्' इति गोविन्दस्वामी. ‡ 'महति रात्रियै प्रातरनुवाकमुपाकुर्यात् पूर्वो वाचं पूर्वो देवताः पूर्वश्छन्दांसि' इति तै० सं० ७-५-५.

वचेः क्यप् छान्दसस्तत्र सम्प्रसारणपूर्वते ।

रात्रेः पश्चिमयामो महारात्रः । सूच्यते ह्यापस्तम्बेन—*'महारात्रे बुद्ध्वा' इति । रात्र्या अंशो यो मह्च्छब्दवान् तत्रेत्यर्थः ॥

किमर्थं,

॥ सर्वस्यै वाचः सर्वस्य ब्रह्मणः परिगृहीत्यै ॥

ब्रह्म वेदः । वेदस्य तदुपयोगिन्या वाचश्च संग्रहाय ॥

॥ यो वै भवति यः श्रेष्ठतामश्नुते तस्य वाचं प्रोदितामनुप्रवदन्ति ॥

वै इव ॥

विद्यातपोभ्यां यः श्रैष्ठ्यमेति यो वा भवेत् प्रभुः ।
तदुक्तां वाचमन्येऽनुवदन्त्यात्मसमृद्धये ॥
यथा तथैव होतारं सर्वलोकोऽनुभाषताम् ॥ इत्यर्थः ॥

निगमयति—

॥ तस्मान्महति रात्र्या अनूच्यः ॥

अत्र च,

॥ †पुरा वाचः प्रवदितोरनूच्यः ॥

‡'भावलक्षणे—' इति तोसुन् । प्रवदनात् पुरा प्राक् ॥

॥ यद्वाचि प्रोदितायामनुब्रूयादन्यस्यैवैनमुदितानुवादिनं कुर्यात् ॥

---

* श्रौ० सू० १२-१-१. † 'पुरा वाचः प्रवदितोः प्रातरनुवाकमुपाकरोति यावत्येव वाक् तामवरुन्धे' इति तै० सं० ६-४-३. ‡ पा० सू० ३-४-१६.

यजादेर्वदेः क्ते सम्प्रसारणम्। यत् यदि। एनं प्रातरनुवाकम्॥

॥ तस्मान्महति रात्र्या अनूच्यः॥

प्राक् प्रवादादिति शेषः॥

॥ पुरा शकुनिवादादनुब्रूयात्॥

अपक्षिशब्दपूर्वोक्तमपि मृष्यामहे वयम्।
एतन्मूलं 'प्राग्वयसां प्रवादादि'ति सूत्र्यते* ॥

कुतः,

॥ निर्ऋतेर्वा एतन्मुखं यद्वयांसि यच्छकुनयः॥

†'निर्ऋतिर्मृत्युसंज्ञा'[1] तु देवता प्राणहारिणी।

मुखं द्वारम्। यत् यानि। यत् ये। ‡वयांसीति व्याचष्टे—शकुनय इति॥

॥ तद् यत् पुरा शकुनिवादादनुब्रूयान्मायज्ञियां वाचं प्रोदितामनु प्रवदिष्मेति॥

यज्ञानर्हां शकुन्युक्तां मानुवादिष्म वै गिरम्।
इति मत्वा त्वनुब्रूयात् प्रागेव शकुनिध्वनेः॥

1. 'निर्ऋतिर्मृत्युसंज्ञा' च. ङ. पाठः.

* आ॰ श्रौ॰ सू॰ ४–१३–१. † 'निर्ऋतिश्च तथाचान्या मृत्योर्भार्याभवन्मुने' इति मार्क॰ पु॰ अध्या॰ ४७, श्लो॰ ३३, Venkateswara Press, Bombay. ‡ 'भूमौ चरन्तः कुक्कुटादयः शकुनयः, नभस्येव चरन्तो गृध्रादयः पक्षिणो वयांसि' इति भट्टभास्करः. 'वयांसि शकुनय इति सामान्यविशेषभावेन सामानाधिकरण्यम्' इति गोविन्दस्वामी. 'वयःशब्देन पक्षिसामान्यमुच्यते। शकुनिशब्देन पक्षिविशेषः। येषां सञ्चारानभ्वनीशानिष्टसूचकतया मनुष्या व्यवहरन्ति ते शकुनयः' इति सायणः.

॥ तस्मान्महति रात्र्या अनूच्यः ॥

पुरा शकुनिवादादिति शेषः ॥

॥ अथो खलु यदैवाध्वर्युरुपाकुर्यादथानुब्रूयात्* ॥

अथवेत्यर्थः । उपाकृतिः सम्प्रैषः ॥

॥ यदा वाध्वर्युरुपाकरोति वाचैवोपाकरोति वाचा होतान्वाह ॥

ततः किं,

॥ वाग्घि ब्रह्म ॥

वेदोऽपि वागेव †झयो हो घः पूर्वसवर्णता ॥

॥ तत्र स काम उपाप्तो यो वाचि च ब्रह्मणि च ॥

वाग्वेदयोर्यस्तु लाभः पूर्वोक्तः स भवेदिह ॥

पञ्चमः खण्डः ।

---

अथात्राद्यामृचं वक्तुमितिहासं ब्रवीति ह—

॥ प्रजापतौ वै स्वयं होतरि प्रातरनुवाकमनुवक्ष्यति सर्वा देवता आशंसन्त मामभि प्रतिपत्स्यति मामभीति ॥

आरम्भः प्रतिपत् । स्य तिप् । प्रतिपत्स्यते । मद्देवत्ययर्चारम्भः कथं स्यादिति सर्वा देवता ऐच्छन्नित्यर्थः । आशंसा प्रार्थना । अभि प्रति । ‡वीप्सादरात् ॥

---

* 'अपयान्तरेण युगधुरावुपविश्य प्रेषितः प्रातरनुवाकमनुब्रूयान्मन्द्रेण' इति आ० श्रौ० सू० ४-१३-६. 'पुरा वाचः पुरा वा वयोभ्यः प्रवदितोः प्रातरनुवाकमुपाकरोति । प्रातर्यावभ्यो देवेभ्योऽनुब्रूहि ब्रह्मन् वाचं यच्छ प्रतिप्रस्थातः सवनीयान्निर्वप सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यति' इति आप० श्रौ० सू० १२-३-१४, १५. † पा० सू० ८-४-६२. ‡ 'प्रतिदैवतमाशाभेदाद् वीप्सा' इति गोविन्दस्वामी. 'प्रत्येकाशंसाद्योतनार्था वीप्सा' इति भट्टभास्करः. 'मामभीति वीप्सा सर्वसंग्रहार्था' इति सायणः.

॥ स प्रजापतिरैक्षत यथैकां देवतामादिष्टामभिप्रतिपत्स्यामीतरा मे केन देवता उपाप्ता भविष्यन्तीति ॥

एकां चेत् प्रतिपत्स्येऽहमितरा देवतास्तु मे ।
आरम्भे संगृहीताः स्युः केनोपायेन नास्ति सः ॥
इति सर्वाविरोधी स चिन्ताव्याकुलितोऽभवत् ।
एकां देवतामभि प्रति । *आदिष्टामधीताम् ॥

॥ स एतामृचमपश्यदापो रेवतीरिति[†] ॥

स खिन्नो देवतासङ्ग्रवाचिनीं विमृशन् ऋचम् ।
आरम्भाय ततोऽपश्यदापोरेवादिकामिमाम् ॥
कथं[1] ह्यपेक्षितं सिद्धमनयेत्यत उच्यते—

॥ आपो वै सर्वा देवता रेवत्यः सर्वा देवताः ॥

‡आप्नोतेः क्विप् ह्रस्वश्चेति ह्यप्शब्दो व्याप्तृवाचकः ।
§रयेर्मतौ तु बहुलं रेवती सम्प्रसारणम् ॥
¶व्याप्यश्च धनवत्यश्च सर्वा वै देवता इह ॥

---

1. 'अथ' ख. ङ. पाठः.

---

* 'उद्दिष्टाम्' इति गोविन्दस्वामी. 'केनचिन्मन्त्रेण प्रतिपादिताम्' इति सायणः. † ऋक्सं० ७-७-३६-२. 'अपोऽस्मेऽभि व्याहरति' इति च तै० सं० ६-४-३. ‡ उणादिसू० २-६१. § पा० सू० वा० ६-१-३७. ¶ 'सर्वासां देवतानामादौ आपः सृष्टा इति सर्वदेवतात्वमपाम् । आह च मनुः—'अप एव ससर्जादौ' इति (१-८). रेवत्यः धेनवः तद्वत्यश्च देवताः कथं शब्देनोपाकरोति देवता इत्यनेनाभिप्रायेण रेवत्यः सर्वा देवताः (?) । आह च जैमिनिः—'विधिशब्दस्य मन्त्रत्वे भावः स्यात्' इति (१०-४-२३). रेवत्य इति वा योजना' इति गोविन्दस्वामी. 'सस्यादिसम्पादनद्वारेण सर्वदेवतास्थितिहेतुत्वात् तद्भाव उपचर्यते । तदेव स्पष्टयति—रेवत्य इति । गवाद्यादिधनहेतुत्वेन तद्वत्यो यस्मादेता भवन्ति तस्मात् तदुपजीविसर्वदेवतास्थितिहेतुत्वात् सर्वदेवतात्वमासाम्' इति भट्टभास्करः. 'आप्नुवन्तीत्यापः रायो धनानि यासां सन्तीति रेवत्यः यज्ञभूमिप्राप्तिर्धनवत्त्वं च सर्वासु देवतासु विद्यते तस्मात् सर्वदेवताप्रतिपादिकेयमृक्' इति सायणः.

॥ स एतयर्चा प्रातरनुवाकं प्रत्यपद्यत ॥

तदा च,

॥ ताः सर्वा देवताः प्रामोदन्त मामभि प्रत्यपादि मामभीति ॥

कर्तरि लुङि "* चिण् ते पदः" । अभि प्रति ॥

मां प्रत्येवेदमारब्धमित्यहृष्यन् सुरास्ततः ॥

अत इदानीमपि,

॥ सर्वा हास्मिन् देवताः प्रातरनुवाकमनुब्रुवति प्रमोदन्ते ॥

अस्मिन् होतरि मोदन्ते हृष्यन्ति ॥

॥ सर्वाभिर्हास्य देवताभिः प्रातरनुवाकः प्रतिपन्नो भवति य एवं वेद ॥

अस्य वेदितुः । प्रतिपन्नः स्वीकृतः ॥

अथापोरेवतीत्यस्या माहात्म्याय कथोच्यते—

॥ ते देवा अबिभयुः ॥

कथम्,

॥ आदातारो वै न इमं प्रातर्यज्ञमसुरा यथौजीयांसो बलीयांस एवमिति ॥

दो अवखण्डने । तृन् । †"नलोका—" इति षष्ठीनिषेधः ॥

॥ तानब्रवीदिन्द्रः ॥

---

* पा० सू० ३-१-६०. † पा० सू० २-३-६९.

कथं,

॥ मा विभीत त्रिषमृद्धमेभ्योऽहं प्रातर्वज्रं प्रहर्तास्मीति ॥

एभ्यः इमानसुरान् हन्तुम् । *"क्रियार्थोपपदस्य—' इति चतुर्थी ॥

त्रिषमृद्धं त्रिभिः क्लृप्तं तापनिर्माणवापनैः (?) ।
त्सरुदण्डफलैर्वापि षत्वं †पूर्वपदादिति ॥
छान्दसं मा विभीतेति प्राप्ते मा भैष्ट वै यतः ॥

तथेति निश्चित्येन्द्रः,

॥ एतां वाव तदृचमब्रवीत् ॥

तत् तत्र । एताम् आप इत्याद्याम् ॥

कथमस्या वज्रत्वं,

॥ वज्रस्तेन यदपोनप्त्रीया ॥

यत् यस्मात् । ‡अपोनप्त्रीया क्रूरस्य वरुणस्य सम्बन्धिनी ॥

॥ वज्रस्तेन यत् त्रिष्टुप् ॥

§वीर्यवदिन्द्रयोगात् त्रिष्टुभः ॥

॥ वज्रस्तेन यद्वाक् ॥

वाग्रूपत्वाच्च वज्रत्वं वाग्वज्रो हि सुदुःसहः ।

* पा० सू० २–३–१४. † पा० सू० ८–३–१०६. ‡ अस्या ऋच अपोनप्त्रीयत्वे च सर्वानुक्रमणी—'प्रदेवत्रा पञ्चोना कवष ऐलूष आपमपोनप्त्रीयं वा' इति म० १०. सू० ३०. § 'तमिन्द्रो देवतान्वसृज्यत त्रिष्टुप् छन्दो बृहत्साम' इति तै० सं० ७-१-१. 'इन्द्रियं वै वीर्यं त्रिष्टुप्' (तै० ब्रा० १–७–६) इति श्रुत्यन्तरे वीर्यरूपत्वश्रवणाद् वज्रत्वम्' इति सायणः.

*उक्तं ह्युत्तरयायाते त्विदं सम्भवपर्वणि ॥
"संरोहति शरैर्विद्धं वनं परशुना क्षतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम्" ॥ इति ॥

॥ तमेभ्यः प्राहरत् ॥

तं त्रिषमृद्धं वज्रम् ॥

॥ तेनैनानहन् ॥

एनानसुरान् । तेन वज्रेण । अहन् हतवान् ॥

॥ ततो वै देवा अभवन् परासुराः । भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥

उक्तार्थानि ॥

॥ तदाहुः स वै होता स्याद् य एतस्यामृचि सर्वाणि छन्दांसि प्रजनयेदिति ॥

य एतस्यामृचि छन्दः सर्वं सम्पादयेद् बुधः ।
स होता स्याद् यज्ञ एवं शुभ इत्याहुरुत्तमाः ॥
त्रिष्टुभ्यस्यां कथं सर्वं छन्दः स्यादत उच्यते—

॥ एषा वाव त्रिरनुक्ता सर्वाणि छन्दांसि भवति ॥

भवति सम्पद्यते ॥

उक्ताद्युत्कृतिपर्यन्ता छन्दः षड्विंशतिस्तु या ।
चतुरूर्ध्वा चतुष्काद्या चतुर्युक्तशतान्तिमा ॥

---

* अध्या० ८. श्लोक० २६. Edited by T. R. Krishnacharya, Kumbakonam. † page 281.

त्रिरुक्तौ त्रिष्टुभः सा तु सर्वान्तर्भवतीह वै ।
चतुश्चत्वारिंशद्वर्णा त्रिष्टुप् तस्यास्त्रिरुक्तितः' ॥
सम्पद्यन्ते यतो वर्णा द्वात्रिंशदधिकं शतम् ।
षड्विंशत्याच्छन्द उक्तमेषु चोनाधिकं द्वयम् ॥

एवञ्च,

॥ एषा छन्दसां प्रजातिः ॥

तुड् नात्र *वा पदान्तस्य क्तिश्चाधिकरणे जनेः ।
प्रजातिरुत्पत्तिस्थानम् ॥

षष्ठः खण्डः ।

---

अथर्क्संख्याविशेषांस्तु प्रब्रवीति प्ररोचयन् ।
शतादिकामितान्तांश्च षड् वै कामसमन्वितान्—

॥ शतमनूच्यमायुष्कामस्य ॥

शताब्दमिच्छतो षड्ढोत्रा वाच्यमृचां शतम् ॥

॥ शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रियः ॥

†शतमिन्द्रियवीर्यस्यमायुषः शतभेदतः ॥

---

1. 'त्रिष्टुप् स्यात् त्रिभिरुक्तितः' क, ख. पाठः.

---

* पा॰ सू॰ ६-१-७६. † 'अधर्मसंपादितस्यायुषोऽभावे संवत्सरशतं मनुष्या जीवन्ति । दशसंख्याकानीन्द्रियाणि प्रत्येकं दशसु नाडीषु वर्तमानत्वाद् मिलित्वा शतेन्द्रियाणि भवन्ति । तदवस्थाकाराणामपि शतत्वेन शतवीर्यत्वम्' इति सायणः. 'वीर्येन्द्रिययोः सामानाधिकरण्यं सामान्यविशेषभावेन । शतशब्दस्य बहुनामसु पठितत्वाद् बहुत्वमिन्द्रिये परिगृह्यते' इति गोविन्दस्वामी. 'जीवनावस्था आयुः, वीर्यं बलम्, इन्द्रियं शुक्रम् । पुरुषस्य च शतं वर्षाणि परमायुर्भवति' इति भट्टभास्करः.

॥ आयुष्येवैनं तद्वीर्य इन्द्रिये दधाति ॥

तच्छतवचनं कर्तृ । एनं यजमानम् ॥

॥ त्रीणि च शतानि षष्टिश्चानूच्यानि यज्ञकामस्य ॥

सदा करिष्यामि यज्ञमिति धीर्यस्य तस्य तु ।
शतत्रयं षष्टियुतमृचां संख्या भवेदिह ॥

॥ त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि । तावान् संवत्सरः । संवत्सरः प्रजापतिः । *प्रजापतिर्यज्ञः । उपैनं यज्ञो नमति यस्यैवं विद्वान् त्रीणि च शतानि षष्टिं चान्वाह ॥

उपनमति स्वयमेवागच्छेत् । एनम् एवंविद्धोतृकं[1] यजमानम् ॥

॥ सप्त च शतानि विंशतिश्चानूच्यानि प्रजापशुकामस्य । सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः ॥

षष्ट्युत्तरं त्रिशतकं दिनं रात्रिश्च वै तथा ॥

॥ तावान् संवत्सरः संवत्सरः प्रजापतिः ॥

कीदृशः सः,

॥ यं प्रजायमानं विश्वं रूपमिदमनु प्रजायते ॥

प्रजातिः प्रकाशः । विश्वं रूपम्, †अर्शआद्यच् । बहुरूपवत् । व्याचष्टे—

॥ प्रजापतिमेव तत् प्रजायमानं प्रजया पशुभिरनु प्रजायते ॥

तत् तत्र । इदमित्येव ॥

---

१. 'एवं विद्वद्धोतृकम्' क. ख. पाठः.

---

* 'प्रजापतेर्यज्ञत्वं यज्ञाधिकारिणो गृहस्थत्वाद्, यज्ञे प्रजापतिशब्दो भाक्तः' इति गोविन्दस्वामी. 'यज्ञस्य प्रजापतिस्वरूपत्वात् तद्रूपत्वम्' इति सायणः. † पा० सू० ५-२-१२७.

ततश्च,

॥ *प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद ॥

†उक्तार्थम् ॥

॥ अष्टौ शतान्यनूच्यान्यब्राह्मणोक्तस्य ॥

‡अब्राह्मणोक्तान् षट् पूर्वमवोचामाग्निमन्थने§ ॥

॥ यो वा दुरुक्तोक्तः शमलगृहीतो यजेत ॥

¶दुरुक्तैः पापैरुक्तः अभिशस्तः। शमलं पापं तेन गृहीतः पापकारी ॥

तयोश्चाष्टशतं वाच्यमभिशस्तातिपापिनोः ॥

कस्मादेवम्—

॥ अष्टाक्षरा वै गायत्री ॥

ततः किं,

॥ गायत्र्या वै देवाः पाप्मानं शमलमपाघ्नत ॥

‖शमलमिति व्याचष्टे—पाप्मानमिति। अपाघ्नत लङ्। झेः। हतवन्तः ॥

॥ गायत्र्यैवास्य तत् पाप्मानं शमलमपहन्ति ॥

---

* 'प्रजात्यै प्रजापशूत्पादनाय' इति सायणः. 'प्रजात्यै प्रजननसामर्थ्याय' इति भट्टभास्करः. † page 15. ‡ 'ब्राह्मणैरनुक्तोऽब्राह्मणोक्तः' इति गोविन्दस्वामी. 'यो वा दुरुक्तोक्तः इति वक्ष्यमाणत्वाद् विलक्षणो ब्राह्मणो गृह्यते, विलक्षणेन ब्राह्मणेनानुक्तः' इति भट्टभास्करः. 'अब्राह्मणत्वेन स्मृतिषु योऽभिहितः सोऽयमब्राह्मणोक्तो यज्ञेऽनधिकारी' इति सायणः. § pages 109 & 110. ¶ 'दुरुक्तोक्तो दुरुक्तोक्तः अनाचारः सन् दुश्चरित्रेणाभिशस्त इत्यर्थः' इति गोविन्दस्वामी. 'दुरुक्तोक्तः दुरुक्तेनाभिशस्तादिनोक्तः' इति भट्टभास्करः. 'दुरुक्तोक्तः दुरुक्तेनापवादेन जनैरभिहितः, स शमलगृहीतः मलिनेन लोकविरुद्धेन स्वीकृतः' इति सायणः. ‖ 'पाप्मानं शमलमिति पदद्वयोपादानं पापस्य महत्त्वं ख्यापयितुम्। यद्वा महन्मलं शमलं, पाप्मा पापम्' इति भट्टभास्करः.

तत् तया[1] । करणे टा । अस्य यजमानस्य होता ॥

॥ अप पाप्मानं हते य एवं वेद ॥

तिपस्त । स वेदितापहन्ति ॥

॥ सहस्रमनूच्यं स्वर्गकामस्य ॥

स्वर्गेप्सोर्यजमानस्य सहस्रं तु वदेदृचः ॥

कस्मादेवं,

॥ सहस्राश्वीने वा इतः स्वर्गो लोकः ॥

एकस्मिन्नह्नि यावन्ति योजनान्यश्व एति वै ।
सोऽश्वैकाहगमो देशो यत्राश्वात् खो विधीयते ॥

*' अश्वस्यैकाहगमः ' इति ॥

आश्वीनानि सहस्राणि भूमेरा स्वर्गलोकतः ॥

॥ स्वर्गस्य लोकस्य समष्ट्यै सम्पत्त्यै सङ्गत्यै ॥

अष्टिः प्राप्तिर्जयः सम्पत् संश्लेषः सङ्गतिर्भवेत्[†] ।
स्यात् सहस्रस्य वचनं त्रयस्यास्य प्रसिद्धये ॥

॥ अपरिमितमनूच्यम् ॥

सहस्रादूर्ध्वमप्येतद् ब्रूयान्निष्परिमाणकम् ॥

१. ' तदा ' क. पाठः.

* पा० सू० ५-२-१९. † 'सम्पत्तिः गमनं, सङ्गतिः संयोगः, सामान्य-विशेषभावेन सामानाधिकरण्यम्' इति गोविन्दस्वामी. 'सम्पत्तिः तत्र समृद्धिः, सङ्गतिः तेन नित्यसंयोगः कदाचिदप्यप्रच्युतिः' इति भट्टभास्करः. 'सम्पत्त्यै स्वापेक्षित-संयोगयवस्तुसंपादनाय, सङ्गत्यै महतामिन्द्रादीनां प्रीतिपूर्वकसम्बन्धाय' इति सायणः.

कुतः,

॥ अपरिमितो वै प्रजापतिः ॥

अपरिच्छिन्नमाहात्म्यो भगवान् हि प्रजापतिः ॥

ततः किं,

॥ प्रजापतेर्वा एतदुक्थं यत् प्रातरनुवाकः ॥

*उक्थं स्तोत्रम् । वचेः कर्मणि थकन् । यत् यः ॥

॥ तस्मिन् सर्वे कामा अवरुध्यन्ते ॥

शताधिकसहस्रान्तकामावाप्तिर्भवेदिह ।
अमितत्वेऽवरोधस्तु प्राप्तिः कर्मणि लट् श्नं यक् ॥
शताद्योऽमितान्ताः षट् कल्पा ह्यत्र प्रवर्णिताः ॥

सूच्यते हि—†'प्रातरनुवाकः शतमभृत्यपरिमितः' इति। अपरिमितान्ता इति ह्यर्थः ॥

स्तौति—

॥* स यदपरिमितमन्वाह सर्वेषां कामानामवरुद्ध्यै ॥

तत् स्यादिति शेषः ॥

॥ सर्वान् कामानवरुन्धे य एवं वेद ॥

स वेदिता सर्वकामान् षट्कल्पोक्तान् समश्नुते ॥

निगमयति—

॥ तस्मादपरिमितमेवानूच्यम् ॥

---

* 'उक्थं शस्त्रम् । प्रजापतेरुक्थत्वं प्रातरनुवाकस्य प्रथमायाः प्राजापत्यत्वात् । प्राजापत्यत्वं च 'स एतामृचमपश्यद्' इत्यादिलिङ्गात् । ननु आग्नेय्येषा कथम् ऋषिः । किमिदमुच्यते प्राजापत्यत्वादिति । लिङ्गादेव प्राजापत्यत्वम् । एवं तर्हि कस्यापार्थत्वेऽपि शक्यते लिङ्गं वक्तुम् । किं तदिति चेत् 'स बर्हिर्धन्योद्वृद्धः पिपासया वित्त एतदपो-नप्त्रीयम्' इति । सत्यम्, अस्तीदं लिङ्गम् । दुर्बलं तु तत्, कथं, सूक्तविषयत्वात् तस्य, अस्य त ऋग्विषयत्वादेतदेव प्रबलम् अत एषा प्राजापत्या' इति गोविन्दस्वामी. † आ० श्रौ० सू० ४-१५-३.

आग्नेयोपस्याश्विनाख्यान् क्रतूंस्त्रीन् स्तौत्यथो पृथक्—

॥ सप्ताग्नेयानि छन्दांस्यन्वाह ॥

गायत्र्यनुष्टुप् त्रिष्टुप् च बृहती चोष्णिगेव च ।
जगती पङ्क्तिरित्यग्नेः सप्त च्छन्दांसि वै क्रमात् ॥
उपस्याश्विनयोरेवं छन्दसां क्रम इष्यताम् ॥

ततः किं,

॥ सप्त वै देवलोकाः ॥

*भूराद्याः सत्यपर्यन्ता लोकाः सप्त सुराश्रयाः ॥

ततोऽपि किं,

॥ सर्वेषु देवलोकेषु राध्नोति य एवं वेद ॥

स वेदिता देवजुष्टसप्तलोकर्द्धिमान् भवेत् ।
फलं ज्ञातृगतं कर्तुर्दण्डापूपिकया भवेत्[1] ॥
गृहे दण्डमपूपांश्च निधाय पुनरागतः ।
दण्डमिच्छन् स बालैर्हि भक्षितस्त्विति शुश्रुवान् ॥
अपूपाः खलु दण्डेन व्याख्याता इति मन्यते ।
सा दण्डापूपिका नाम मतिः सर्वैः खलूच्यते ॥

॥ सप्तोपस्यानि छन्दांस्यन्वाह ॥

ततः किं,

॥ सप्त वै ग्राम्याः पशवः ॥

ग्राम्याः ग्रामे भवाः । †'ग्रामाद् यखञौ' ॥

१. 'भवेत् । सप्तोपस्यानि' ष. ङ. पाठः.

* 'भूरादयः सत्यपर्यन्ताः । भुवोऽपि हि कर्मप्रदेशादन्येऽनुभवलोका एव । ते च धर्माधर्मभूमिकाः' इति भट्टभास्करः. † पा० सू० ४-२-९४.

*ग्राम्याश्च पशवः सप्त गौरश्वोऽजोऽविकस्तथा ॥
पुरुषो गर्दभोष्ट्रौ च श्रुतिस्मृतिपुराणगाः ॥

ततोऽपि किम्,

॥ अव ग्राम्यान् पशून् रुन्धे य एवं वेद ॥

अवरुन्धे वेदिता सः ॥

॥ सप्ताश्विनानि छन्दांस्यन्वाह ॥

ततः किं,

॥ †सप्तधा वै वागवदत् ॥

‡स्थानत्रये हि मन्द्रादौ सप्त सप्त यमा इति ।
§मातरा विविशुः सप्त वाणीरित्यध्यगीष्महि ॥
मन्द्रमध्यमोत्तमं तु तिस्रो वाच इति श्रुतम् ।
शौनकेन स्वयं चोक्तं प्रातिशाख्ये महात्मना—

¶'त्रीणि मन्द्रं मध्यममुत्तमं च स्थानान्याहुः सप्त यमानि वाचः ।'

इति । सप्त यमा अवस्थाः येषु तानि ।

§किञ्च षड्जादयः सप्त स्वराः सामस्वरास्तथा ॥

* "तथाच बोधायनः—'सप्त ग्राम्याः पशवोऽजोऽश्वो गौर्महिषी वराहो हस्त्यश्वतरी च' इति । आपस्तम्बमतानुसारिणस्त्वेवं वर्णयन्ति—'अजाविकं गवाश्वं च गर्दभोष्ट्रं नरस्तथा । सप्त वै ग्राम्यपशवो गीयन्ते कविसत्तमैः ॥ इति'' इति सायणः. 'गौरजः पुरुषो मेषो ह्यश्वाश्वतरगर्दभाः, एतान् ग्राम्यान् पशूनाहुः' इति मार्कं॰ अध्या॰ ४५. श्लो॰ २९. † 'सप्तविध-विभक्तिसंबन्धेन षड्जादिसप्तस्वरसंबन्धेन वा' इति भट्टभास्करः. ‡ 'मन्द्रादिषु त्रिषु स्थानेषु सप्त सप्त यमाः क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्याः' इति तै॰ प्रा॰ अध्या॰ २३. सू॰ १३, (Madras University Publication). § ऋक्सं॰ ३-१-१-१. ¶ १३-४२, $ 'सप्तस्वरा ये यमास्ते' इति ऋक्प्रा॰ १३-४४. (Benares Edition).

तदाह—

॥ तावद् वै वागवदत् ॥

यो लोके तु वदेत् किञ्चित् तस्य तावद्धि वाङ्मयम् ॥

एतच्च,

॥ सर्वस्यै वाचः सर्वस्य ब्रह्मणः परिगृहीत्यै ॥

सप्तत्वं स्यादिति शेषः । ब्रह्मणो वेदस्य वाचः अन्यस्याश्च तदुपयोगिन्याः । परिग्रहः स्वीकारः ॥

॥ तिस्रो देवता अन्वाह ॥

अग्निमुषसमश्विनौ च ॥

॥ त्रयो वा इमे त्रिवृतो लोकाः[*] ॥

द्युभूखाख्यास्त्रयो[1] लोका अन्योन्यस्योपकारिणः ॥

॥ एषामेव लोकानामभिजित्यै ॥

अभिजितिः प्राप्तिस्तदर्थम् । तत् त्रित्वं स्यात् ॥

सप्तमः खण्डः ।

---

अथ प्रातरनुवाक्ये प्रकारान् प्रब्रवीति ह—

॥ तदाहुः ॥

---

१. 'द्युभूखाः स्युस्त्रयो' ख. ङ. पाठः.

---

* 'लोकानां त्रिवृत्त्वं पृथिव्यप्तेजसां त्रिवृत्करणात् । तथाहि श्रुतिः—' तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (छा० ६-३.) इति गोविन्दस्वामी. 'इमे हि लोकाः त्रयो भवन्ति त्रिवृतश्च भवन्ति प्रत्येकं पार्थिवाप्यतैजसस्वभावत्वादित्रिगुणाश्च भवन्ति' इति भट्टभास्करः.

चोद्यस्वरूपमाह—

॥ कथमनूच्यः प्रातरनुवाक इति ॥

परिहरति—

॥ यथाच्छन्दसमनूच्यः प्रातरनुवाकः ॥

*'अनसन्तान्नपुंसकाच्छन्दसि' इति टच् ।

†एकं छन्दः कृत्स्नमुक्त्वर्गन्तेऽन्यस्येदितीर्यते ॥

कस्मात्,

॥ प्रजापतेर्वा एतान्यङ्गानि यच्छन्दांसि‡ ॥

यत् यानि ॥

ततः किम्,

॥ एष उ एव प्रजापतिर्यो यजते ॥

उ खलु । §'न स राजा व्यथते यस्मिन्निन्द्रस्तीव्रं सोमं पिबति' इति लिङ्गात् । प्रजापतिवद् यज्ञकारिणोऽपि जगद्रक्षाकरत्वात्[1] ॥

---

1. 'जगद्रक्षकत्वात्' ग. ङ. पाठः.

---

* पा० सू० ५-४-१०३. † 'यथाच्छन्दसमिति वीप्सायां यथाशब्दः । यथाच्छन्दो गायत्र्यादि जगत्यन्तं सर्वमेव तदेकमेकं क्रतौ क्रतौ परिसमाप्योत्तरमुत्तरमनुवक्तव्यम् इति यथाच्छन्दसम् । शरत्प्रभृतिः छन्दःशब्दो द्रष्टव्यः । समाप्तेयानि छन्दांसीत्यादिना हि क्रतौ क्रतौ सर्वच्छन्दःसम्बन्धमात्रं प्रतीयते न पुनरयं विशेषः । ततो यथाच्छन्दसवचनम् । अथवा पदार्थानतिवृत्तौ यथाशब्दः । एकैकस्मिन् क्रतौ प्रथमच्छन्दः परिसमाप्य ततो द्वितीयं ततस्तृतीयम् इत्यनेन क्रमेणानुवक्तव्यम् । एवं हि प्रजापत्यङ्गानि छन्दांसि यथास्थाननिवेशितानि भवन्ति' इति भट्टभास्करः ‡ 'तस्योष्णिग् लोमानि त्वग् गायत्री त्रिष्टुम्मांसमनुष्टुप् स्नावान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहती स छन्दोभिश्छन्नो यच्छन्दोभिश्छन्नस्तस्माच्छन्दांसीत्याचक्षते' इति ऐ० आ० २-१-६. § ऋक्सं० ४-२-८-४.

॥ तद् यजमानाय हितम् ॥

तद् अनुवचनम् । हितम् आयत्यां प्रीतिकरम् ॥

पक्षान्तरमाह—

॥ पच्छोऽनुच्यः प्रातरनुवाकः ॥

कुतः,

॥ चतुष्पादा वै पशवः ॥

अन्त्यालोपश्छान्दसः ॥

॥ पशूनामवरुद्ध्यै ॥

तत् पच्छस्त्वं स्यात् ॥

पक्षान्तरमाह—

॥ अर्धर्चश एवानूच्यः ॥

*एव पुनः । प्रातरनुवाकः ॥

॥ यथैवैनमेतदन्वाह ॥

एनं वेदम् । एतदेतर्हि अध्ययनकाले । अन्वाह अधीयते अधीयानः ॥

॥ प्रतिष्ठाया एव ॥

तदर्धर्चत्वं स्यात् ॥

॥ द्विप्रतिष्ठो वै पुरुषः ॥

†घञर्थे कविधानं स्थास्नापेति करणेऽत्र के ।
पादौ प्रतिष्ठौ द्वौ यस्य स द्विपाद् द्विप्रतिष्ठकः‡ ॥

---

* 'एवकारः पूर्वपक्षव्यावृत्त्यर्थः' इति सायणः. † पा॰ सू॰ वा॰ ३-३-५८. ‡ 'पुरुषस्य द्विप्रतिष्ठत्वमैहिकामुष्मिकसम्पदा' इति गोविन्दस्वामी.

ततः किं,

॥ चतुष्पादाः पशवः । यजमानमेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति ॥

तदर्धर्चत्वं कर्तुं ॥

॥ तस्मादर्धर्चश एवानूच्यः ।
तदाहुः ॥

चोद्यस्वरूपमाह—

॥ यद् व्यूह्ळः प्रातरनुवाकः कथमव्यूह्ळो भवतीति ॥

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् च जगतीत्येवं स्वक्रमश्चतुरुत्तरः* ॥
छन्दसामत्र तु पुनर्व्यूह्ळो व्युत्क्रमतः खलु ।
†गायत्र्यनुष्टुप् त्रिष्टुप् च बृहती चोष्णिगेव च ॥
जगती पङ्क्तिरित्यत्र भवेदव्यूह्ळता कथम् ॥

परिहरति—

॥ यदेवास्य बृहती मध्यान्नैतीति ब्रूयात् तेनेति ॥

पुरस्ताच्च परस्ताच्च व्युत्क्रमे त्रिषु सत्यपि ।
यन्मध्याद् बृहती नैति तेनाव्यूह्ळत्वमिष्यताम् ॥
'मध्यं छन्दसां बृहती'त्यारण्यकमधीमहे‡ ॥

अथ प्रातरनुवाकज्ञानं सम्यक् प्रशंसति—

---

* तथाच सर्वानुक्रमणी— 'अथ छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टिधृत्यतिधृतयश्चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि' इति (परि० ३). † क्रमश्चायम् आ० श्रौते (४-१३-७, १४-२, १५-२) सूत्रेषु प्रतिपादितः. ‡ ऐ० आ० २-३-५.

॥ आहुतिभागा वा अन्या देवता अन्याः स्तोमभागा-
श्छन्दोभागाः ॥

भजेः कर्मणि घञ् ।

उक्ता आहुतिभागास्ता यासां सेव्याहुतिर्भवेत् ।
छन्दः शस्त्रं स्तुतिः स्तोमो बहुव्रीही तु पूर्ववत् ॥

विविच्याह—

॥ ता या अमात्राहुतयो हूयन्ते ताभिराहुतिभागाः प्रीणाति ॥

ताः प्रसिद्धा देवताः ॥

॥ अथ यत् स्तुवन्ति च शंसन्ति च तेन
स्तोमभागाश्छन्दोभागाः ॥

देवताः प्रीणातीत्येव ॥

अत्र तु,

॥ उभय्यो हास्यैता देवताः प्रीता अभीष्टा भवन्ति
य एवं वेद ॥

अस्य अनेन ॥

अथात्राहुतिभागास्तु द्वैविध्योक्त्या प्रशंसति—

॥ त्रयस्त्रिंशद् वै देवाः सोमपास्त्रयस्त्रिंशदसोमपाः ॥

देवा इत्येव ॥

सोमपान् विविच्याह—

॥ अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च ॥

*प्रागवोचाम वस्वाद्यान् नामतो भारतोक्तितः ॥

॥ एते देवाः सोमपाः ॥

वसुरुद्रादित्यानां सवनदेवतात्वादिन्द्रस्य पाहेन्द्रग्रहादियोगात् प्रजापतेराश्वमेधिकमहिमग्रहादियोगाच्च सोमपत्वम् ॥

॥ एकादश प्रयाजा एकादशानुयाजा एकादशोपयाजा एतेऽसोमपाः पशुभाजनाः ॥

भाजनं स्थानम् ॥

†समिदाद्याः प्रयाजस्था बर्हिरादय एव तु ।
अनुयाजगता देवा उपयाजगतास्तु वै ॥
समुद्रं गच्छादिमन्त्रैरेकादशभिरेव तु ।
अनूयाजवषट्कारतुल्यकालहुता[1] हि ये ॥
गुदकाण्डहविष्काश्च त्रयस्त्रिंशदिमे खलु ।
पशुस्थानाः सोमपानरहिता इति श्रूयताम् ॥

---

१. 'तुल्यकालगता' ग. क. पाठः.

---

* page 68. † समिधस्तनूनपाद् इळा बर्हिर्द्वार उषासानक्ता दैव्याहोतारा तिस्रो देव्यस्त्वष्टा वनस्पतिः स्वाहाकृतयः इति प्रयाजदेवताः । बर्हिर्द्वार उषासानक्ता जोष्ट्री ऊर्जाहुती दैव्याहोतारा तिस्रोदेव्यो नराशंसो वनस्पतिर्बर्हिः स्विष्टकृदग्निः इत्यनुयाजदेवताः । समुद्रोऽन्तरिक्षं सविता अहोरात्रे मित्रावरुणौ सोमो यज्ञः छन्दांसि द्यावापृथिवी नभोऽग्निर्वैश्वानरः इत्युपयाजदेवताः

**॥ सोमेन सोमपान् प्रीणाति पशुनासोमपान् ॥**

प्रीणातीत्येव ॥

**॥ उभय्यो हास्यैता देवताः प्रीता अभीष्टा भवन्ति य एवं वेद ॥**

अस्य अनेन ॥

*उभादुदात्तो नित्यम्* इत्ययच् ङीप् च †टिड्ढाणञिति यण् जसि ॥

‡'आपो रेवतीः क्षयथा हि वस्व उपप्रयन्त इति सूक्ते' इत्यादि §प्रतिप्रियतममिति पाङ्क्तम्' इति सूत्रपठितस्यर्क्समाम्नायस्योक्तव्रताद्यपरिमितान्तपक्षषट्के आश्रितकल्पस्यान्ते,

**॥ ¶अभूदुषा रुशत्पशुरित्युत्तमया परिदधाति । तदाहुः ॥**

चोद्यस्वरूपमाह—

**॥ यत् त्रीन् क्रतूनन्वाहाग्नेयमुषस्यमाश्विनं कथमस्यैकयर्चा परिदधतः सर्वे त्रयः क्रतवः परिहिता भवन्तीति ॥**

यत् यदि । त्रीन् क्रतून्‖ 'इत्याग्नेयः क्रतुः', 'अथोषस्यः', 'अथाश्विनः' इति सूत्रितान्** । अस्य परिदधतः अनेन परिदधता । अग्न्युषोऽश्विदेवत्ययर्चा भाव्यम् । एषा त्वाश्विनीति भावः ॥

---

* पा० सू० ५-२-४४. † पा० सू० ४-१-१५. ‡ आ० श्रौ० सू० ४-१३-७. § आ० श्रौ० सू० ४-१५-२. ¶ ऋक्सं० ३-४-१६-४. ‖ 'क्रतुरिति कर्मनाम' इति गोविन्दस्वामी. 'क्रत्वङ्गभूतस्य प्रातरनुवाकस्यावयवे उपचारेण क्रतुशब्दो वर्तते । यद्वा क्रतुच्छन्दोभिः सप्तभिः साध्यत्वादाग्नेयादीनां प्रातरनुवाकावयवानां क्रतुत्वं वेदितव्यम्' इति भट्टभास्करः. 'क्रतुशब्दः सोमयागसम्बन्धिनः प्रातरनुवाकभागान् उपलक्षयति' इति सायणः. ** आ० श्रौ० सू० ४-१३-८, ४-१४-१, ४-१५-१.

परिहरति—

॥ अभूदुषा रुशत्पशुरित्युषसो रूपम् ॥

रूपमनुरूपं योग्यम् ॥

॥ आग्निरधाय्यृत्विय इत्यग्नेः ॥

रूपमित्येव ॥

॥ अयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतं हवमित्यश्विनोः ॥

रूपमित्येव ॥

॥ एवमुहास्यैकयर्चा परिदधतः सर्वे त्रयः क्रतवः परिहिता भवन्ति भवन्ति ॥

एवमुहं एवञ्च सति । द्विरुक्तिरुक्तार्था* ॥

अष्टमः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ सुखप्रदायां सप्तमोऽध्यायः[1] ॥

---

1. 'इति ब्राह्मणव्याख्यायां सप्तमोऽध्यायः' ख. ङ. पाठः.

---

* page 44.

# अथाष्टमोऽध्यायः ।

अपोनप्त्रीयां विधातुमितिहासं ब्रवीत्यथ—

॥ ऋषयो वै सरस्वत्यां सत्रमासत ॥

वै पुरा । सरस्वत्यां नद्याम् । सामीपिकमधिकरणं, तस्यास्तीरे । *सत्रं कर्तुमासत आसनं कृतवन्तः ॥

॥ ते कवषमैलूषं सोमादनयन् दास्याःपुत्रः कितवोऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति ॥

इलूषपुत्रं कवषमागतं ते महर्षयः ।
सोमादद्रावयन् सत्राद् बहिर्गच्छेति वादिनः ॥
दास्याःपुत्र इत्यलुक् तु †षष्ठ्या आक्रोश इत्यतः ।
द्यूतकृत् कितवः किं ते पणं स्यादिति वै वदन् ॥
अब्राह्मणस्तु संध्यादिसदाचारं विवर्जयन् ।
अदीक्षिष्ट दीक्षितः स्याद् ‡विभाषा कथमीति लुङ् ॥

कथमनयन्नित्याह—

॥ तं बहिर्धन्वोदवहन् ॥

सत्रदेशाद् बहिर्भूते देशे धन्वनि निर्जले ।
अद्रावयन्नुदवहन् धन्व ङेर्लुङ्नलोपवत् ॥

---

* 'सत्राख्यं कर्मविशेषम् । आसत उपासत । अस्मिन् विषये आसिः सकर्मको द्रष्टव्यः । यद्वा सत्रासनं नाम कर्मविशेषः यत्र सम्भूय यजमाना आसते । तत्र कंसवधमाचष्टे कंसं घातयतीत्यादिवद् सत्रासनं कर्माकुर्वत सत्रमासत इति कृदुत्-प्रकृतिप्रत्यापत्तिः इत्यादिक्रमबाधि छान्दसं प्रवर्तते' इति भट्टभास्करः. † पा० सू० ६-३-२१. ‡ पा० सू० २-४-१४३.

केन भावेन,

॥ अत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति ॥

अत्र धन्वनि । हन्तु । लोट् । *'एरुः' । मा पात् । †'माङि लुङ्' ॥

॥ स बहिर्धन्वोदूह्ळः पिपासया वित्त ‡एतदपोनप्त्रीयमपश्यत्
§प्र देवत्रा ब्रह्मणे गातुरेत्विति ॥

बहिर्भूते धन्वनि । उदूढः द्रावितः पिपासया तृषा ¶वित्तोऽभिभूतः । प्रदेवत्रेति पञ्चदशर्चं सूक्तम् । अपान्नपात् वरुणः तद्देवत्यम् । ‖'अपोनप्त्रपांनप्तृभ्यां घः' । 'छ च' ॥

॥ तेनापां प्रियं धामोपागच्छत् ॥

तेन सूक्तदर्शनेन धाम स्थानं रसम् । $'यो वः शिवतमो रसः' इति प्रसिद्धम् । उपगतिर्लाभः ॥

किञ्च,

॥ तमापोऽनूदायन् ॥

व्याचष्टे—

॥ तं सरस्वती समन्तं पर्यधावत् ॥

परि सर्वतः ॥

---

* पा० सू० ३-४-८६. † पा० सू० ३-३-१७५. ‡ 'प्र देवत्रा पञ्चोना कवष ऐलूष आपमपोनप्त्रीयं वा' इति सर्वानुक्रमणी म० १० सू० ३०. § ऋक्सं० ७-७-२४-१. ¶ 'वित्तो लब्धः' इति गोविन्दस्वाम्यादयः. ‖ पा० सू० ४-२-२७, २८. $ ऋक्सं० ७-६-५-२.

॥ तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते यदेनं सरस्वती समन्तं परिससार ॥

एनं कवषम् । समन्तं समन्तात् । एतर्हि अस्मिन्नपि काले । यत् यत्र देशे ।

प्रदक्षिणीकृतो नद्या द्वीपस्थः कवषो मुनिः ।
परितः सरणान्नद्याः स देशः परिसारकः ॥

॥ ते वा ऋषयोऽब्रुवन् । विदुर्वा इमं देवा उपेमं ह्वयामहा इति ॥

*'निसमुपविभ्यो ह्वः' इति तङ् । इमं कवषम् । वै नूनम् ॥

॥ तथेति तमुपाह्वयन्त ॥

उपेत्याङर्थे । आह्वानमकुर्वन ॥

॥ तमुपहूयैतदपोनप्त्रीयमकुर्वत †प्र देवत्रा ब्रह्मणे गातुरेत्विति ॥

‡कृताध्ययनार्थः ॥

तमाहूय तच्च सूक्तं तस्मादेवाध्यगीषत ॥

तेऽपि,

॥ तेनापां प्रियं धामोपागच्छन् ॥

अपां रसमलभन्त[1] ॥

---

1. 'अपां सारमलभन्त' ग. पाठः.

---

* पा० सू० १-३-३०. † ऋक्सं० ७ ७-२४-१. ‡ 'अकुर्वत समुपकल्पनाः' इति सायणः.

॥ उप देवानाम् ॥

प्रियं धामोपागच्छन्नित्येव ॥

॥ उपास्यां प्रियं धाम गच्छत्युप देवानां जयति परमं लोकं य एवं वेद ॥

स वेदितोपगच्छति । परमः सर्वाधिपतः ॥

॥ यश्चैवं विद्वानेतदपोनप्त्रीयं कुरुते ॥

स होतापि ॥

किञ्च,

॥ तत् *सन्ततमनुब्रूयात् ॥

एवञ्च,

॥ संततवर्षीह् प्रजाभ्यः पर्जन्यो भवति यत्रैवं विद्वानेतत् संततमन्वाह ॥

†संततवर्षी कालवर्षी । यत्र यदि ॥

॥ यदवग्राहमनुब्रूयाज्जीमूतवर्षीह् प्रजाभ्यः पर्जन्यः स्यात् ॥

यद् यदि अवग्राहम् । स्यवर्थे णमुल् । अवगृह्य विच्छिद्य । अन्तरिक्षैकदेशस्थो जीमूतोऽल्पजलो घनः[1]‡ ॥

---

1. 'घनः । तस्मात्' घ. पाठः.

---

* 'सन्ततं तमोंकारं त्रिमात्रं मकारान्तं कुर्वीत तस्या अर्धं चैवाऽवस्येत्' इति भट्टभास्करः. † 'अविच्छेदवर्षित्वं सन्ततवर्षित्वम्' इति गोविन्दस्वामी. 'सन्ततवर्षी नैरन्तर्येण वृष्टिमान् । यावती वृष्टिरपेक्षिता सा सम्पूर्णा भवतीत्यर्थः' इति सायणः. ‡ 'जीमूतवर्षित्वं नाम वृष्टिकाल एव वृष्टिः' इति गोविन्दस्वामी. 'जीमूतः पर्वतः जीमूतौ मेघपर्वतावित्युक्तत्वात् । अनुपयुक्ते पर्वत एव वर्षति नतूपयुक्तेषु सस्येष्वित्यर्थः' इति सायणः.

निगमयति—

॥ तस्मात् तत् संततमेवानूच्यम् ॥

संततरूपमाह—

॥ तस्य त्रिः प्रथमां सन्ततमन्वाह तेनैव तत् सर्वं संततमनूक्तं भवति ॥

सूत्र्यते हि—*'अध्यर्धकारं प्रथमामृगावानमुत्तराः' इति ॥

प्रथमः खण्डः ।

---

अथास्य सूक्तस्यानूक्तिप्रकारं प्रब्रवीति ह—

॥ ता एता नवानन्तरायमन्वाह[†] ॥

अन्तरायो व्यवधानम् । आदितो नव ॥

॥ [‡]हिनोता नो अध्वरं देवयज्येति दशमीम् ॥

अन्वाहेत्येव दशमी कृतैकादशी सती ॥

॥ [§]आवर्वृततीरध नु द्विधारा इत्यावृत्तास्वेकधनासु ॥

अन्वाहेत्येव । आवृत्तासु यज्ञवाटं प्रति गन्तुमुपक्रान्तासु । कासु । एकधनासु ।

[¶]ता आपो वसतीवर्यो यासां पूर्वेद्युराहृतिः ।
प्रातर्यासां ग्रहस्तास्तु प्रोक्ता एकधना इति ॥

---

* आ० श्रौ० सू० ५-१-५. † 'परिहितेऽप इष्य होतरित्युक्तोऽनभिहिङ्कृत्य पोनःश्लीया अन्वाहेवच्छनैस्तरां परिधानीयायाः', 'प्र देवत्रा ब्रह्मणे गातुरेत्विति नव हिनोता नो अध्वरं देवयज्येति दशमीम्' इति आ० श्रौ० सू० ५-१-१, ८. ‡ ऋक्सं० ७-७-२६-१. § ऋक्सं० ७-७-२५-५. ¶ 'अपरं चतुर्गृहीतं गृहीत्वा संप्रेष्यत्यप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन आद्रवत नेष्टः पत्नीमुदानयाग्नीत्होतृचमसेन वसतीवरीभिश्च चात्वालं प्रत्यास्वेति' । 'यत्र होतुः प्रातरनुवाकमनुब्रुवत उपश्रृणुयात्तदपोऽध्वर्युर्वहन्तीनां गृह्णाति' । 'सोमस्य त्वा मूजवतो रसं गृह्णामीत्येकधनाः' (१२-५-२, ५, ११) इति प्रैषादिकमापस्तम्बेनात्र प्रपञ्चितम्.

॥ *प्रति यदापो अदृश्रमायतीरिति प्रतिदृश्यमानासु ॥

अन्वाह ॥

॥ †आ धेनवः पयसा तूर्ण्यर्था इत्युपायतीषु ॥

अन्वाह समीपमागच्छन्तीषु ॥

॥ ‡समन्या यन्त्युप यन्त्यन्या इति समायतीषु ॥

§अन्वाह । एकधनासु वसतीवरीभिः संगच्छमानासु ॥

अत्र[1] कथमाह—

॥ आपो वा अस्पर्धन्त ॥

सहर्षमकुर्वन्[2] ॥

कथं,

॥ वयं पूर्वं यज्ञं वक्ष्यामो वयमिति ॥

कास्ता इत्याह—

॥ याश्चेमाः पूर्वेद्युर्वसतीवर्यो गृह्यन्ते याश्च प्रातरेकधनाः ॥

पूर्वेद्युरग्नीषोमीयपशोरन्ते । सूत्र्यते हि—¶'संस्थिते वसतीवरीः परिहरन्ति' इति ॥

वसत्या रात्रिनाम्नस्तु मतुवर्थे वनिष्यथ ।
$वनो र चेति ङीब्रेफौ निरुक्ता वसतीवरीः ॥

---

१. 'अथ', २. 'सहर्षमकुर्वन् । वयं' घ. पाठः.

---

* ऋक्सं० ७-७-२६-३. † ऋक्सं० ४-२-२०-१. ‡ ऋक्सं० २-७-२२-३. § अनुवचनकालश्चापस्तम्बेन दर्शितः—'होतृचमसेन वसतीवरीभ्यो निषिच्योपरि चात्वाले होतृचमसं मैत्रावरुणचमसं च संस्पर्श्य वसतीवरीर्व्यानयति । समन्या यन्तीत्यभिज्ञाय होतृचमसान्मैत्रावरुणचमस आनयति । मैत्रावरुणचमसाद्धोतृचमसे । एतद्वा विपरीतम्' इति १२-६-१, २. ¶ आ० श्रौ० सू० ४-१२-८. $ पा० सू० ४-१-७.

श्रातः सौत्येऽहनीन्द्रस्य त्वेकस्य धनतां गताः ।
सुप्रियत्वं च सम्प्राप्ता आप एकधना मताः ॥
तास्वप्सु स्पर्धमानासु निर्वेक्ष्यामो वयं त्विति ॥

॥ ता भृगुरपश्यदापो वै स्पर्धन्त इति ॥

ज्ञानदृष्ट्या भृगुः स्पर्धामपामेतां ददर्श ह ॥

ततः सः,

॥ ता एतयर्चा समज्ञपयत् समन्या यन्त्युप यन्त्यन्या इति ॥

ता उभयीः सम्प्रतिपन्नाश्चक्रे ।

[*]ङौ णिजातां पुकि ह्रस्वो मितां[†] लक् तिवितश्च[‡] वै ॥

॥ ताः समजानत ॥

[§]'सम्प्रतिभ्यामनाध्याने' इति तङ् ।

उभय्य आपस्ताश्चक्रुः संवादं भृगुचोदिताः ॥

॥ संजानाना हास्यापो यज्ञं वहन्ति य एवं वेद ॥

अस्य वेदितुः ।

फलं ज्ञातृगतं कर्तुर्दण्डापूपिकया भवेत् ॥

॥ [¶]आपो न देवीरुपयन्ति होत्रियमिति होतृचमसे
समवनीयमानास्वन्वाह वसतीवरीष्वेकधनासु च[‖] ॥

---

[*] पा॰ सू॰ ७-३-३६. [†] पा॰ सू॰ ६-४-९२. [‡] पा॰ सू॰ ३-४-१००. [§] पा॰ सू॰ १-३-४६. [¶] ऋक्सं॰ १-६-४-२. [‖] 'तीर्थदेशे होतृचमसेऽपां पूर्णमाय आपो न देवीरुपयन्ति होत्रियमिति समाप्य प्रणवेनोपरमेत्' इति आ॰ श्रौ॰ सू॰ ५-१-१३.

समवनयः प्रक्षेपः ॥

अथ,

॥ अत्रेरपोऽध्वर्या३ उ इति होताध्वर्युं पृच्छति* ॥

हेऽध्वर्यो किमपोऽत्रेस्त्वं लब्धवान् विन्दतेरवेः ।
†सिपि धातो रुर्वा ।
प्लुतस्यैचोऽप्रगृह्येति‡ विवेकः प्रश्नवर्तिनः ॥

व्याचष्टे—

॥ §आपो वै यज्ञोऽविदो यज्ञा३म् इत्येव तदाह ॥

अविदः लब्धवान् असि । यज्ञमित्यस्य प्लुतः ॥

इति होत्रा पृष्टः,

॥ उतेमनन्नमुरित्यध्वर्युः प्रत्याह¶ ॥

उत अपि । **ई सत्यम् । अनन्नमुः नमेर्यङ्लुक् । ‖'ङुगतोऽनुनासिकान्तस्य' लङ् । ***'झेर्जुस्' ॥

---

* 'अध्वर्योऽवेरपा इति होताध्वर्युं पृच्छति' इति आप० श्रौ० सू० १२-६-४. 'आगतमध्वर्युमवेरपोऽध्वर्या३ उ इति पृच्छति' इति आ० श्रौ० सू० ५-१-१४.
† पा० सू० ८-२-७४. विदेर्दान्तत्वादिदमुपलक्षणं 'दश्च' इत्यनन्तरसूत्रस्य । तथाच भट्टभास्कर आह—'दश्चेति रुत्वम्' इति.
‡ पा० सू० ८-२-१०७.
§ अभिषवद्वारा यज्ञसाधनत्वादपां यज्ञत्वम्.
¶ 'उतेमनन्नमुरिति प्रत्युक्तो निगदं ब्रुवन् प्रतिनिष्क्रामेत्' इति आ० श्रौ० सू० ५-१-१४. 'उतेमनन्नमुरिति प्रत्युक्त्वा—' इति आप० श्रौ० सू० १२-६-५.
** 'ईम् इति इदमर्थे उतशब्दोऽवधारणे इमाः सत्यापः' इति भट्टभास्करः. 'ईम् इत्यनर्थकः मितमिताक्षरेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति (१-९) इति यास्कवचनाद्' इति गोविन्दस्वामी. 'ईम् इति वाक्यपूरणार्थो निपातः इमा इत्यस्मिन्नर्थे वर्तते' इति सायणः.
‖ पा० सू० ७-४-८५.
*** पा० सू० ३-४-१०८.

व्याचष्टे—

॥ उतेमाः पश्येत्येव तदाह* ॥

न केवलं लब्धाः। उत किन्तु, आगताश्चेमाः पश्य ॥

अथ होता,

॥ तास्वध्वर्यो इन्द्राय सोमं सोता मधुमन्तं वृष्टिवनिं तीव्रान्तं बहुरमध्यं वसुमते रुद्रवत आदित्यवत ऋभुमते विभुमते वाजवते बृहस्पतिवते विश्वदेव्यावते। यस्येन्द्रः पीत्वा वृत्राणि जङ्घनत् प्र स जन्यानि तारिषोऽमिति प्रत्युत्तिष्ठति ॥

अपां प्रत्युत्थानं कुर्याद् विश्वदेव्यावतेन्तेन। सूत्र्यते हि—† 'निगदं ब्रुवन् प्रतिनिष्क्रामेद्' इत्यादि[1]।

॥ प्रत्युत्थेया वा आपः ॥

कर्मणि ‡ 'अचो यत्'। § 'उदः स्था—' इति तत्वम्¶ ॥

॥ प्रति वै श्रेयांसमायन्तमुत्तिष्ठन्ति ॥

प्रत्युत्तिष्ठन्ति शिष्याद्याः पूज्यं गुर्वादिकं जनम् ॥

॥ तस्मात् प्रत्युत्थेयाः ॥

आपोऽत्र होत्रा ॥

---

१. 'इत्यादि। कुतः। प्रत्युत्थेया' क. पाठः.

---

* 'अध्वर्योऽवेरपा३ इत्याहोतेमनन्नमुरुतेमाः पश्येति वावैतदाह' इति तै० सं० ६-४-३. † आप० श्रौ० सू० ५-१-१४. ‡ पा० सू० ३-१-९७. § पा० सू० ८-४-६१. ¶ इदं च प्राचीनमते। नवीनमते तु 'थत्वम्' इति वक्तव्यम्.

॥ अनुपर्यावृत्याः ॥

*'ऋदुपधात्—' इति वृतेः क्यप् । पश्चाच्च सेव्याः । 'यस्येन्द्रे'त्यादिना । स्तूयते हि—†'उपातीतास्त्वन्वावर्तेत' इत्यादि ॥

॥ अनु वै श्रेयांसं पर्यावर्तन्ते ॥

गुर्वादिकं सुप्रशस्तमनुयान्ति जनाः खलु ॥

॥ तस्मादनुपर्यावृत्याः ॥

आपोऽत्र होत्रा ॥

किञ्च,

॥ अनुब्रुवतैवानु प्रपत्तव्यम् ॥

ऋचो होत्रानुवदता कर्तव्यानुस्तुतिर्भवेत्‡ ॥

॥ ईश्वरो ह यद्यप्यन्यो यजेताथ होतारं यशोऽर्तोः ॥

अथ तथापि । §होता यशः अर्तोः, तुमर्थे तोसुन्¶ । प्राप्तुम्‖ । अरमलं पर्याप्तम् । ईश्वरः समर्थः स्यात् ॥

निगमयति—

॥ तस्मादनुब्रुवतैवानुप्रपत्तव्यम् । ‡अम्बयो यन्त्यध्वभिरित्येतामनुब्रुवन्ननुप्रपद्येत जामयो अध्वरीयताम् । पृञ्चतीर्मधुना पय इति योऽमधव्यो यशोऽर्तो बुभूषेत्$ ॥

---

* पा० सू० ३-१-११०. † आ० श्रौ० सू० ५-१-१६. ‡ 'उत्तमयानुप्रपद्येत' इति आ० श्रौ० सू० ५-१-१८. 'अपो यजमानोऽनुप्रपद्यते यत्र एवैनमृच्छतीति विज्ञायते' इति आप० श्रौ० सू० १२-७-४. § होतारमिति द्वितीयान्तं सायणमते । तथाच तद्व्याख्या— 'होतारं यशः कीर्तिरर्तोरीश्वरो ह प्राप्तुं समर्थैव' इति. ¶ पा० सू० ३-४-१३. ‖ 'अर्तुं हन्तुम्' इति गोविन्दस्वामी. 'अर्तोः आर्ति प्रापयितुं नाशयितुम् इति अन्तर्णीतण्यर्थादीश्वरे तोसुन्कसुनाविति तोसुन्प्रत्ययः । यद्वा अर्तुं प्राप्तुम्' इति भट्टभास्करः. ‡ ऋक्सं० १-२-११-१. $ 'अर्तोर्बुभूषेत्' इति सायणाद्यभिमतः पाठः.

कृत्स्नपाठो मधुशब्दप्रदर्शनार्थः । यः अपथव्यः दुराचारतया मधुपर्कानर्हः । *'मधोर्ञ च' इति यत् । यश्चः अर्तः । ऋ गतौ कर्तरि तन् अर्तः सन् बुभूषेत् भवितुं प्राप्तुमिच्छेत् स होता । अम्बय इति वदन्ननुगच्छेत् ॥

॥ †अमूर्या उपसूर्ये याभिर्वा सूर्यः सहेति तेजस्कामो ब्रह्मवर्चसकामः ॥

एतामनुब्रुवन्ननुप्रपद्येतेत्येव ॥

॥ ‡अपो देवीरुपह्वये यत्र गावः पिबन्ति न इति पशुकामः ॥

पूर्ववत् ॥

॥ ता एताः सर्वा एवानुब्रुवन्ननुप्रपद्येत ॥

नित्यमिति शेषः ॥

॥ एतेषां कामानामवरुद्ध्यै ॥

तासामनुवचनं स्यात् । कामः फलम् । कमेः कर्मणि घञ् ॥

॥ एतान् कामानवरुन्धे य एवं वेद ॥

सः ॥

॥ §एमा अग्मन्रेवतीर्जीवधन्या इति साद्यमानास्वन्वाह वसतीवरीष्वेकधनासु च ॥

सादनं बर्हिषि निधानम् । 'नि बर्हिषि धत्तने'ति लिङ्गम् ॥

---

* पा० सू० ४-४-१२९. † ऋक्सं० १-२-११-२. ‡ ऋक्सं० १-२-११-१. § ऋक्सं० ७-७-२६-४.

॥ [*]आग्मन्नाप उशतीर्बर्हिरेदमिति सन्नासु स एतया परिदधाति ॥

सन्नासु निहितासु। 'न्यध्वरे असदन्' इति लिङ्गम्। स होता ॥

द्वितीयः खण्डः।

---

होतुः प्रातरनूक्त्यादौ कृतवाग्यमनस्य वै।
वाग्विसर्ग उपांश्वन्तर्यामान्त इति कथ्यते—

॥ शिरो वा एतद् यज्ञस्य यत् प्रातरनुवाकः ॥

यत् यः ॥

॥ प्राणापानौ वा उपांश्वन्तर्यामौ[†] ॥

[‡]वेदेषु प्रसिद्धौ। [§]'उपांश्वन्तर्यामौ ते प्राणापानौ पाताम्' इति हि मन्त्रः ॥

॥ वज्र एव वाक् ॥

सुदुस्सहा वज्र इव परुषा वागिति स्थितिः[¶] ॥

---

* ऋक्सं० ७-७-२६-५. 'एमा अग्मन्रेवतीर्जीवधन्या इति द्वे सन्नासूत्तरया परिधाय—' इति आ० श्रौ० सू० ५-१-१९. † 'प्रथमोपालम्भसाम्यात् प्रातरनुवाकस्य शिरस्त्वं, तदुत्तरोपालम्भसाम्यादुपांश्वन्तर्यामयोर्ग्रहणं प्राणापानत्वम्' इति भट्टभास्करः. 'उपांश्वन्तर्यामग्रहौ प्राणापानस्थानीयौ। एष ते योनिः प्राणाय त्वा एष ते योनिरपानाय त्वेति तदीयमन्त्रयोः श्रवणात्' इति सायणः. ‡ 'प्राणापानौ वा एतौ यदुपांश्वन्तर्यामौ' इति तै० सं० ६-४-६. § आ० श्रौ० सू० ६-९-३. 'प्राणापानौ त उपांश्वन्तर्यामौ पाताम्' इति च मैत्रा० सं० ४-८-७. ¶ 'होतुर्या वाक् सा वज्रस्थानीया। अत एवान्यत्र श्रूयते—यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभिप्रवर्तयति (तै० सं० ३-२-९) इति' इति सायणः.

ततश्च,

॥ नाहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत ॥

तिपस्त । न मुञ्चेत् ॥

॥ यदहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत वाचा वज्रेण यजमानस्य प्राणान् वीयात् ॥

यत् यदि । *वि नाना । इयात् । इणन्तर्णीतण्यर्थः । गमयेत् ॥ ह्रस्व †'एतेर्लिङी'त्येष छन्दस्त्वान्न प्रवर्तते ॥

॥ य एनं तत्र ब्रूयाद् वाचा वज्रेण यजमानस्य प्राणान् व्यगात् प्राण एनं हास्यतीति शश्वत् तथा स्यात् ॥

एनं विसृष्टवाचम् । तत्र वाग्विसर्गे सति यः कश्चिद् वदेत् । अगात् । ‡'इणो गा लुङि' । §'गातिस्था—' इति सिचो लुक् । अन्तर्णीतण्यर्थः । अजीगमत् । एनं यजमानम् । हास्यति त्यक्ष्यति । ¶शश्वत् निश्चितम् । तथा तेन प्रकारेण स्यात् भवेत् ॥

निगमयति—

॥ तस्मान्नाहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत । प्राणं यच्छ स्वाहा त्वा सुहव सूर्यायेत्युपांशुमनुमन्त्रयेत ॥

---

* 'वियाद् विच्छिन्द्याद्' इति गोविन्दस्वामी. † पा० सू० ७-४-२४. ‡ पा० सू० २-४-४५. § पा० सू० २-४-७७. ¶ 'शश्वत् सततमेव स्यात् सर्वकालानुवर्ति वा भवेत्' इति भट्टभास्करः. 'शश्वद् अवश्यम् । यद्यपि बहूनाम् शाश्वदिति तस्येहानन्वयाद् अवश्यमिति परिगृह्यते' इति गोविन्दस्वामी.

*"मन्त्रमुच्चारयन्नेवं मन्त्रार्थत्वेन संस्मरेत्।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्॥"

इति हि शौनकेन स्मर्यते॥

॥ तमभि प्राणेत् प्राण प्राणं मे यच्छेति॥

तमुपांशुग्रहम्। अभि प्रति। प्राणं नामान्तर्गतं वायुं घ्राणमुखाभ्यां बहिर्निर्गमयेत्†॥

॥ अपानं यच्छ स्वाहा त्वा सुहव सूर्यायेत्यन्तर्याममनुमन्त्रयेत तमभ्यपानेदपानापानं मे यच्छेति॥

‡अपानं नाम वायुं बहिर्गतं घ्राणमुखाभ्यामन्तः प्रवेशयेत्। अत्र च

सूच्यते कृत्स्नमन्त्रस्य त्वनुमन्त्रणशेषता।
सूर्यायान्तस्येह परः प्राणने चाप्यपानने॥

§'उपांशुं हूयमानम्—' इत्यादि॥

॥ व्यानाय त्वेत्युपांशुसवनं¶ ग्रावाणमभिमृश्य वाचं विसृजते॥

---

* पा० १. ख० १. श्लो० २२, (शौनकीयम्, T.S.S. No. 120). † 'तमभिप्राणेत् तमुपांशुग्रहमभिलक्ष्योच्छ्वासं कुर्यादिति सायणः. 'अभिप्राणेत् अभिप्राण्यात् तदाभिमुख्येन श्वासमाकर्षेत्' इति भट्टभास्करः. 'प्राणेत् निश्वसेत्' इति गोविन्दस्वामी. ‡ 'अपाननं तमभि श्वासस्योत्सर्जनम्' इति भट्टभास्करः. 'अपानेत् अभिजिघ्रेत्' इति गोविन्दस्वामी. 'अपानेत् निश्वासं कुर्यात्' इति सायणः. § 'उपांशुं हूयमानं प्राणं यच्छ स्वाहा त्वा सुहव सूर्याय प्राण प्राणं मे यच्छेत्यनुमन्त्र्य तं इत्यनुप्राण्यात्', 'अन्तर्याममपानं यच्छ स्वाहा त्वा सुहव सूर्यायापानापानं मे यच्छेत्यनुमन्त्र्य तम् इति चाभ्यपान्यात्' इति आ० श्रौ० सू० ५-२-१,२. ¶ उपांशुसवनो नामाभिषवसाधनानां ग्राव्णां मध्ये कश्चिद् ग्रावा.

उपांश्वाख्यो ग्रहरसो येन ग्रावणाभिषूयते ।
तं व्यानायेति[1] वै स्पृष्ट्वा होता वाचं सृजेत् पुनः* ॥

स्तौति—

॥ [2]आत्मा वा उपांशुसवनः ॥

ग्रहः† ॥

॥ आत्मन्येव तद्धोता प्राणान् प्रतिधाय वाचं विसृजते ॥

तत् तत्र । प्रतिधाय स्थापयित्वा ॥

स चं,

॥ सर्वायुः ॥

स्यात् ॥

॥ सर्वायुत्वाय ॥

सलोपश्छान्दसः । तद्वाग्विसर्जनं स्यात् ॥

॥ सर्वमायुरेति य एवं वेद ॥

सः ॥

तृतीयः खण्डः ।

---

१. 'व्यानाय त्वेति', २. 'आत्मा' ख. ङ. पाठः.

---

* 'उपांशुसवनं ग्रावाणं व्यानाय त्वेत्यभिमृश्य वाचं विसृजेत' इति आ० श्रौ० सू० ५-२-३. † 'आत्मवद् यज्ञोपकारित्वादुपांशुसवनस्यात्मत्वम्' इति भट्टभास्करः.

*पवमानाय सर्पत्सु सर्पेद्धोता नवेति तु।
विचार्य सर्पेन्नैवेति सिद्धान्तयति वै खलु—

॥ तदाहुः। सर्पे३त्। न सर्पे३त्। इति॥

†विचारे प्लुतौ[1]॥

तत्र,

॥ सर्पेदिति हैक आहुरुभयेषां वा एष देवमनुष्याणां भक्षो यद्बहिष्पवमानः‡। तस्मादेनमभिसंगच्छन्त इति वदन्तः॥

यत् यः। भक्षः लक्षोपमम्, भक्षवत् प्रीतिकरः। एनमभि प्रति। सर्वे संगच्छन्ते यस्मात् तस्माद्धोतापि गच्छेदिति हेतुं वदन्त आहुः॥

॥ तत्तन्नादृत्यम्। यत्सर्पेदृचमेव तत्साम्नोऽनुवर्त्मानं कुर्यात्॥

यत् यदि तत् तस्मिन् सति सर्पणे साम्नोऽनुवर्त्मानमृचमनुगन्त्रीं§ कुर्यात्॥

---

१. 'प्लुतौ सर्पेदिति' घ. पाठः.

---

* सर्पणप्रकारं चाहापस्तम्बः—'समहोतारं मनसानुद्रुत्याहवनीये समहं हुत्वोदञ्चः प्रह्वा बहिष्पवमानार्थं पर्यार्त्विजः समन्वारब्धाः सर्पन्ति। अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गातोद्गातारं ब्रह्मा ब्रह्माणं यजमानः' इति १२-१६-१७, १२-१७-१. 'अध्वर्युमुखाः समन्वारब्धाः सर्पेन्त्या तीर्थदेशात्। तत्स्थोत्राग्रोपविशन्त्यु- द्गातारमभिमुखाः' इति आ॰ श्रौ॰ सू॰ ५-२-६,७. † 'संशये प्लुतिः' इति गोविन्दस्वामी. ‡ उद्गातृभिर्गेयम् 'उपास्मै गायता नरः' इत्यादिकं स्तोत्रं बहिष्पवमानः. § 'साम गीतिः। तत्र ऋचो धर्मः। तत्र प्रधानभूतां धर्मिणीमृचं गुणभूतस्य धर्मात्मनः साम्नोऽनुवर्त्मानमनुगत- वर्त्मानं सामानुसारिणीं कुर्यात्। नच युज्यते यद् धर्मानुसारी धर्मी भवति इति। धर्म्यनुसारिण खलु धर्मेण भाव्यम्' इति भट्टभास्करः.

॥ य एनं तत्र ब्रूयादनुवर्त्मान्वा अयं होता सामगस्याभूदुद्गातरि यशोऽधादच्योष्टायतनाच्चोष्यत आयतनादिति शश्वत् तथा स्यात् ॥

नलोपाभावश्छान्दसः । अनुवर्त्मा गतमार्गानुगामी । अधात् स्थापितवान् । *'गातिस्था—'इति सिचो लुक् । अच्योष्ट यस्मात् तस्मादायतनात् प्रतिष्ठायाश्चोष्यत इति यो ब्रूयात् तस्य तद्वचनं शश्वत् तथा स्यात् ॥

॥ †तस्मात् तत्रैवासीनोऽनुमन्त्रयेत ॥

तत्रैव यत्रास्ते पूर्वम् ॥

॥ यो देवानामिह सोमपीथो यज्ञे बर्हिषि वेद्याम् ।
तस्यापि भक्षयामसीति ॥

तावद्वदेदिति शेषः ॥

॥ एवमु हास्यात्मा सोमपीथादनन्तरितो भवति ॥

पानं पीथम् । अन्तरयो विच्छेदः ॥

॥ अथो ब्रूयान्मुखमसि मुखं भूयासमिति ॥

ततः[1],

॥ मुखं वा एतद्यज्ञस्य यद्बहिष्पवमानः ॥

यत् यः सवनत्रययोगिपवमानत्रयादिभूतत्वात्[2] ॥

---

१. 'तत्र', २. 'भूतत्वात् । मुखं ' इ. पाठः.

---

* पा० सू० २-४-७७. † 'तान् होतानुमन्त्रयतेऽत्रैवासीनः ' आ० श्रौ० सू० ५-२-८.

विदुष आह—

॥ सुखं स्वेषु भवति श्रेष्ठः स्वानां भवति य एवं वेद ॥

सः । सुखं स्वेष्वित्यस्य श्रेष्ठः स्वानामिति विवरणम् ।

वेदिता ज्ञातिषु श्रैष्ठ्यं प्राप्नोति ज्ञानयोगतः ॥

पयस्याख्यं हविर्वक्तुमितिहासं ब्रवीत्यथ—

॥ आसुरी वै दीर्घजिह्वी देवानां प्रातः सवनमवालेट्[1] ॥

*आसुरी जातेर्ङीष् । †'दीर्घजिह्वी च छन्दसि' ।

योजनायतजिह्वा सा दैत्यस्त्रीति पुराविदः‡ ।

देवानां सम्बन्धि प्रातस्सवनम् । अव अलेट् ।

लिह आस्वादने लङ् तिबदादित्वाच्छपश्च लुक्§ ।

¶इतश्च‡‡हल्ङ्यादिलोपौ ढत्वजश्त्वं सचर्त्वकम् ॥

अवलीढवती ॥

॥ तद्व्यमाद्यत् ॥

♣तत्प्रातस्सवनं लीढं तया मत्तं बभूव ह♣ ।

वि नाना । अमाद्यत्, ‖'शमामष्टानां दीर्घः श्यनि' ॥

---

१. 'अवालेड् । लिह्' घ. पाठः.

---

* 'असुरी । जातिलक्षणो ङीष् । 'दीर्घजिह्वी वा असुर्या सा' इति तलवकार-ब्राह्मणे दर्शनादसुरीति तद्धितान्तमेव द्रष्टव्यम्' इति भट्टभास्करः. 'अत्र केचित्—आसुरो वै दीर्घजिह्वीति हस्वादिमाहुः । कथम् । दीर्घजिह्वी ह वा असुर्या इति तलवकारश्रुतेः संहितायाश्च सम्भवाद् इति । अपरे पुनरेतमात्रुमन्यन्ते तद्धितेष्वचामादेः इति दीर्घस्मरणात् । ननु तलवकारश्रुतेर्ह्रस्वोऽपि स्याद् इत्युक्तम् । तत्तु नात्रोपयुज्यते । व्यत्ययो बहुलम् छन्दसीति स्मरणात् यावद्दर्शनभावी हि छान्दसप्रयोगो न सदृशमुपसंक्रामति इति न्यायात् । अत आसुरीति दीर्घादिव पदम्' इति गोविन्दस्वामी. † पा॰ सू॰ ४-१-५९. ‡ 'दीर्घजिह्वी वा इदं रक्षो यज्ञहा यज्ञानवलिहत्यचरत्' इति ताण्ड्यब्रा॰ १३-६. § पा॰ सू॰ २-४-७२. ¶ पा॰ सू॰ ३-४-१००. ‡‡ पा॰ सू॰ ६-१-६८. ♣ 'व्यमाद्यत् व्यमादयत् विकल्पस्य मदस्य हेतुरभवत् । यद्वा विमत्तमभूत् मदरहितमभूत्' इति भट्टभास्करः. ‖ पा॰ सू॰ ७-३-७४.

ततः,

॥ ते देवाः प्राजिज्ञासन्त ॥

*'ज्ञाश्रुस्मृदृशां सनः' इति तङ् ।

ज्ञातुमैच्छन् समाधानममुष्यां ऽेहनस्य ते ॥

॥ ते मित्रावरुणावब्रुवन् युवमिदं निष्कुरुतमिति ॥

युवं युवाम् । †'प्रथमायाश्च द्विवचने भाषायाम्' इति आत्वम् । समोऽर्थे निस् । संस्कुरुतम् । 'यद्वै निष्कृतं तत् संस्कृतम्' इति आरण्यके वक्ष्यते‡ ॥

॥ तौ तथेत्यब्रूताम् ॥

आवां संस्कुर्वहे प्रातस्सवनं त्वित्यवोचताम् ॥

॥ तौ वै वो वरं वृणावहा इति ॥

अब्रूतामित्येव । लोट् वहि ॥

॥ वृणाथामिति ॥

तौ प्रति तेऽब्रुवन्निति शेषः ॥

॥ तावेतमेव वरमवृणाताम् । प्रातस्सवने पयस्याम् ॥

§'तप्ते प्रातर्दोहे सायंदोहमानयति । यत् संवर्तते सामिक्षा यदन्यत् तद् वाजिनम्' इत्युक्त्वा सूत्र्यते आपस्तम्बेन—¶'आमिक्षावत् पयस्यां करोति' इति । एतं वरम् । ताम् ॥

---

* पा० सू० १-३-५७. † पा० सू० ७-२-८८. ‡ ऐ० आ० १-१-४.
§ श्रौ० सू० ८-२-५, ६. ¶ श्रौ० सू० १२-४-११.

॥ सैनयोरेषाच्युता ॥

चालयितुमशक्या ॥

क्तवः,

॥ वरवृता ह्येनयोः ॥

भ्याम ओम् ॥

एताभ्यां सा वरत्वेन वृता तस्मात्तु सुस्थिरा ॥

॥ तद्यदस्यै विमत्तमिव तदस्यै समृद्धम् ॥

*टार्थे केद्वयम् ।

अनया दीर्घजिह्वया यद् विमत्तं व्याकुलीकृतम्[1] ।
तत् समृद्धं कृतं मित्रावरुणोक्तपयस्यया ॥

तत् तत्र । इव एव ॥

व्याचष्टे—

॥ विमत्तमिव हि तौ तया निरकुरुताम् ॥

विमत्तं व्याकुलं प्रातस्सवनं तौ पयस्यया ।
तया संस्कृतवन्तौ† हि गृहीतवरदर्पितौ ॥

चतुर्थः खण्डः ।

---

१. 'व्याकुलीकृतम्' च. छ. पाठः.

* 'अस्या इत्युभयत्रापि तृतीयार्थे चतुर्थी सम्बन्धसामान्ये वा षष्ठ्यर्थे चतुर्थी । अनया दीर्घजिह्वया अस्या वा सम्बन्धेन तदानीं यत् प्रातस्सवनं विमत्तमिवासीत् तदस्यै अनया पयस्यया अस्या वा सम्बन्धेन' इति भट्टभास्करः. † 'निरकुरुतां निवारितवन्तौ' इति सायणः.

अथैन्द्रांस्तु पुरोळाशानेकादशकपालकान् ।
विधित्सुः सवनीयान् वै कथामाह प्ररोचयन्—

॥ देवानां वै सवनानि नाध्रियन्त ॥

धृङवस्थान इत्यस्माल्लङ् कर्तरि तुदादिशः* ।
†रिङ् शयग्लिङ्क्ष्वितीयङ् चाद् च तङ् ङित्त्वात् स्थितानि[1] वै ॥

॥ त एतान् पुरोळाशानपश्यन् ॥

ते अनवस्थितसवनका देवाः । एतान् प्रसिद्धान् ॥

दृष्ट्वा च,

॥ताननुसवनं निरवपन् ॥

किमर्थं,

॥ सवनानां धृत्यै । ततो वै तानि तेषामध्रियन्त ॥

तानि सवनानि ॥

॥ तद्यदनुसवनं पुरोळाशा निरुप्यन्ते सवनानामेव धृत्यै ॥

निरुप्यन्त इति यत् सवनानां स्थित्यै तत् स्यात् ॥

॥ तथाहि तानि तेषामध्रियन्त ॥

तेषां देवानाम् ॥

अथ पुरोळाशशब्दं निराह—

॥ पुरो वा एतान् देवा अक्रत यत् पुरोळाशास्तत् पुरोळाशानां पुरोळाशत्वम् ॥

---

१. 'ङित्त्वान्न स्थितानि' क. ख. पाठः.

---

* पा० सू० ३-१-७७. † पा० सू० ७-४-२८.

पुरः रक्षार्था नगरीः* । एतान् पुरोळाशान् । अकृताकृपत[1] ।

छन्दःप्रदर्शनं मन्त्रो लुक् च्लेर्मन्त्रेघसेति† वै ।
पुरःपूर्वाद्दाशतेर्घञ् दो ड आग्वैदिकश्च ळः (?) ॥

यत् ये ॥

॥ तदाहुरनुसवनं पुरोळाशान् निर्वपेत् । अष्टाकपालं प्रातःसवन एकादशकपालं माध्यंदिने सवने द्वादशकपालं तृतीयसवने । तथाहि ‡सवनानां रूपं तथा छन्दसामिति ॥

गायत्र्यष्टाक्षरा त्रिष्टुब्भवेदेकादशाक्षरा ।
द्वादशाक्षरपाचैव जगती खल्विदं यथा ॥
तथा रूपं च योग्यं स्यात् सवनानामतः क्रमात् ।
अष्टैकादशद्वादशसंख्या युक्ता कपालगा ॥
इत्याहुः केचिदाचार्यास्तन्मतं दूषयत्यथ—

॥ तत्तन्नादृत्यम् । ऐन्द्रा वा एते सर्वे निरुप्यन्ते यदनुसवनं पुरोळाशास्तस्मात्तानेकादशकपालानेव निर्वपेत्§ ॥

---

१. 'अकृत नत् अकृपत' घ. ङ. पाठः.

---

* 'पुरो वै, सोमाहुतिभ्यः पुरस्तादेव । यद्यप्यत्र धानादिषु हविष्षु चतुर्थ एव पुरोडाशस्तथापि छत्रिन्यायेन धानादीनां सर्वेषां पुरोडाशत्वोपचारः । यद्वा पुरःशब्द एवं व्याख्येयः—सवनानां धारणार्थं देवा एतानि हवींषि दुर्गाणि पुराण्यकुर्वतेति' इति सायणः. 'पुरः पुरस्तात् कर्मारम्भ एव करणाद् इत्यर्थः । बहुवचनं सर्वपुरोडाशपरिग्रहार्थम् । इतरथा हि सन्निहितपुरोडाशमात्रनिर्वचनं स्यात् । सवनबहुलाद्वा बहुवचनम्' इति भट्टभास्करः. † पा० सू० ३-४-८०. ‡ 'गायत्रं प्रातस्सवनं', 'त्रैष्टुभं माध्यन्दिनं सवनं', 'जागतं तृतीयसवनम्' इति तै० सं० ३-२-९. § 'स यदष्टाकपालान् प्रातःसवने कुर्यादेकादशकपालान् माध्यन्दिने सवने द्वादशकपालांस्तृतीयसवने विलोम तद् यज्ञस्य क्रियेत एकादशकपालानेव प्रातस्सवने कुर्यादेकादशकपालान् माध्यन्दिने सवने एकादशकपालांस्तृतीयसवने यज्ञस्य सलोमत्वाय' इति तै० ब्रा० १-५-११. 'अष्टौ पुरोडाशकपालानेकादश माध्यन्दिने द्वादश तृतीयसवने सर्वानैन्द्रानेकादशकपालाननुसवनमेके समामनन्ति' इति आप० श्रौ० सू० १२-४-१, २. 'अथैन्द्रैः पुरोडाशैरनुसवनं चरन्ति' इति आ० श्रौ० सू० ५-४-१.

यत् ये । वै यस्मात् ।

इन्द्रस्य त्रिष्टुभा योगः सा खल्वेकादशाक्षरा ।
एकादशकपालत्वमत एषु हि शोभते ॥

॥ तदाहुर्यतो घृतेनानक्तं स्यात् ततः पुरोळाशस्य प्राश्नीयात् सोमपीथस्य गुप्त्यै । घृतेन हि वज्रेणेन्द्रो वृत्रमहन्निति ॥

*यतः यत्र । अनक्तमसिक्तम् । ततः प्रदेशादादाय पुरोळाशस्यांशं प्राश्नीयात् ।

घृतेन वज्रभूतेन वृत्रमिन्द्रो जघान ह ।
सोमस्य घृतसंयोगे वधशङ्का भवेदिह ॥

इति भावः ॥

॥ तत्तन्नादृत्यम् ॥

कुतः,

॥ हविर्वा एतद्यदुत्पूतम् ॥

यद् घृतं तदेतदुत्पूतं शुद्धं हविः ॥

॥ सोमपीथो वा एष यदुत्पूतम् ॥

वै अपि ।

हविष्ट्वात्सोमघृतयोर्न विरोधोऽस्ति कश्चन । इति भावः ॥

॥ तस्मात् तस्य यत एव कुतश्च प्राश्नीयात् ॥

†यतः कुतश्चिद्भागादक्तादनक्ताद्वा ॥

---

* 'सर्वत्र प्रथमार्थे सार्वविभक्तिकस्तसिल् । यतः यत् पुरोळाशस्यांशं घृतेनानक्तमस्ति स्यात् तदाशय', † 'यत्किंचिदेव घृतेनाक्तमनक्तं वा' इति भट्टभास्करः.

स्तौति—

**॥ सर्वतो वा एताः स्वधा यजमानमुपक्षरन्ति। यदेतानि हवींष्याज्यं धानाः करम्भः परिवापः पुरोळाशः पयस्येति ॥**

*"हरिवाँ इन्द्रो धाना' इत्यादि सवनप्रैषाद्युक्तानि यत् यानि एतानि हवींषि ॥

†आज्यं सर्पिर्यवा भृष्टा धानाः स्युर्व्रीहयोऽपि वा।
भुक्कळा लाजाः[1] करम्भः परिवापस्तु लाजकः ॥
पयस्या दध्युपहिते[2] तप्ते क्षीरे समुद्धृता।
पुरोळाशः पिष्टपिण्डः स्वधामृतमयी नदी ॥
प्राप्त्यर्थः क्षरतिर्धातुर्यजमानमुप प्रति ॥

**॥ सर्वत एवैनं स्वधा उपक्षरन्ति य एवं वेद ॥**

एनं वेदितारं प्रति। स्वधा गच्छन्ति ॥

पञ्चमः खण्डः।

---

1. 'मुकुललाजः' क. ख. पाठः. 2. 'दध्युपहिता' ग. ङ. पाठः.

---

* ऐ० ब्रा० ८-६. † 'तण्डुलानोप्य धानाः करोति व्रीहीनोप्य लाजान् करोति पुरोळाशमविभिन्नामिक्षावत् पयस्यां करोति उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौति अर्धाः पिष्टानामावृता सक्तून् करोति मन्थं संयुते करम्भ इत्याचक्षते लाजान् परिवाप इति' इति आप० श्रौ० सू० १२-४-१०, ११, १२, १३.

सवनप्रैषसम्प्रोक्तहविष्पङ्क्तिप्रसङ्गतः ।
ज्ञातव्या विविधाः पङ्क्तीः सम्यक् स्तौति प्ररोचयन्—

॥ यो वै यज्ञं हविष्पङ्क्तिं वेद हविष्पङ्क्तिना यज्ञेन राध्नोति ॥

सः । हविषां पङ्क्तिः पञ्च संख्या यत्र तेन यज्ञेन ॥

का पुनर्हविषां पङ्क्तिः,

॥ *धानाः करम्भः परिवापः पुरोळाशः पयस्येति । एष वै यज्ञो हविष्पङ्क्तिः । हविष्पङ्क्तिना यज्ञेन राध्नोति य एवं वेद ॥

सः ॥

॥ यो वै यज्ञमक्षरपङ्क्तिं वेदाक्षरपङ्क्तिना यज्ञेन राध्नोति †सुमत्पड्वग्द इत्येष वै यज्ञोऽक्षरपङ्क्तिः ॥

एतद्धोतृजपाख्यस्य त्वादितोऽक्षरपञ्चकम् ।
एकैकमक्षरं चात्र परस्य ब्रह्मणो वपुः ॥
सु पूजितं मत् प्रहृष्टं पत् सर्वव्यापि तच वक् ।
सर्वस्य वक्तृ ब्रह्मैतद् दे दानाय तु तिष्ठति‡ ॥

॥ अक्षरपङ्क्तिना यज्ञेन राध्नोति य एवं वेद ॥

सः ।

---

* 'ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्तत्वमिति धानाः करम्भः परिवापः पुरोळाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वम्' इति तै० सं० ६-५-११. † 'सुष्ठु मादयन्ति इति सुमदः ईदृशा भवन्ति यस्याः प्रयष्टारः यस्याश्च वक्तारः स्तोतारः यस्यै च इत्यापि दातारः सा सुमत्पड्वग्दा' इति भट्टभास्करः. ‡ पद्यद्वयमिदं 'तथात्र सम्प्रदायविद आहुः' इत्यवतारिकापूर्वकं सायणेनोद्धृतम्

॥ यो वै यज्ञं नराशंसपङ्क्तिं वेद नराशंसपङ्क्तिना यज्ञेन राध्नोति ॥

सः ॥

॥ द्विनाराशंसं प्रातःसवनं द्विनाराशंसं माध्यंदिनं सवनं सकृन्नाराशंसं तृतीयसवनम् ॥

सूत्र्यते हि—*'चमसानाद्योपाद्यान् पूर्वयोः सवनयोः' 'आद्यांस्तृतीयसवने' इति, 'आप्यायितांश्चमसान् सादयन्ति ते नाराशंसा भवन्ति' इति च । एकस्य सकृच्छान्दसः । एकनाराशंसमित्यर्थः ॥

॥ एष वै यज्ञो नराशंसपङ्क्तिर्नराशंसपङ्क्तिना यज्ञेन राध्नोति य एवं वेद ॥

सः ॥

॥ यो वै यज्ञं सवनपङ्क्तिं वेद सवनपङ्क्तिना यज्ञेन राध्नोति ॥

सः ॥

॥ पशुरुपवसथे त्रीणि सवनानि पशुरनूबन्ध्य इति ॥

†उपवसथे पशुरग्नीषोमीयः । अवभृथादूर्ध्वं कर्तव्योऽनूबन्ध्यः पशुः ॥

---

* आ० श्रौ० सू० ५-६-२७, २८, ३०. 'भक्षितानाप्याययन्त्याप्यायस्व समेतु त इति ते नाराशंसाः । द्विनाराशंसे पूर्वे सवने भवतः । एकनाराशंसं तृतीयसवनम्' इति च आप० श्रौ० सू० १२-२५-२४, २५, २६. † परेद्युर्यक्ष्यमाणस्य यजमानस्य समीपे पूर्वेद्युर्देवतास्तदीयं यज्ञं प्रतीक्षमाणा वसन्ति । तस्मादुप समीपे वसन्त्यस्मिन् दिवस इति उपवसथः पूर्वदिनम्.

॥ एष वै यज्ञः सवनपङ्क्तिः । सवनपङ्क्तिना यज्ञेन राध्नोति य एवं वेद ॥

सः ।

हविष्पङ्क्तिप्रसङ्गेन पङ्क्तित्रयमपीरितम् ॥

अथैन्द्राणां सवनीयपुरोळाशानामनुसवनं याज्यामाह—

॥ हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूप इति हविष्पङ्क्त्या यजति ॥

*हविःपञ्चकवत्या तु यजेद्धोतात्र याज्यया ॥

व्याचष्टे—

॥ ऋक्सामे वा इन्द्रस्य हरी ॥

†हृञः कर्मणि ‡'अच इः' वषट्कर्तव्ये श्रद्धेये ॥

॥ पशवः पूषा ॥

पोषकरत्वात् ॥

॥ अन्नं करम्भः ॥

अदनीयत्वात् ॥

॥ सरस्वतीवान् भारतीवानिति वागेव सरस्वती ॥

नात्र वाच्यमस्ति ॥

॥ प्राणो भरतः ॥

प्राणः प्रणयतीत्येवं §भृञोऽतच् भरतो रविः¶ ।

---

* 'अनया याज्यया हविष्पङ्क्तिं यजति । हविष्पङ्क्त्या इति कर्मणि षष्ठी,
† 'याविन्द्रस्य हरी तौ स्वयम् ऋक्सामे एव । ऋक्सामवत् प्रशस्तौ लोकोपकारिणौ' इति भट्टभास्करः. 'ऋग्देवता सामदेवता चेत्युभयदेवतारूपाविन्द्रस्याश्वौ' इति सायणः.
‡ उणादिसू० ४-१४०. § उणादिसू० ३-११०. ¶ 'शरीरस्य भर्ता प्राणो भरतः तस्य स्वभूता भारती प्राणवती वाक् तद्वानिन्द्रो भारतीवान्' इति भट्टभास्करः. 'शरीरभरणाद् भरतः प्राणः तस्य सम्बन्धिनी देहेऽवस्थितिर्भारती तद्युक्तो देवो भारतीवान्' इति सायणः.

*'उद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति । तस्मादेनं प्राण इत्याचक्षते' इति हि वक्ष्यते ॥

तस्य सम्बन्धिनी सर्वा प्रजा वै भारती मता ॥

॥ परिवाप इन्द्रस्यापूप इति ॥

अत्र,

॥ अन्नमेव परिवापः ॥

अदनीयत्वात् ॥

॥ इन्द्रियमपूपः ॥

†इन्द्रसम्बन्धि, बलकारि[1]त्वादपूपस्य पुरोळाशस्य ॥

॥ एतासामेव तद्देवतानां यजमानं सायुज्यं सरूपतां सलोकतां गमयति ॥

एतासामृगादीनाम् ।

‡तुल्यभोगः सयुक् तुल्यवेषयोगः सरूपता ।
तुल्यस्थानः सलोकः स्यादिति वेदविदो विदुः ॥

गमयति प्रापयति यजमानं होता । तत् तत्र ॥

॥ गच्छति श्रेयसः सायुज्यम् ॥

१. 'बलकर' क. ख. पाठः

* ऐ॰ ब्रा॰ २५-६. † 'इन्द्रियवृद्धिहेतुत्वादपूपस्येन्द्रियत्वम्' इति सायणः. 'इन्द्रियमपूप इति तद्धेतुत्वेनैव' इति गोविन्दस्वामी. ‡ 'सायुज्यं तन्मयत्वं तत्संयुक्तत्वं वा' इति भट्टभास्करः. 'सायुज्यं सहवासं सरूपतां समानशरीरत्वम्' इति सायणः.

एतासामित्येव । *श्रेयसः अतिप्रशस्यः सन् । †अर्शआद्यचः सुः । स्वयं होता ॥

॥ गच्छति श्रेष्ठतां य एवं वेद ॥

सः ॥

॥ हविरग्ने व्रीहीत्यनुसवनं पुरोळाशस्विष्टकृतो यजति ॥

‡अमो ङस् । स्विष्टकृतं पुरोळाशसम्बन्धिनम् । होता ॥

स्तौति—

॥ अवत्सारो[1] वा एतेनाग्नेः प्रियं धामोपागच्छत् ॥

एतेन स्विष्टकृद्यागेन ॥

॥ स परमं लोकमजयत् । उपाग्नेः प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद ॥

सः उपगच्छति ॥

॥ यश्चैवं विद्वानेतया हविष्पङ्क्त्या यजते ॥

उपाग्नेरित्यादीत्येव । स च यजमानः ॥

॥ यजतीति च यजतीति च ॥

य इत्येव । उपाग्नेरित्यादीत्येव । इति इत्थम् । स होता । द्विरुक्तिरुक्तार्था§ ॥

षष्ठः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ सुखप्रदायाम् अष्टमोऽध्यायः[2] ॥

---

१. 'अवस्फारो', २. 'इति ब्राह्मणव्याख्यायाम् अष्टमोऽध्यायः घ. ङ. पाठः.

* 'श्रेयसोऽतिप्रशस्तस्योऽग्न्यादेः' इति सायणः. 'प्रशस्यतरस्य प्रजापत्यादेः' इति भट्टभास्करः. † पा० सू० ५-२-१२७. ‡ 'पुरोळाशस्विष्टकृतं यजेत् । सवनबहुत्वात् पुरोळाशस्विष्टकृत इति बहुवचनम् । द्वितीयार्थे वा षष्ठ्येकवचनम्' इति भट्टभास्करः.
§ Page 44.

# अथ नवमोऽध्यायः ।

द्विदेवत्यग्रहान् वक्तुमितिहासं ब्रवीत्यथ—

॥ देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन् ॥

अग्रपेये प्रथमपाने । भावे *'अचो यत्' । सोमस्य राज्ञ इति कर्मणि षष्ठ्यौ । [1]'सम्पदेरनुज्ञानइत्यर्थाल्लङ्'[†] ॥

किं तर्हि चक्रुः,

॥ अहं प्रथमः पिबेयमहं प्रथमः पिबेयमित्येवाकामयन्त ॥

अहमेव प्रथममित्यर्थः । [‡]कर्मणिङो लङ् ॥

॥ ते [§]सम्पादयन्तोऽब्रुवन् ॥

कथं;

॥ हन्ताजिमयाम स यो न उज्जेष्यति स प्रथमः सोमस्य पास्यतीति ॥

[¶]हन्तेत्यभिमुखीकरणे । आजिं लक्ष्यभूमिम् । अयाम । यातेर्लेटो लङ्, यास्यामः । इणो वा लोट् । मस् । आट् । [§]'अयुर्यताम्' इति लिङ्गात् । नः अस्माकं मध्ये । सोमस्य । अमो ङम्, सोमम् ॥

---

१. 'सम्पादेरनुज्ञातङ्गत्यर्थाल्लङ्' क. ख. पाठः

---

* पा० सू० ३-१-९७. † 'न समपादयन् न समपद्यन्त तद्विषये सम्प्रतिपत्तिमन्तो नाभवन् । सम्प्रतिपत्तिरेव सम्पत्तिः स्वार्थिको णिच् । यद्वा सामर्थ्यादात्मानमिति मन्यते । आत्मानं सम्प्रतिपन्नं नाकुर्वत' इति भट्टभास्करः. ‡ पा० सू० ३-१-३०. § 'असम्पादयन्तः' इति गोविन्दस्वामीयः पाठः. 'सम्प्रतिपत्तिकामा अब्रुवन् हेतौ शतृप्रत्ययः' इति भट्टभास्करः. ¶ 'हन्तेत्यारम्भगतम्' इति गोविन्दस्वामी. § 'त आजिमयुः' 'तेषामाजिं यताम्' इति समनन्तरं वक्ष्यमाणाल्लिङ्गादित्यर्थः.

॥ तथेति ॥

ते च देवा व्यवस्थां तां तथेति प्रतिपेदिरे ॥

॥ त आजिमयुः ॥

यातेर्लङः* शाकटायनस्यैवेति झेर्जुस् ।

सोममग्रे पिपासन्तो लक्ष्यभूमिं सुरा ययुः ॥

॥ तेषामाजिं यतामभिसृष्टानां वायुर्मुखं प्रथमः प्रत्यपद्यत ॥

यतां गच्छताम् । अभिसृष्टानां सन्नद्धानाम् । †मुखमिति व्याचष्टे—प्रथम इति । पदेर्दिवादेर्लङ् । प्राप्तवान् ॥

॥ अथेन्द्रः ॥

प्रत्यपद्यतेत्येव ॥

॥ अथ मित्रावरुणौ ॥

प्रत्यपद्येताम् ॥

॥ अथाश्विनौ ॥

पूर्ववत् ॥

तत्र च,

॥ सोऽवेदिन्द्रो वायुम् ॥

अवेत् । वेत्तेर्लङ् । ज्ञातवान् ॥

---

* पा० सू० ३-४-१११. † 'वायुः प्रथमो भूत्वा मुखमगमत् संमुखं तम्' इति सायणः.

कथम्,

॥ उद्दै जयतीति ॥

उज्जयति वा एष वायुरिति ॥

ज्ञात्वा च,

॥ तमनु परापतत् ॥

तं वायुमनु परा शीघ्रम् । अपतत् । पतेर्लङ् ॥

किं वदन्,

॥ सह नावथोज्जयावेति ॥

सहावामुज्जयावेह लाभश्च सह नौ भवेत् ।
जेर्लोड्वसः सलोपाटौ *लोटो लङ्वद् गुणः शपि ॥

॥ स नेत्यब्रवीदहमेवोज्जेष्यामीति ॥

स वायुः । अहमेव नान्येन सह ॥

॥ तृतीयं मेऽथोज्जयावेति ॥

इन्द्र आहेति शेषः ॥

॥ नेति हैवाब्रवीत् । अहमेवोज्जेष्यामीति ॥

वायुरिति शेषः । हेत्यमर्षे । एव पुनः ॥

अथेन्द्रोऽब्रवीत्—

॥ तुरीयं मेऽथोज्जयावेति ॥

तुरीयं चतुर्थांशरूपम् ॥

†चतुरश्छयतावाद्यक्षरलोपश्च वार्त्तिकम् ॥

---

* पा० सू० ३-४-८५. † पा० सू० वा० ५-२-५१.

॥ तथेति ॥

वायुराहेति शेषः ॥

॥ तं तुरीयेऽत्यार्जत ॥

तमिन्द्रं तुरीये चतुर्थभागे । *अत्यार्जत । अति सुष्ठु । आर्जताभ्युपगतवान् ॥

॥ तत् तुरीयभागिन्द्रोऽभवत् त्रिभाग् वायुः ॥

तत् तत्र ग्रहे ।

इन्द्रोऽभजच्चतुर्थांशं वायोरंशास्त्रयोऽभवन् ॥

॥ तौ सहैवेन्द्रवायू उदजयताम् ॥

एव एवमित्यर्थः ।

नात्रानङ् देवताद्वन्द्वे †वायौ नैवेति वार्त्तिकात् ।
एवमिन्द्रश्च वायुश्च कुर्वन्तौ तदोज्जयम् ॥

तथा,

॥ सह मित्रावरुणौ ॥

उदजयताम् ॥

॥ सहाश्विनौ ॥

उदजयताम् ॥

॥ त एषामेते यथोज्जितं भक्षाः ॥

ते भक्षाः एषां वाय्वादीनाम् । यथोज्जितम् उज्जयानतिक्रमेण ॥

---

* 'अतिसृष्टवान् । यद्वा, स्वात्मानमतिक्रम्य स्वामित्वेनेन्द्रमार्जितवान् स्वीकृतवान्' इति भट्टभास्करः. 'अतिसृष्टवान्' इति गोविन्दस्वामी. 'अतिशयेन स्थापितवान्' इति सायणः. † पा० सू० वा० ६-३-२६.

तेषाञ्च मध्ये,

॥ इन्द्रवाय्वोः प्रथमः ॥

ग्रहः ॥

॥ अथ मित्रावरुणयोः ॥

द्वितीयः ॥

॥ अथाश्विनोः ॥

तृतीयः ॥

॥ स एष इन्द्रतुरीयो ग्रहो गृह्यते यदैन्द्रवायवः ॥

यत् यः ॥

इन्द्रस्तुरीयो यत्रासौ ग्रह इन्द्रतुरीयकः ।
*चतुर्भागे ग्रहे[1] त्वाद्यौ भागौ द्वौ वायुरग्रहीत् ॥
तृतीयमिन्द्रश्चतुर्थं वायुस्तु पुनरग्रहीत् ॥

॥ तदेतदृषिः पश्यन्नभ्यनूवाच ॥

†ऋषिर्मन्त्रस्तद्दर्शी[2] वा ॥

॥ ‡नियुत्वाँ इन्द्रसारथिरिति ॥

अनेना न इति अस्या[3] द्वितीयः पाद एष हि ॥
कथं न्विन्द्रतुरीयत्वमिहोक्तमत उच्यते—

1. 'चतुर्थभागग्रहे', 2. 'ऋषिर्मन्त्रस्तत्त्वदर्शी' ग. ङ. पाठः. 3. 'तस्य' क. ख. पाठः

* 'तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् । तस्मादियं व्याकृता वागुद्यते तस्मात् सकृदिन्द्राय मध्यतो गृह्यते द्विर्वायवे' इति तै० सं० ६-४-७. † 'वामदेव ऋषिः' इति गोविन्दस्वामी. ‡ ऋक्सं० ३-७-१९-२.

॥ तस्माद्धाप्येतर्हि भरताः सत्वनां वित्तिं प्रयन्ति ॥

*भरताः जनपदिनः रथिनः। सत्वनां सारथिनाम्†। वित्तिं भृतिं ‡प्रयन्ति प्रयच्छन्ति। छशब्दलोपः॥

॥ तुरीये हैव सं ग्रहीतारो वदन्ते ॥

इटो दीर्घः। ग्रहीतारः सारथिनः। तुरीये दत्ते संवदन्ते। §'भासनोपसंभाषा—' इति तङ्॥

॥ अमुनैवानूकाशेन यदद इन्द्रः सारथिरिव भूत्वोदजयत् ॥

ते हि कुर्वन्तीति शेषः। अनूकाशो दृष्टान्तः। ¶'इकः काशे' इति दीर्घः॥

यस्येन्द्रः सारथिरिव स वायुस्त्विन्द्रसारथिः।
सारथिग्राह्यतुर्यांशमिन्द्रो ह्यग्राग्रहीदिति॥
रथिलब्धेषु वित्तेषु सारथिर्हि तुरीयभाक्॥

प्रथमः खण्डः।

---

* 'भरता युद्धार्थिनः सत्वनां सारथीनां वित्तिं वेतनं भृतिं प्रयन्ति प्रयच्छन्ति तुरीये च भागे संग्रहीतारः संग्रहीतॄन् वदन्ते भरताः। संग्रहीतार इति द्वितीयार्थे प्रथमा। यद्वा भरता इति ऋत्विङ्नाम। भरता भृता भृत्याः, सत्वनां सत्वतां, सत्वन्तो दाक्षिणात्याः 'ये के च सत्वताम्' (ऐ० ब्रा० ३८-३) इति लिङ्गात्। वित्तिं भृतिं प्रयन्ति। ते च भृतिं प्रयन्तः संग्रहीतारो भृत्याः तुरीये चतुर्थे भागे प्रतीयमाने संवदन्ते। तथाचाहुः—कर्मकरा हि कर्म कुर्वाणाः पादिकमर्थं लभन्ते इति' इति गोविन्दस्वामी. 'भरः संग्रामः तं तन्वन्ति विस्तारयन्तीति भरता योद्धारः' इति सायणः. † 'नकारान्तः सारथिशब्दोऽप्रसिद्धः' ‡ 'प्रयन्ति प्रकर्षेण सम्पादयन्ति' इति सायणः. 'प्रतिपद्यन्ते' इति भट्टभास्करः. § पा० सू० १-३-४७. ¶ पा० सू० ६-३-१२३.

अथ स्तौति द्विदेवत्यानैन्द्रवायवकादिकान्—

॥ *ते वा एते प्राणा एव यद् द्विदेवत्याः ॥

यद् ये ॥

कथं,

॥ वाक् च प्राणश्चैन्द्रवायवः ॥

प्राणं प्राणः† ॥

॥ चक्षुश्च मनश्च मैत्रावरुणः । श्रोत्रं चात्मा चाश्विनः‡ ॥

§आत्मा मध्यमः कायः ॥

॥ तस्य हैतस्यैन्द्रवायवस्याप्येकेऽनुष्टुभौ पुरोनुवाक्ये कुर्वन्ति । गायत्र्यौ याज्ये । वाक् च वा एष प्राणश्च ग्रहो यदैन्द्रवायवस्तदपि छन्दोभ्यां यथायथं कल्पयेते इति ॥

एके *आचार्याः । ¶अनुष्टुबिति वाङ्नामसु पाठात् । ‡'वाक् पूर्वरूपम्' इति श्रुतेश्च पूर्वमनुवाक्ये अनुष्टुभौ युक्ते । प्राणगायत्र्योस्तेज-

---

* 'प्राणा वा एते यद् द्विदेवत्याः' इति तै० सं० ६-४-९. † 'वागादीनां प्राणरूपत्वाभावेऽपि प्राणाधीनवृत्तिलाभत्वेन प्राणा इति निर्देशः । तथाच शत० ब्रा०—'अयं वै नः श्रेष्ठो यः संचरंश्चासंचरंश्च न व्यथतेऽथो न रिष्यति हन्तास्यैव सर्वे रूपं भवामेति त एतस्यैव सर्वे रूपमभवन् तस्मादेत एतेनाख्यायन्ते प्राणाः' १४-४-३-३३ इति, 'यथा विहितो वा अयं शीर्षन् प्राणः मनो वाक् प्राणश्चक्षुः श्रोत्रम्' इति च ९-२-२-५. 'प्राणशब्दः प्राणाप्राणेषु लक्षणया छत्रिणो गच्छन्तीतिवत्' इति गोविन्दस्वामी. 'प्राणवृत्तिभेदात्मकचक्षुरादिरूपत्वात् । चक्षुरादिस्थितिहेतुत्वाद्वा' इति भट्टभास्करः. 'उच्छ्वासादिवृत्तिभेदवती वायुः प्राणः' इति सायणः. ‡ 'वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः' इति तै० सं० ६-४-९. 'वचनप्राणनहेतू इन्द्रवायू चिद्रूपत्वात् प्रेरयितृत्वाच्च । दर्शनमननहेतू मित्रावरुणौ प्रकाशकत्वाज्जीवयितृत्वाच्च श्रवणशरीरहेतू अश्विनौ आरोग्यहेतुत्वात्' इति भट्टभास्करः. § 'लौकिकः परमात्मा वा' इति गोविन्दस्वामी. 'जीवात्मा' इति सायणः. ¶ वा० निघ० १-९. ‡ ऐ० आ० ३-१-१.

स्त्वाद् याज्ये अपि गायत्र्यौ । एवञ्च यथायथं यथास्वम् । औष्णो भ्यां, छन्दसी द्वे* । लट्टो लृट् । कल्पेते' इत्याहुः ॥

॥ तच्चन्नाहत्यम् ॥

कथं,

॥ व्यृद्धं वा एतद्यज्ञे क्रियते यत्र पुरोनुवाक्या ज्यायसी याज्यायै[1] ॥

इत्येके ॥

॥ यत्र वै याज्या ज्यायसी तत् समृद्धम् ॥

अनुवाक्याया इति शेषः ॥

॥ अथो यत्र समे ॥

तदपि समृद्धमेव । समृद्धं शोभनम् । सूच्यते हि—†'न तु याज्या ह्रसीयसी' इति ॥

॥ यस्यो तत् कामाय तथा कुर्यात् प्राणस्य च वाचश्चात्रैव तदुपाप्तम् ॥

उ खलु । ‡क्रियं इत्यम् । यस्मै कामाय लाभाय वाक्प्राणसम्बन्धिने तदनुष्टुबनुवाक्यात्वं[2] क्रियते होत्रा अत्र याज्यानुवाक्ययोर्गायत्रत्वेऽपि तत्फलं तथोपाप्तं लब्धं स्यात् ॥

---

१. 'याज्यायै । यत्र', २. 'तदनुष्टुबनुवाक्यम्' भ. ख. पाठः,

---

* 'वाग्वा अनुष्टुप् प्राणो वै गायत्री' इत्यनुष्टुब्गायत्रीभ्यां यथायथं कल्पेते देवते इति । तामिन्द्रः 'तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोद्' इति श्रुतेः । 'प्राणो वायुरेव । अतो यथायथं कल्प्येते' इति गोविन्दस्वामी. 'वायुमावपि यथोक्ताभ्याम् अनुष्टुब्गायत्री-च्छन्दोभ्याम्' इति सायणः. 'तदपि तावपि वाक्प्राणौ तदीयाभ्यां छन्दोभ्यां परिगृहीताभ्यां यथायथं यथास्वं कल्पयेते क्लृप्तौ भविष्यतः' इति भट्टभास्करः. † आ० श्रौ० सू० २-१४-२२. ‡ 'यस्य यस्य वस्तुनः कामायापेक्षितफलसिद्धये तत् तथा कुर्यात् तेन पूर्वोक्तप्रकारेणानुष्टुब्गायत्रीजन्यमनुष्ठानं पूर्ववदी कुर्वीत तत् सर्वं विफलम् अत्रैव याज्यानुवाक्ययोः साम्यानुष्ठान एव उपाप्तं सर्वं प्राप्तं भवति' इति सायणः.

कथं,

॥ वायव्या पूर्वा पुरोनुवाक्या* ॥

†‘वायवायाहि’ इति ॥

॥ ऐन्द्रवायव्युत्तरा ॥

‡‘इन्द्रवायू इमे’ इति ॥

॥ एवं याज्ययोः ॥

पूर्वा वायव्या §‘अग्रं पिबा’ इति । उत्तरैन्द्रवायवी ¶‘शतेना न’ इति ॥

तत्र,

॥ सा या वायव्या तया प्राणं कल्पयति ॥

वीप्सालोपः । या या वायव्या तया तया प्राणं कल्पयति सम्पादयति ॥

कुतः,

॥ $वायुर्हि प्राणः । अथ यैन्द्रवायवी तस्यै यदैन्द्रं पदं तेन वाचं कल्पयति ॥

या या ऐन्द्रवायवी । तस्यै तस्यास्तस्याः । यदिन्द्रप्रतिपादकं पदं तेन वाचं सम्पादयति ॥

---

* ‘वायव इन्द्रवायुभ्यां वायवायाहि दर्शतेन्द्रवायू इमे सुता इत्यनुवाक्ये अनवानं पृथक्प्रणवे, अग्रं पिबा मधूनामिति याज्ये अनवानम्’ इति आ० श्रौ० सू० ५-५-२,४. † ऋक्सं० १-१-३-१. ‡ ऋक्सं० १-१-३-४. § ऋक्सं० ३-७-२२-१. ¶ ऋक्सं० ३-७-२२-२. $ ‘तदय वः स प्राणोऽयमेव वायुर्योऽयं पवते’ इति शत० ब्रा० १०-३-३-७. ‘योऽयं प्राणः स वायुः’ इति च बृह० उप० ३-१-५.

कुतः,

॥ वाग्ध्यैन्द्री ॥

इन्द्रस्य हि वाचा सम्बन्धोऽस्ति *' चत्वारि ते असुर्याणि नाम ' इति, † 'तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोद् ' इति च श्रुतेः ॥

निगमयति—

॥ उपो तं काममाप्नोति यः प्राणे च वाचि च ॥

उ एवमित्यर्थः ।

वाचि प्राणे च यः कामः स उपाप्तो भवेदिह ॥

किं बहुना,

॥ न यज्ञे विषमं करोति ॥

अनुवाक्यादैर्ध्यरूपं वैषम्यं न भवेदिह ॥

द्वितीयः खण्डः ।

---

द्विदेवत्यग्रहास्तेषु मन्त्रान् वक्तुं प्रशंसति—

॥ ‡प्राणा वै द्विदेवत्याः ॥

आग्रेयापाग्रान्त्यांशभाजो वायोरिन्द्रस्य चैक्यतः ।
आद्यो ग्रहो द्विदेवत्यस्त्रिदेवत्योऽपि सम्भवेत् ॥

---

* ऋक्सं० ८-१-१५-४. † तै० सं० ६-४-७ ‡ ' प्राणा वै इन्द्रियरूपा एव. ' नाम्ना ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः (तै० सं० ६-४-९) इति श्रुत्यन्तरात् ' इति सायणः

ते च,

॥ एकपात्रा गृह्यन्ते । तस्मात् प्राणा एकनामानः ॥

प्राणशब्देन वाच्यत्वात्[1] सर्वेषामेकनामता ॥

॥ द्विपात्रा हूयन्ते* ॥

ग्रहप्रतिनिग्राह्यैः† ॥

॥ तस्मात् प्राणा द्वन्द्वम् ॥

द्विरूपा उपलभ्यन्ते प्राणा वै चक्षुरादयः ॥

॥ येनैवाध्वर्युर्यजुषा प्रयच्छति तेन होता प्रतिगृह्णाति‡ ॥

ग्रहैरन्तर्णीतण्यर्थः । §' अध्वर्यवे प्रणामयेद् ' इति हि सूत्र्यते ॥

---

1. ' वाच्यत्वम् ' घ. ङ पाठः.

---

* तथाच तै० सं०—' ब्रह्मवादिनो वदन्ति कस्मात् सत्यादेकपात्रा द्विदेवत्या गृह्यन्ते द्विपात्रा हूयन्त इति यदेकपात्रा गृह्यन्ते तस्मादेकोऽन्तरतः प्राणो द्विपात्रा हूयन्ते तस्माद् द्वौ द्वौ बहिष्टात् प्राणाः ' ६-४-९ इति. होमे द्विपात्रत्वमापस्तम्बेन स्पष्टीकृतं—' हविर्धानं गच्छन् संप्रेष्यति वायव इन्द्रवायुभ्यामनुब्रूहीति । उपयाम गृहीतोऽसि वाक्षसदसीत्यादिना पात्रेण प्रतिप्रस्थाता द्रोणकलशादैन्द्रवायवस्य प्रतिनिग्राह्यं गृहीत्वा न सादयति । ऐन्द्रवायवमादायाध्वर्युर्द्रोणकलशाच्च परिप्लवया राजानम् । उभौ निष्क्रम्य दक्षिणतोऽवस्थाय दक्षिणं परिधिसंधिमन्ववहृत्याध्वर्यो वषोऽवगस्तु देवा इति परिप्लवयापात्तमात्रमासयति । आश्राव्य प्रत्याश्राविते संप्रेष्यति वायव इन्द्रवायुभ्यां प्रेष्येति । वषट्कृते जुहोति । एवमुत्तराभ्यां ग्रहाभ्यां प्रचरतः ' इति श्रौ० सू० १२-२०-१४, १९, २०, २३, २४; १२-२१-५.
† ' द्विदेवत्येभ्यः प्रतिनिरुह्य गृह्यन्त इति प्रतिनिग्राह्याः. ‡ अध्वर्योः प्रदानमन्त्र आपस्तम्बेन दर्शितः—' ग्रहमध्वर्युरादाय क्षिप्रं होतारमभिद्रुत्य मयि वसुरिति ग्रहं होत्रे प्रयच्छति । एतेनैव होता प्रतिगृह्य दक्षिण ऊरावासाद्य हस्ताभ्यां निगृह्यास्ते ' इति श्रौ०सू० १२-२१-५, ६. ' द्रुत्वैतद्ग्रहपात्रमाहरत्यध्वर्युः । तद् गृह्णीयादेतु वसुः पुरूवसुरिति । प्रतिगृह्य दक्षिणमूरुमपोच्छ्रय तस्मिन् सादयित्वा... ... रङ्गुलीभिरपिदध्याद् । एवमुत्तरे । सव्येन त्वपिधाय तयोः प्रतिग्रहो भक्षणं च ' इति आ० श्रौ० सू० ५-५-७, ८, ९, १०, ११.
§ आ० श्रौ० सू० ५-६-१.

तद् यजुराह—

॥ एष वसुः पुरूवसुरिह वसुः पुरूवसुर्मयि वसुः पुरूवसुर्वाक्पा वाचं मे पाहीत्यैन्द्रवायवं भक्षयति ॥

*भक्षार्थे प्रणामने भक्षिः प्रणामयेदित्यर्थः । एवमुत्तरत्रापि ॥

मन्त्रशेषमाह—

॥ उपहूता वाक् सह प्राणेनोप मां वाक् सह प्राणेन ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति ॥

किञ्चिद् व्याचष्टे—

॥ प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा-स्तानेव तदुपह्वयते ॥

तान् प्राणानुपह्वयते आत्मना संयोजयति । †वसुः प्रशस्यः । ‡बहुभिर्गुणैः छन्नः पुरूवसुः । दैव्यासः दैव्याः । §'देवस्य यञौ' तस्येदमर्थे । ¶'आज्जसेरसुक्' । §तन्वः शोभनाः । तनूपावानो देहस्य रक्षकाः । पातेर्वनिप् । तपोजास्तपसा देवेन स्रष्टाः ॥

---

* 'एष वसुरित्यादि तन्वस्तपोजा इति य इतिशब्दस्तदन्तोऽयं भक्षणमन्त्रः इति केचित् । अन्ये त्वाहुः—एष वसुरिति प्रतिग्रहमन्त्रः उपहूता वागित्यादिस्तु भक्षणमन्त्र इति ' इति भट्टभास्करः. 'एष वसुः पुरूवसुरिति भक्षणमन्त्रः । तत्र प्रथमैकवचनान्तानि ऐन्द्रवायवविशेषणानि । उपहूता वागित्यादीनि तु वाग्विशेषणानि । उपहूता ऋषय इत्यादीनि पुनः पदानि ऋषिविशेषणानि । प्राणा वा ऋषय इति ऋषिसंस्तुतेः प्राणैर्देवताः स्तूयन्ते' इति गोविन्दस्वामी. † 'वसुर्निवासहेतुः', ‡ 'पुरूवसुः प्रभूतनिवासहेतुः' इति सायणः. § पा० सू० वा० ४-१-८५. ¶ पा० सू० ७-१-५०. § 'तनूपावानोऽस्मच्छरीरपालकाः तन्वः शरीरस्यास्मदीयस्य सम्बन्धिन इति शेषः' इति सायणः.

॥ एष वसुर्विदद्वसुरिह वसुर्विदद्वसुर्मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहीति मैत्रावरुणं भक्षयत्युपहूतं चक्षुः सह मनसोप मां चक्षुः सह मनसा ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेव तदुपह्वयते ॥

*विदद्वसुर्विद्यमानधनः ॥

॥ एष वसुः संयद्वसुरिह वसुः संयद्वसुर्मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहीत्याश्विनं भक्षयति । उपहूतं श्रोत्रं सहात्मनोप मां श्रोत्रं सहात्मना ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजा इति प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेव तदुपह्वयते ॥

†संयद्वसुः सङ्गच्छमानधनः । आत्मा मध्यमः कायः ॥

किञ्च,

॥ पुरस्तात् प्रत्यञ्चमैन्द्रवायवं भक्षयति ॥

आत्मनः प्राक्स्थितं प्रत्यङ्मुखं कृत्वा तु भक्षयेत् ॥

॥ तस्मात् पुरस्तात् प्राणापानौ ॥

तस्मात् तथाहि देहस्य पुरोभागे स्थितावुभौ ।
प्राणापानौ वाक् च तत्र प्राणापानौ प्रदर्शनम् ॥

'वाक् च प्राणश्चैन्द्रवायवः' ‡इति ह्युक्तम् ॥

* 'विदद्वसुः ज्ञानपूर्वकनिवासहेतुः', † 'संयद्वसुः निमतनिवासः । अथवा वसुशब्दः सर्वत्र धनपरत्वेन व्याख्येयः' इति सायणः. ‡ page 339.

॥ पुरस्तात् प्रत्यञ्चं मैत्रावरुणं भक्षयति ।

तस्मात् पुरस्ताच्चक्षुषी ॥

मनश्चात्र । 'चक्षुश्च मनश्च मैत्रावरुणः' *इति श्रुतम् ॥

॥ सर्वतः परिहारमाश्विनं भक्षयति† ॥

ल्यबर्थे णमुल्, परिहृत्य । सूत्र्यते हि—‡ 'उत्तरेण शिरः परिहृत्याभ्यात्मतरं सादनम्' इति, 'आश्विनं यथाहृतं परिहृत्य पुनः सादयित्वा' इति च ॥

॥ तस्मान्मनुष्याश्च पशवश्च सर्वतो वाचं वदन्तीं शृण्वन्ति ॥

शानचो यकश्च शतृशपौ, उद्यमानाम् उच्चार्यमाणाम् । तस्मात् तथाहि[1] ॥

तृतीयः खण्डः ।

---

प्राणानेव पुनरपि[2] स्तौति—

॥ प्राणा वै द्विदेवत्याः ॥

तत्र,

॥ अनवानं द्विदेवत्यान् यजेत् ॥

§याज्यायामनुवाक्यायां प्रैषे चाप्यनवानता¶ ।

---

१. 'तथाहि पुनरपि' क. ख. पाठः. २. 'पुनः' ख. पाठः.

---

* page 339. † अध्वर्योरप्येवमेव भक्षणं तैत्तिरीयसंहितायामाम्नातं—'वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः पुरस्तादैन्द्रवायवं भक्षयति तस्मात् पुरस्ताद्वाचा वदति पुरस्तान्मैत्रावरुणं तस्मात् पुरस्ताच्चक्षुषा पश्यति सर्वतः परिहारमाश्विनं तस्मात् सर्वतः श्रोत्रेण शृणोति' इति ६-४-९. ‡ आ० श्रौ० सू० ५-५-१२, ५-६-११.

§ 'द्विदेवत्यग्रहेषु याज्यां पठन् होतानवानं यजेत्' इति सायणः. 'याज्याया अनवानवचनं पुरोनुवाक्याप्रैषाणामप्युपलक्षणार्थम्' इति षड्गुरुशिष्यः(?). ¶ अनवानं नाम आदित आन्तादनुच्छ्वासः.

सूच्यते हि — * 'इदमाद्यनवानं प्रातःसवने याज्यानुवाक्ये' 'मैत्रौ चोत्तरयोर्ग्रहयोः' इति ॥

किमर्थं,

॥ प्राणानां संतत्यै ॥

स्पष्टयति—

॥ प्राणानामव्यवच्छेदाय ॥

कुत एतत्,

॥ प्राणा वै द्विदेवत्याः ॥

अत एतदानवान्यं प्राणाविच्छेदकारि वै ॥

किञ्च,

॥ †न द्विदेवत्यानामनुवषट्कुर्यात् । यद् द्विदेवत्याना-मनुवषट्कुर्यादसंस्थितान् प्राणान् संस्थापयेत् ॥

यत् यदि । असंस्थिताननुपरतान् ॥

कुतः,

॥ संस्था वा एषा यदनुवषट्कारः ॥

यत् यः ॥

---

* आ० श्रौ० सू० ५-५-५, ६. † तथाच आ० श्रौ० सू० — 'तदेषाभियज्ञगाथा गीयते—ऋतुयाजान् द्विदेवत्यान् यश्च यार्जानतो मदः । आदित्यग्रहसावित्रौ तान् स्म मानुवषट्कृथाः ॥ इति' ५-५-२१ इति, 'सर्वत्रानुवषट्कारो द्विदेवत्यर्तुग्रहादित्यसावित्रपात्नी-वतवर्जम्' इति आप० श्रौ० सू० १२-२४-२.

ततश्च,

॥ य एनं तत्र ब्रूयादसंस्थितान् प्राणान् समतिक्षिपत्

प्राण एनं हास्यतीति शश्वत् तथा स्यात् ॥

एनमननुवषट्कुर्वन्तम् । *'णौ चङ्युपधायाः—' । †'तिष्ठतेरित्' ॥

निगमयति—

॥ तस्मान्न द्विदेवत्यानामनुवषट्कुर्यात् ।

तदाहुः ॥

चोद्यस्वरूपमाह—

॥ द्विरागूर्य मैत्रावरुणो द्विः प्रेष्यति सकृदागूर्य होता

द्विर्वषट्करोति का होतुरागूरिति ॥

द्वितीयेति शेषः ।

होता यक्षत् प्रैष आगूर्याज्यागूर्ये यजामहे ।
द्विरैन्द्रवायवे त्वाष्ट्रे प्रशास्त्रागुरते तथा ॥
द्विः प्रेष्यति यजेत्येवं होता त्वागुरते सकृत् ।
वषट्करोति द्विस्तस्य द्वितीयागूस्तु का भवेत् ॥

सूत्र्यते हि—‡'होता यक्षद्वायुमग्रे गां होता यक्षदिन्द्रवायू अर्हन्तेति प्रैषावनवानम्' । 'अग्रं पिबा मधूनामिति याज्ये अनवानमेकागुरे पृथग्वषट्कारे' इति ॥

---

* पा० सू० ७-४-१. † पा० सू० ७-४-५. ‡ आ० श्रौ० सू० ५-५-३, ४.

परिहरति—

॥ प्राणा वै द्विदेवत्या *आगुर्वज्रस्तद् यदत्र होतान्तरेणा-
गुरेतागुरा वज्रेण यजमानस्य प्राणान् वीयात् ॥

यत् यदि । तत् तत्र ॥

॥ य एनं तत्र ब्रूयादागुरा वज्रेण यजमानस्य प्राणान्
व्यगात् । प्राण एनं हास्यतीति शश्वत् तथा स्यात् ॥

एनं द्विरागुरमाणम् ॥

॥ तस्मात् तत्र होतान्तरेण नागुरेत ॥

तुदादिरनुदात्तेच गुरी उद्यमने खलु ॥

॥ अथो ॥

अपिच,

॥ मनो वै यज्ञस्य मैत्रावरुणो वाग् यज्ञस्य होता मनसा वा इषिता वाग् वदति । यां ह्यन्यमना वाचं वदत्यसुर्या वै सा वागदेवजुष्टा ॥

उक्तार्थानि ॥

॥ तद् यदेवात्र मैत्रावरुणो द्विरागुरते सैव होतुरागूः ॥

तत् तत्र ।

द्वितीयागूः प्रशास्तुर्या सैव होतुरपीष्यताम् ॥

चतुर्थः खण्डः ।

---

* 'वाक्त्वाद् वज्रस्थानीया आगूः । 'वाग्वै वज्रः' इति श्रुतेः ' इति भट्टभास्करः.

† page 233.

*ऋतुयाजान् द्वादशाथ विदधाति प्ररोचयन्—

॥ प्राणा वा ऋतुयाजाः ॥

ततः किं,

॥ तद् यद् ऋतुयाजैश्चरन्ति प्राणानेव तद् यजमाने दधति ॥

तत् तान् । दधति ऋत्विजः । †'अदभ्यस्तात्' । स्थापयन्ति । तत् तत्र ॥

॥ षड् ऋतुनेति यजन्ति ॥

ऋतुनेति प्रेषिताः षड्ढो पो नेऽग्नीद् ब्र च प्र च‡ ।
होत्रादयो यजन्त्यागूर्वषट्प्रैषैः स्वधिष्ण्यगाः ॥

सूच्यते हि—§'होतायक्षदसावयजयोस्तु स्थाने आगूर्वषट्कारौ यत्र क्व प्रैषेण यजेद्' इति, 'तेन तेनैव प्रेषितः प्रेषितः स स यथाप्रैषं यजति' इति च ॥

॥ प्राणमेव तद् यजमाने दधति ॥

तत् तत्र ॥

॥ चत्वार ऋतुभिरिति यजन्ति ॥

---

* सवनाध्यक्षादय ऋतुदेवा येऽभिजग्मे त एते ऋतुयाजाः. † पा० सू० ७-१-८. ‡ होतृपोतृनेष्ट्रग्नीद्ब्राह्मणाच्छंसिप्रशास्तारः. 'षड्ऋत्वो यजन्ति होत्रादयः' इति गोविन्दस्वामी. 'ऋतुना सोमं पिबत्विति षड्ऋत्वो यजन्ति । छान्दसः कृत्वसुचो लोपः' इति भट्टभास्करः. § आ० श्रौ० सू० ५-४-५, ५-८-४.

प्रेषिता ऋतुभिश्चेति चत्वारो हो च पो च ने ।
अच्छेति च यजन्त्यागूर्वषट्श्रेषैः स्वधिष्ण्यगाः ॥

॥ अपानमेव तद् यजमाने दधति । द्विर्ऋतुनेत्युपरिष्टात् [†] ॥

ऋतुनेति प्रेषितौ द्वावध्वर्युयजमानकौ ।
यजन्तीत्यनुवृत्तं च नम्यते यजतास्त्विति ॥
स्वयं षष्ठे पार्ष्टिके द्विर्होतान्यत्रानयोर्यजेत् ।

सूत्र्यते हि—[‡]'होताध्वर्युगृहपतिभ्यां होतरेवयजेत्युक्तः' 'स्वयं षष्ठे पृष्ठ्याहनि' इति ॥

॥ व्यानमेव तद् यजमाने दधति ॥

अत्र धत्त इति त्वयों दधतीत्यस्य गृह्यताम् ॥

॥ स वा अयं प्राणस्त्रेधा विहितः प्राणोऽपानो व्यान इति ॥

विहितः क्लृप्तः ॥

॥ तद्यदृतुन–ऋतुभिर्ऋतुनेति यजन्ति प्राणानां सन्तत्यै ॥

---

* होतृपोतृनेष्ट्रच्छावाकाः 'चत्वार ऋत्विजो मासत्रयिकाः' इति गोविन्दस्वामी। 'ऋतुभिः सोमं पिबन्त्विति चतुर्यजन्ति । पूर्ववत् मुचो लोपः। ततो विनाकिम्पकत्वेन जनुः। यद्वा, प्रत्यभ्यावृत्ति अन्योऽन्यो यष्टा भवति इति क्रियाभेदात् । तत्राभ्यावृत्तिभेदाभिप्रचतुर्ऋतुपद-संबन्धिनश्चत्वार उच्यन्ते । एवं पत्निवत्रापि द्रष्टव्यम्' इति भट्टभास्करः। † तथाच तै० सं०—'ऋतुना प्रेष्येति षट्कृत्व आह षड् वा ऋतव ऋतूनेव प्रीणाति ऋतुभिरिति चतुश्चतुष्पद एव पशून् प्रीणाति द्विः पुनर्ऋतुनाह द्विपद एव प्रीणाति' इति ६-५-३. अनेनैव क्रमेण मैत्रावरुणं प्रशास्त्रीः प्रैष आपस्तम्बेन दर्शितः—'ऋतुना प्रेष्येति त्रिष्वाद्येष्वध्वर्युः संप्रेष्यत्येवं प्रतिप्रस्थाता । पात्रयोर्मुखे पर्यायऋतुभिः प्रेष्येति द्वयोरध्वर्युरेवं प्रतिप्रस्थाता पुनः पर्यायऋतुना प्रेष्येति गृहपतिर्अध्वर्युरेवं प्रतिप्रस्थाता' इति १२-१६-१७, १८, १९. 'ऋतुना सोमं पिबन्त्विति पुनरपि द्विर्यजन्ति । अत्र द्विरिति सुचूप्रयोगाद् पूर्वत्रापि चतुर्णां विवक्षित इति गम्यते' इति भट्टभास्करः। ‡ आ० श्रौ० सू० ५-८-५, ६.

यजन्तीति यत् प्राणानां सन्तत्यै तत् स्यात्* । †'ऋत्यकः' इति ह्रस्वप्रकृतिभावौ ॥

व्याचष्टे—

॥ प्राणानामव्यवच्छेदाय । प्राणा वा ऋतुयाजाः ॥

तत्र,

॥ नर्तुयाजानामनुवषट्कुर्यात् ॥

नात्र †'ऋत्यकः' ॥

॥ असंस्थिता वा ऋतव एकैक एव ॥

नित्याः खल्वृतवः सर्वे स्थिता नाशविवर्जिताः[1] ॥

॥ यदृतुयाजानामनुवषट्कुर्यादसंस्थितानृतून् संस्थापयेत् ॥

यत् यदि ॥

॥ संस्था वा एषा यदनुवषट्कारः ॥

यत् यः ॥

॥ य एनं तत्र ब्रूयादसंस्थितानृतून् समतिष्ठिपत् । दुःषमं भविष्यतीति शश्वत् तथा स्यात् ॥

‡दुःषमं व्याकुलम्[2] ॥

॥ तस्मान्नर्तुयाजानामनुवषट्कुर्यात् ॥

नात्र †'ऋत्यकः' ॥

पञ्चमः खण्डः ।

---

1. 'संस्थिता नाशवर्जिताः' ख. पाठः. 2. 'व्याकुलत्वम्' क. ख. पाठः.

---

* 'प्रथममृतुनेति यजनं प्राणस्य सन्तत्यै । तत ऋतु(भिः ऋतुने)ति द्वाभ्यां यजनं प्राणप्रवृत्तेरपानव्यानयोरपि सन्तत्यै भवति' इति भट्टभास्करः. † पा॰ सू॰ ६-१-१२८. ‡ 'दुष्षमं विषमम्' इति गोविन्दस्वामी. 'रोगदारिद्र्यादिरूपं विषमं किञ्चिदस्वास्थ्यम्' इति सायणः. 'दुष्कमम्' इति भट्टभास्करपाठः. तथाच तद्व्याख्या— 'यजमानस्य संवत्सरस्य दुष्टत्वं, प्रजानां विनाशहेतुत्वं दुष्कमं तदेव कृतं भवति' इति.

द्विदेवत्यान् भक्षयित्वाथोपहूय त्विळामथ।
अवान्तरेळां प्राश्य स्वं होताथाचमसं ततः॥

इत्याह—

॥ *प्राणा वै द्विदेवत्याः पशव इळा॥

†भूम्यामिळायां पशवो वर्तन्ते पोषसंयुताः[1]॥

ततश्च,

॥ द्विदेवत्यान् भक्षयित्वेळामुपह्वयते॥

‡इळानिगदं ब्रूयात्॥

॥ पशवो वा इळा पशूनेव तदुपह्वयते॥

तत् तत्र[2]॥

॥ पशून् यजमाने दधाति।

तदाहुः॥

ब्रह्मवादिनो विचारमिति शेषः॥

---

१. 'संयुताः द्विदेवत्यान्' प. ङ. पाठः. २. 'तत्र व्याचष्टे। पशून्' क. ख. पाठः.

---

* 'प्राणा वा एते यद् द्विदेवत्याः पशव इळा यदिळां पूर्वां द्विदेवत्येभ्य उपह्वयेत पशुभिः प्राणानन्तर्दधीत प्रमायुकः स्याद् द्विदेवत्यान् भक्षयित्वेळामुपह्वयते प्राणानेवात्मन् धित्वा पशूनुपह्वयते' इति तै० सं० ६–४–९. † 'इळा इलत्वनाम तद्धेतुतया पशव इळा' इति गोविन्दस्वामी. 'इळादेवता च 'गौर्वा अस्यै शरीरम्' (तै० सं० १-७-२) इति श्रुतेः पशुरूपा' इति सायणः. ‡ इळानिगदश्च आ० श्रौ० सूत्रे (१-७-७) प्रतिपादितो द्रष्टव्यः.

॥ अवान्तरेळा पूर्वा प्राश्नीया३त् होतृचमसं भक्षये३त् इति ॥

विचारे प्लुतौ ॥

सिद्धान्तयति—

॥ अवान्तरेळामेव पूर्वां प्राश्नीयादथ होतृचमसं भक्षयेत्* ॥

ननु भक्ष्यः प्रधानत्वात् पूर्वं सोमोऽस्त उच्यते—

॥ यद्वाव द्विदेवत्यान् पूर्वान् भक्षयति तेनास्य सोमपीथः पूर्वो भक्षितो भवति ॥

पीथः पिबतेः कर्मणि क्थन् । पाने थ्याप्तः[1] ।

भक्षितैस्तु द्विदेवत्यैः पूर्वं सोमोऽत्र भक्षितः ॥

निगमयति—

॥ तस्मादवान्तरेळामेव पूर्वां प्राश्नीयात् । अथ होतृचमसं भक्षयेत् । तदुभयतोऽन्नाद्यं परिगृह्णाति सोमपीथाभ्याम् ॥

द्विदेवत्यस्त्वचमसभक्षाभ्या[2]मावृता त्विळा ॥

एतच्च,

॥ अन्नाद्यस्य परिगृहीत्यै ॥

स्यात् ॥

---

१. 'ऽथ्याप्तः' क. ख. पाठः. २. 'चमससोमाभ्या' ख. ङ. पाठः.

---

* 'अवान्तरेडां प्राश्यायम्ना होतृचमसं भक्षयेदध्वर्यं उपह्वयस्वेत्युक्त्वा' इति आ० श्रौ० सू० ५-६-३४.

किञ्च,

॥ प्राणा वै द्विदेवत्या आत्मा होतृचमसः ॥

ततः किं,

॥ द्विदेवत्यानां संस्रवान् होतृचमसे समवनयति ॥

संस्रवाः बिन्दवः । अवनयो निधानम् ॥

॥ आत्मन्येव तद्धोता प्राणान् समवनयते ॥

तत् तेन बिन्दुनिधानेन ॥

॥ सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद ॥

*उक्तार्थानि ॥

षष्ठः खण्डः ।

---

तूष्णींशंसं विधित्सुः सन्नितिहासं ब्रवीत्यथ—

॥ देवा वै यदेव यज्ञेऽकुर्वंस्तदसुरा अकुर्वन् ॥

वै पुरा ॥

॥ ते समावद्वीर्या एवासन्न व्यावर्तन्त ॥

---

* page 247.

समावत् तुल्यमित्यर्थः समाद्वावतुपा पदम् ।
अन्योन्यापेक्षयाधिक्यमुभयेषां न चाभवत् ॥
व्यावृत्तिर्गुणयोगेन श्रेष्ठता सर्वसम्मता ॥

॥ ततो वै देवा एतं तूष्णींशंसमपश्यंस्तमेषामसुरा नान्ववायन् ॥

एषां देवानाम् । तूष्णींशंसम्* । अन्ववायो ज्ञानम् । न ज्ञातवन्तः ॥

कथं,

॥ तूष्णींसारो वा एष यत् तूष्णींशंसः ॥

सारो ध्वन्युत्कर्षः ॥

उपांशुशंसनीयत्वात् सोऽसुरैर्न श्रुतोऽभवत् ।

यत् यः ॥

॥ देवा वै यं यमेव वज्रमसुरेभ्य उदयच्छंस्तं तमेषामसुराः प्रत्यबुध्यन्त ॥

बुधिरनुदात्तेद् दिवादिः । वज्रं शस्त्रम् । तं तं प्रति परिहारं ज्ञातवन्तः ॥

॥ ततो वै देवा एतं तूष्णींशंसं वज्रमपश्यन् ॥

तूष्णींशंसं वज्ररूपं चक्रुर्ज्ञानबलात् सुराः ॥

॥ तमेभ्य उदयच्छन् ॥

एभ्य इमानसुरान् हन्तुम् । वज्रीभूतम् । उद्यम उत्क्षेपः । †'इषुगमि—' इति छः ॥

---

* 'भूरग्निर्ज्योतिरिति त्रिपदस्तूष्णींशंसः षट्पदो वा' इति गोविन्दस्वामी.

† पा॰ सू॰ ७-३-७७.

॥ तमेषामसुरा न प्रत्यबुध्यन्त ॥

एषां देवानाम् । तं क्षिप्तं वज्रभूततूष्णींशंसं प्रति परिहारं न ज्ञातवन्तः ॥

॥ तमेभ्यः प्राहरन् ॥

प्रहार उपरिक्षेपः ॥

॥ तेनैनानप्रतिबुद्धेनाघ्नन् ॥

अप्रतिबुद्धेनानवगतस्वभावेन । तेन तूष्णींशंसवज्रेण । एनानसुरानघ्नन् ॥

हनो लङ्युपधालोपो *हो हन्तेरिति हश्च घः ॥

॥ ततो वै देवा अभवन् । परासुराः । भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥

उक्तार्थानि† ॥

॥ ते वै देवा विजितिनो मन्यमाना यज्ञमतन्वत ॥

विजयो विजितं[1] भावे क्तः । ‡अत इनिः ठन् । आत्मनः ॥

॥ तमेषामसुरा अभ्यायन् यज्ञवेशसमेषां करिष्याम इति ॥

उक्तार्थम्§ ॥

१. 'विजितिः' ख. ङ. पाठः.

* पा० सू० ७-३-५४. † page 281. ‡ पा० सू० ५-२-११५. § page 260.

ततो देवाः,

॥ तान् समन्तमेवोदारान् परियत्तानुदपश्यन् ॥

तानसुरान् । समन्तं समन्तात् सर्वत एव । *उदारान्, आरा शस्त्रम् उत्क्षिप्तशस्त्रान् । †परियत्तानतिसन्नद्धान् । ‡उदपश्यन् ससाध्वसं दृष्टवन्तः ॥

दृष्ट्वा च,

॥ तेऽब्रुवन् ॥

कथं,

॥ संस्थापयामेमं यज्ञम् ॥

समाप्तं करवाम ॥

केन भावेन,

॥ यज्ञं नोऽसुरा मा वधिषुरिति ॥

§'माङि लुङ्' । ¶'लुङि च' इति वधादेशः ॥

॥ तथेति ॥

निश्चित्य,

॥ तं तूष्णींशंसे संस्थापयन् ॥

स्थापेर्ण्यन्तात्लङि अण्ण । समस्थापयन्§ ॥

---

* 'उद्यतान्' इति गोविन्दस्वामिसायणौ । † 'अत्यन्तसन्निधानान्', ‡ 'उदङ्मुखाः सन्तो दृष्टवन्तः' इति सायणः. § पा० सू० ३-३-१७५ ¶ पा० सू० २-४-४३. $ 'संस्थापयन् । अडभावश्छान्दसः । यद्वा पञ्चमोऽयं लकारः । संस्थापयेयुः इति' इति भट्टभास्करः.

क कर्मित्याह—

॥ भूरग्निर्ज्योतिर्ज्योतिरग्निरित्याज्यप्रउगे* संस्थापयन् । इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इति निष्केवल्यमरुत्वतीये संस्थापयन् । सूर्यो ज्योतिर्ज्योतिः स्वस्सूर्य इति वैश्वदेवाग्निमारुते संस्थापयंस्तमेवं तूष्णींशंसे संस्थापयंस्तमेवं तूष्णींशंसे संस्थाप्य तेनारिष्टेनोदृचमाश्नुवत ॥

तेन शस्त्रषट्कसारभूतपदत्रिकेन । अरिष्टेनाहिंसितेन । उदृचं समाप्तिमाश्नुवत प्राप्तवन्तः ॥

स्पष्टयति—

॥ स तदा वाव यज्ञः संतिष्ठते यदा होता तूष्णींशंसं शंसति† ॥

सन्तिष्ठते समाप्तिं याति । ‡'समवप्रविभ्यः स्थः' इति तङ् ॥

अथ होतुर्निन्दनादौ परिहारं ब्रवीति ह—

॥ स य एनं शस्ते तूष्णींशंस उप वा वदेदनु वा व्याहरेत् तं ब्रूयात् ॥

---

* आज्यप्रउगे नाम होतुः प्रातस्सवनिके शस्त्रे । निष्केवल्यमरुत्वतीये माध्यन्दिनसवनिके । वैश्वदेवाग्निमारुते तृतीयसवनिके. † तूष्णींशंसशस्त्रशंसनप्रकारश्चाश्वलायनेन दर्शितः—'सुमत्पद्वग्दे पितामातरिश्वाच्छिद्रा पदाधादच्छिद्रोक्था कवयः शंसन् सोमो विश्वविन्नीथानिनेषद् बृहस्पतिरुक्थामदानि शंसिषद्वागायुर्विश्वायुर्विश्वमायुः क इदं शंसिष्यति स इदं शंसिष्यतीति जपित्वानभिहिंकृत्य शोंसावोमित्युच्चैराहूय तूष्णींशंसं शंसेदुपांशु सप्रणवमसन्तन्वन् । एष आह्वावः प्रातःसवने शस्त्रादिषु' इति श्रौ० सू० ५-९-१, २. ‡ पा० सू० १-३-२२.

निन्दा तूपवदेरर्थे आक्रोशोऽनुद्भवस्तथा ।

स प्रसिद्धः परापवादनिरतो यः* । एनं होतारम् । तं निन्दकमाक्रोष्टारं वा ब्रूयाद्धोता ॥

कथम्,

॥ †एष एवैतामार्तिमारिष्यति प्रातर्वाव वयमद्येमं शस्ते तूष्णींशंसे संस्थापयामः । तं यथा गृहानितं कर्मणानुसमियादेवमेवैनमिदमनुसमिम इति ॥

‡आर्तिर्दुःखम् । आ सम्यक् । अरिष्यति । §'ऋद्धनोः स्ये' । गमिष्यति । एष निन्दाक्रोशकरः । कुतः । प्रातः प्रातस्सवने वाव खलु संस्थापयामः । लुङो लट् । समाप्तमकार्ष्म ॥

समाप्ते चेदनुष्ठाने[1] किमतः परमुच्यते ।

तं यथेत्यादि । गृहान् इतं प्राप्तम् । अनुसमियात् परिपूजयेत् । कर्मणा भोजनादिकेन । एवमेव एनं यज्ञम् अनु श्रद्धया समिमः कुर्मः ¶इदम् इदानीम् । आनींशब्दलोपः ॥

एवं होत्रोक्ते सति,

॥ स ह वाव तामार्तिमृच्छति य एवं विद्वान् संशस्ते तूष्णींशंस उप वा वदत्यनु वा व्याहरति ॥

---

१. 'वेदमनुष्ठाने तं यथेत्यादि' घ. ङ. पाठः.

---

* 'यो जनो बहुप्रयोगविन्मन्यः' इति भट्टभास्करः. † वक्तव्यमन्त्रस्वरूपमिदमेवेति गोविन्दस्वामी । तथाच तद्व्याख्या—'स य एनं शस्ते तूष्णींशंस इत्येवमादेर्ग्रन्थस्यापरा व्याख्या । तं ब्रूयान्मन्त्रं, कोऽसौ मन्त्र इत्याह—एष एवैतामित्यादिः इदमनुसमिमः इत्यन्तः' इति. ‡ 'आर्ति विनाशम्' इति सायणः. 'क्षतिम्' इति भट्टभास्करः. § पा० सू० ७–२–७०. ¶ 'इदं तूष्णींशंसानुष्ठानम्' इति सायणः.

य एवं विद्वांसं होतारमुपवदति वा अनुव्याहरति वा ॥

निगमयति—

॥ तस्मादेवं विद्वान् संशस्ते तूष्णींशंसे नोपवदेन्नानुव्याहरेत् ॥

न च निन्देन्न चाक्रोशेद् विद्वांसं हौत्रकारिणम् ।
नामरूपगोत्रविद्यागतिपारुष्यकीर्तनैः[1] ॥

सप्तमः खण्डः ।

---

तूष्णींशंसं पुनः स्तौति चक्षुरादिकवर्णनैः—

॥ चक्षूंषि वा एतानि सवनानां यत् तूष्णींशंसः ॥

यत् यः[2] ॥

कथं,

॥ भूरग्निर्ज्योतिर्ज्योतिरग्निरिति प्रातस्सवनस्य चक्षुषी । इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इति माध्यंदिनस्य सवनस्य चक्षुषी । सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति तृतीयसवनस्य चक्षुषी ॥

अग्नीन्द्रसूर्ययोगित्वात् क्रमाज्ज्योतिःश्रुतिद्वयात् ।
नेत्रत्वमेषां सवनत्रयस्यापीह कथ्यते ॥

---

१. 'कीर्तने', २. 'यः । भूरग्निः' ख. ङ. पाठः.

ततश्च,

॥ चक्षुष्मद्भिः सवनै राध्नोति चक्षुष्मद्भिः सवनैः स्वर्गं लोकमेति य एवं वेद ॥

सः ।

फलं ज्ञातृगतं कर्तुर्दण्डापूपिकया भवेत् ॥

किञ्च,

॥ चक्षुर्वा एतद् यज्ञस्य यत् तूष्णींशंसः ॥

यत् यः ॥

तत्र,

॥ एका सती व्याहृतिर्द्वेधोच्यते* ॥

अर्थाभिधानाभेदेऽस्ति प्रातिलोमानुलोमता ।
अग्निर्ज्योतिर्ज्योतिरग्निरित्यादित्रितये खलु ॥

व्याहृतिः शब्दः[1] † ॥

॥ तस्मादेकं सच्चक्षुर्द्वेधा ॥

तथाहि नेत्रेन्द्रियं तु द्विगोळं चैकमुच्यते‡ ॥

---

1. 'व्याहृतिशब्दः' घ. ङ. पाठः.

---

* 'ननु सवनानां चक्षुष्ट्वव्यतिरेकेण यज्ञचक्षुष्ट्वं नाम न किञ्चिदस्ति । तथोक्तमेव, तत् किमिति यज्ञचक्षुष्ट्वं न तूष्णींशंसः स्तूयते इत्यत्र—एका सतीत्यादि । एकैव सती तूष्णींशंसप्रायास्त्वव्याहृतिः द्वेधा द्विप्रकारं सवनविषयतया यज्ञविषयतया च गुणातिशयप्रतिपादनार्थमुच्यते' इति भट्टभास्करः. † 'यद्यपि भूरित्येकैव व्याहृतिस्तथापि तद्योगादग्निर्ज्योतिरित्यपि पदद्वयं व्याहृतित्वेनोच्यते' इति सायणः. ‡ 'यस्मादेवं चक्षुःस्थानीयस्तूष्णींशंसो द्वेधा व्याहृतोऽभवत्, तस्माच्चक्षुरेकमेव सद् द्वेधा भवति । अन्तरेकं सद् बहिर्द्वेधा भवति' इति भट्टभास्करः.

किञ्च,

॥ मूलं वा एतद् यज्ञस्य यत् तूष्णींशंसः ॥

यत् यः ॥

तत्र होता,

॥ यं कामयेतानायतनवान् स्यादिति नास्य यज्ञे तूष्णींशंसं शंसेत् ॥

अस्य यमिति च यष्टृनिर्देशः । आयतनं प्रतिष्ठा ॥

तथासति सः,

॥ उन्मूलमेव तद् यज्ञं पराभवन्तमनु पराभवति ॥

तत् तत्र पराभवन्तं नश्यन्तम् । उन्मूलमुद्धृतमूलम् । अनु ॥

॥ तदु वा आहुः ॥

उ खलु । तत् तत्र ॥

॥ शंसेदेवापिवै तदृत्विजेऽहितं यद्धोता तूष्णींशंसं न शंसति ॥

*अपिवै खल्वित्यर्थः । †अहितं तदशंसनम् ॥

---

* अपिवा एतदिति छेदः सायणमते । तथाचाह—'अपीति पूर्वोक्तापेक्षया पक्षान्तरोपन्यासार्थः' इति. † 'तत् खलु ऋत्विजेऽप्यहितम् अनर्थकरं स्यात् न यजमानायैवाहितं भवति । तस्माद् यजमानस्यानायतनत्वं कामयमानोऽप्यात्मनोऽनर्थ-परिहारार्थं शंसेदेव । यजमानस्यानायतनत्वाय यत्नान्तरं कर्तव्यमिति भावः' इति भट्टभास्करः. 'ऋत्विजे होत्रेऽप्यहितं भ्रष्टे गते दक्षिणाया अलाभात्' इति सायणः.

कुतः,

॥ ऋत्विजि हि सर्वो यज्ञः प्रतिष्ठितो यज्ञे यजमानः ॥

प्रतिष्ठित इत्येव ॥

॥ तस्माच्छंस्तव्यः शंस्तव्यः ॥

इडभावश्छान्दसः । शंसितव्यः । द्विरुक्तिरुक्तार्था* ॥

अष्टमः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ सुखप्रदायां नवमोऽध्यायः[1] ॥

---

## अथ दशमोऽध्यायः ।

तूष्णींशंसनिवित्सूक्तैराज्यं[2] शस्त्रं त्रिपर्वकम्† ।
तूष्णींशंसः पूर्वमुक्तो निवित्सूक्ते ब्रवीत्यथ—

॥ ब्रह्म वा आहावः ॥

आहाव इति शोंसावोमित्यस्याख्येति वै विदुः ।
'शोंसावोमित्याह्वयत' इति खल्वत्र वक्ष्यते‡ ॥
ब्रह्म ब्राह्मणजातिः स्यात् तुल्यत्वं चादियोगतः ॥

---

१. 'इति ब्राह्मणव्याख्यायां नवमोऽध्यायः', २. 'सूक्तैराद्यं' ष. ड. पाठः,

---

* page 44. † 'तदुक्तं संप्रदायविद्भिः' इत्यवतारिकापुरस्सरं पद्यमिदमुद्धृतः सायणेन. ‡ ऐ० ब्रा० १२-१.

॥ क्षत्रं निवित्[*] ॥

द्वितीयत्वसाम्यात् ॥

॥ विट् सूक्तम्[†] ॥

तृतीयत्वसाम्यात् । विड् वैश्यजातिः ॥

तूष्णींशंस उपांशुत्वादुक्तत्वाद् गळितस्त्विह[1] ॥

॥ आह्वयतेऽथ निविदं दधाति[‡] । ब्रह्मण्येव तत् क्षत्रमनुनियुनक्ति ॥

राजजातिं विप्रजातौ संगतां निदधाति तत् ॥

॥ निविदं शस्त्वा सूक्तं शंसति ॥

ततः किं,

॥ क्षत्रं वै निविद् विट् सूक्तम् । क्षत्र एव तद् विशमनुनियुनक्ति ॥

वैश्यजातिं राजजातौ सङ्गतां निदधाति तत् ।
[§]स्वराद्यन्तोपसृष्टात् तङ् व्यत्ययान्न युजेरिह ॥

अथ काम्यमाह—

॥ यं कामयेत क्षत्रेणैनं व्यर्धयानीति मध्य एतस्यै निविदः सूक्तं शंसेत् ॥

---

1. 'उपांशुत्वमदसत्त्वाद् गर्भितस्त्विह' क. ख. पाठः

---

* अग्निर्देवेद्ध इति द्वादशपदा निवित्. † प्र वो देवायेति सप्तर्चं सूक्तम्.
‡ 'प्रथममाह्वयते शस्त्रादौ । अथ निविदं दधाति । यद्यपि तूष्णींशंसोऽप्याहावादनन्तरं शस्यते तथाप्याहावनिवित्सूक्तानामेवात्र पौर्वापर्यमुच्यते वर्णत्रयसंस्तुतत्वात्' इति गोविन्दस्वामी. § पा० सू० वा० १-३-६४.

यं यजमानं होतैवमिच्छेद्—एनं क्षत्रेण *विश्लिष्टं करवाणीति, तदा सः । इत्यो के ।

निविदोऽस्याः पदानां वै मध्ये शंसेत्तु सूक्तकम् ॥

॥ क्षत्रं वै निविद् विट् सूक्तम् । क्षत्रेणैवैनं तद् व्यर्धयति ॥

तथा,

॥ यं कामयेत विशैनं व्यर्धयानीति मध्य एतस्य सूक्तस्य निविदं शंसेत् । क्षत्रं वै निविद् विट् सूक्तम् । विशैवैनं तद् व्यर्धयति ॥

विशा वैश्यजात्या ॥

॥ यमु कामयेत सर्वमेवास्य यथापूर्वमृजु क्लृप्तं स्यादिति ॥

†ऋजु साधु क्लृप्तं सङ्गतम् । ‡उ पुनः । अस्य यष्टुः ॥

तदा,

॥ आह्वयेताथ निविदं दध्यादथ सूक्तं शंसेत् सो सर्वस्य क्लृप्तिः ॥

§सा उ खलु सर्वस्य[1] यष्टुः क्लृप्तिः प्रकारः ॥

---

1. 'सर्वस्य क्लृप्तिः' ब. ह. पाठः.

---

* 'क्षुद्रं वियुक्तं विरोधिनम्' इति सायणः. 'ऋद्धिदानि आपयानि' इति भट्टभास्करः. † 'ऋजु सकलम् अञ्जसा क्लृप्तं यथोपन्नरक्लृप्तम्' इति गोविन्दस्वामी. 'ऋजुना अगलेनैव विघ्नातिक्रमेण वा' इति भट्टभास्करः. ‡ 'पूर्वोक्तस्य द्वेष्यस्य यजमानस्य व्यावृत्त्यर्थ उशब्दः' इति सायणः. § 'सा क्लृप्तिर्भवति । उ इत्यनर्थकम् । यद्वा सो इत्येकं पदं तस्यापि स एवार्थः' इति गोविन्दस्वामी.

अथास्यां निविदीतिहासमाह—

॥ प्रजापतिर्वा इदमेक एवाग्र आस ॥

इदं जगत् सर्वमग्रे प्रजापतिरभूत् पुरा ॥

॥ सोऽकामयत ॥

कथं,

॥ प्रजायेय ॥

प्रजातः स्याम् । लिङ् *'जनिजनोर्जा' । †'इटोऽत्' ॥

व्याचष्टे—

॥ भूयान् स्यामिति ॥

ईयसुनि ‡'बहोर्लोपो भू च—' ॥

॥ स तपोऽतप्यत ॥

§नियमेषु तपश्शब्दः । तपिरार्जने । शपः श्यन् । अतपत् आर्जितवान् ॥

॥ स वाचमयच्छत् ॥

वाग्यमनं कृतवान् ॥

॥ स संवत्सरस्य परस्ताद् व्याहरद् द्वादशकृत्वः ॥

अब्दादूर्ध्वं द्वादश वारान् वाचमुक्तवान् ॥

॥ द्वादशपदा वा एषा निवित् ॥

---

* पा० सू० ७-३-७९. † पा० सू० ३-४-१०६. ‡ पा० सू० ६-४-१५८. § तथाचापस्तम्बधर्मसूत्रं 'नियमेषु तपश्शब्दः' इति. प्र० १. पट० २. सू० १.

ततः किम्,

॥ एतां वाव तां निविदं व्याहरत्। तां सर्वाणि
भूतान्यन्वसृज्यन्त ॥

तां निविदमनु तेनासृज्यन्त । भूतानि सृष्टानि ॥
उक्त्वा तु निविदं देवो जगत् सर्वं ससर्ज ह ॥

॥ तदेतदृषिः पश्यन्नभ्यनूवाच ॥

*ऋषिर्मन्त्रस्तद्दर्शी वा ॥

॥ †स पूर्वया निविदा कव्यतायोरिमाः प्रजा
अजनयन्मनूनामिति ॥

स प्रजापतिः पूर्वया आदिकालप्रवृत्तया निविदा ‡कव्यता कान्तदर्शिन्या । आयोरायुष्मतीः, मतुप्सकारयोर्लोपः । शसो ङसिः । इमाः स्थावरजङ्गमात्मिकाः प्रजाः अजनयदुत्पादितवान् । मनूनां मनुष्यजातीनाम् । उपभोगार्थमिति शेषः ॥

॥ तद्यदेतां पुरस्तात् सूक्तस्य निविदं दधाति प्रजात्यै ॥

दधाति यत् प्रजात्यै तत् स्यात् ॥

॥ प्रजायते प्रजया पशुभिर्य एवं वेद ॥

सः ॥

प्रथमः खण्डः ।

---

* 'कुत्स ऋषिः' इति गोविन्दस्वामिसायणौ. † ऋक्सं० १–७–३–२.
‡ 'कव्यता कवित्वं शब्दलक्षणमायोरागतवान् प्राप्तवानित्यर्थः । तत ऊर्ध्वं मनूनां वैवस्वतादीनां सम्बन्धिनीरिमा ब्राह्मणक्षत्रियादिरूपाः प्रजा अजनयत्' इति सायणः.

*अथ सूर्याग्निवातेषु पदानां तु त्रिकं त्रिकम् ।
क्रमेण योजयन्नेतां निविदं संप्रशंसति—

॥ अग्निर्देवेद्ध इति शंसति ॥

होतेति शेषः । आहुर्हि—

"निविदो द्वादशार्येष्टौ षोळशिन्युत्तमा स्थिता ।
अग्निष्टोमे दशैताश्च होत्रा वाच्या न चेतरैः ॥"

इति। अर्थस्तु—इष्टौ दर्शपूर्णमासयोराद्या निविद् 'देवेद्धो मन्विद्ध' इति चतुर्दशपदा । उत्तमा 'अस्य मदे जरित'रित्येका । आज्ये मरुत्वतीये निष्केवल्ये चेति तिस्रः । वैश्वदेवे चतस्रः । आग्निमारुते तिस्रः । इति निविदो द्वादश† । आसां च वक्ता होतैवेति ॥

व्याचष्टे—

॥ असौ वा अग्निर्देवेद्धः ॥

असौ सूर्यः । ‡अग्निः, आगन्ता सर्वकार्यार्थम् । §'अगेर्निर्नलोपश्च' । ¶देवैरिन्द्राद्यैः इद्धो दीप्तः ॥

---

* 'अत्र चत्वारः पर्यायाः । एकैकस्मिन् पर्याये तिस्रस्तिस्रो देवताः । क्षित्यन्तरिक्षद्युस्थानामग्निर्वायुः सूर्य इति । इह तु सूर्योऽग्निर्वायुरिति क्रमः' इति गोविन्दस्वामी. 'अत्र चत्वारः पर्यायाः । तत्रैकैकस्मिन् पर्याये तिस्रस्तिस्रो निविदस्तिस्रश्च देवता द्युपृथिव्यन्तरिक्षस्थाः सूर्याग्निवायवः प्रतिपर्यायमावर्तन्ते । तत्रादश्शब्दो द्युलोकवर्तिसूर्यविषयो द्रष्टव्यः । एतच्छब्दोऽपि तत्पर्यायः । इदंशब्दस्तु भूलोकवर्तिवह्निविषयो भूलोकविषयश्च । वाय्वन्तरिक्षे तु स्वशब्देनैवोच्येते सर्वत्र ब्राह्मणेन इति द्रष्टव्यम्' इति भट्टभास्करः. † अत्र च आश्वलायनश्रौते १-३-६; ५-९-१२; ५-१४-२०; ५-१५-२२; ५-१८-७, ८; ६-२-१० सूत्राणि द्रष्टव्यानि. ‡ 'अग्निशब्दो योगादादित्ये वर्तते । अग्निः सर्वदा गच्छत्यादित्यः अतोऽग्निरादित्य उच्यते' इति गोविन्दस्वामी. § उणादिसू० ४-५१. ¶ 'देवैः प्राणैर्देवनशीलैर्वा रश्मिभिः' इति भट्टभास्करः.

तदाह—

॥ एतं हि देवा इन्धते ॥

इन्धेः *'श्नान्नलोपः' †'श्नसोरल्लोपः'। दीपयन्ति ॥

॥ एतमेव तदेतस्मिँल्लोक आयातयति ॥

एतस्मिन् द्युलोके वर्तमानम् ‡आयातयति सम्यक् प्रशंसति ॥

॥ अग्निर्मन्विद्ध इति शंसति । अयं वा अग्निर्मन्विद्धः ॥

मनवो मनुष्याः ॥

तदाह—

॥ इम हि मनुष्या इन्धते । अग्निमेव तदस्मिँल्लोक आयातयति ॥

अस्मिन् भूलोके ॥

॥ अग्निः सुषमिदित्ति शंसति । वायुर्वा अग्निः सुषमित् ॥

सुषमिद् इति व्याचष्टे—

॥ वायुर्हि स्वयमात्मानं समिन्धे स्वयमिदं सर्वं यदिदं किञ्च ॥

वायुः प्रकाशयति हि स्वात्मानं जगता सह ।
§इदं सर्वमिति व्याचष्टे—यदिदं किञ्चेति ॥

---

* पा० सू० ६-४-२३. † पा० सू० ६-४-१११. ‡ 'आयातयति आनयति' इति गोविन्दस्वामी. 'प्रजारक्षणार्थं सर्वतो यजमानं करोति' इति भट्टभास्करः. 'आदित्यरूपं प्रकाशम् आयातयति प्रसारयति' इति सायणः. § 'स्वयमिदं सर्वमित्यादि । यदिदं परिदृश्यमानं स्थावरजङ्गमं वा किञ्चिदपि इदं खलु सर्वमपि स्वप्रकाशाधीनात्मलाभं यदि प्रकाशते ततः सर्वं स्यात् । अप्रकाशमानमसदेव । स्वयमित्यस्यार्थे सुशब्दः । आहुश्च — आत्मलाभे च भावानां कारणापेक्षिता भवेत् । लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥ इति' इति भट्टभास्करः.

॥ वायुमेव तदन्तरिक्षलोक आयातयति ॥

व्यक्तम् ॥

॥ होता देववृत इति शंसति । असौ वै होता देववृतः* ॥

कथम्,

॥ एष हि सर्वतो देवैर्वृतः ॥

सेवितः ॥

॥ एतमेव तदेतस्मिँल्लोक आयातयति ।

होता मनुवृत इति शंसति । अयं वा अग्निर्होता मनुवृतः ॥

कथम्,

॥ अयं हि सर्वतो मनुष्यैर्वृतः† । अग्निमेव तदस्मिँल्लोक आयातयति ।

प्रणीर्यज्ञानामिति शंसति । वायुर्वै प्रणीर्यज्ञानाम् ॥

प्रकर्षेण नयतीति प्रणीः[1] ॥

कथं,

॥ ‡यदा हि प्राणित्यथ यज्ञोऽथाग्निहोत्रम् ॥

---

1. 'प्रणीः ॥ यदा' घ. ङ. पाठः.

---

* 'असौ खलु सूर्यो होता रसानामादाता देवै रश्मिभिर्वृतः' इति भट्टभास्करः. 'स्वोदयास्तमयाभ्यां सायंप्रातर्होमनिमित्तत्वेन होता स वै द्युलोके वर्तमानत्वाद् देवैर्वृतः' इति सायणः. 'होता ह्वनयोगाद् देवैः सर्वदा वृत आदित्यः' इति गोविन्दस्वामी.
† 'वैश्वानरो वा एष आत्मन्यन्तर्वसति इति श्रुतेः सर्वदा मनुष्यैः परिवृतः' इति गोविन्दस्वामी. ‡ 'यदाहीत्यादि । यदा खलु वायुः प्राणिति प्राणयति जनान् । अन्तर्णीतण्यर्थोऽनितिर्द्रष्टव्यः । यद्वा, यदा प्राणिति बलवान् भवति तदा खल्वयं प्रणीर्भवति । अधुना प्रकृत्यर्थ एवानितिर्द्रष्टव्यः' इति भट्टभास्करः.

अथ तदा। 'श्वस प्राणने'। 'अन च'। *'रुदादिभ्यः सार्वधातुके' इति तिप इट्। †'अनितेः' इति णत्वम् ॥

॥ वायुमेव तदन्तरिक्षलोक आयातयति ।

रथीरध्वराणामिति शंसति । असौ वै रथीरध्वराणाम् ॥

‡मत्वर्थ ईकारः । रथारूढो रथीः ॥

कथम्,

॥ एष हि यथैतच्चरति रथीरिव[1] ॥

एतत् क्लिुक्, एतस्मिँल्लोके[2]§ । इव एव । यथा रथीश्चरति एष तथा ॥

॥ एतमेव तदेतस्मिँल्लोक आयातयति ।

अतूर्तो होतेति शंसति । अयं वा अग्निरतूर्तो होता ॥

¶अतूर्तः अहिंसितः । तुर्वतेः क्तः । $'राल्लोपः' ॥

व्याचष्टे—

॥ इमं ह न कश्चन तिर्यञ्चं तरति ॥

तिर्यञ्चं तु तिरश्चीनज्वालामालासमाकुलम् ।
इमं लोके कश्चिदपि न तरत्यभिहन्ति वै ॥

---

१. 'रथीरिव । क्लिुक्', २. 'एतस्मिन् काले' घ. ङ. पाठः.

---

* पा० सू० ७-२-७६. † पा० सू० ८-४-१९. ‡ पा० सू० वा० ५-२-१०९. 'रथीः रेफश्छान्दसः' इति गोविन्दस्वामी. § 'एतद् गन्तव्यस्थानं प्रति' इति सायणः. ¶ 'अतूर्तः अतिक्रमितुमशक्यः' इति भट्टभास्करः. 'केनाप्यतीर्णः' इति सायणः. 'तरणायोगादतूर्तत्वम्' इति गोविन्दस्वामी. $ पा० सू० ६-४-२१.

॥ अग्निमेव तदस्मिँल्लोक आयातयति ।
तूर्णिर्हव्यवाळिति शंसति । वायुर्वै तूर्णिर्हव्यवाट् ॥

तूर्णिः क्षिप्रगामी । हव्यवाट् *'वहश्च' इति ण्विः । हविर्वोढा ॥

कथं,

॥ वायुर्हीदं सर्वं सद्यस्तरति यदिदं किञ्च ॥

तरति अतिक्रामति । सद्यः समान एवाहनि । इति तूर्णित्वम् ॥

॥ वायुर्देवेभ्यो हव्यं वहति ॥

वायुना प्रेरितो ह्यग्निरितोऽमुं प्रापयेद्धविः ।
इति हव्यवाट्त्वम् ॥

॥ वायुमेव तदन्तरिक्षलोक आयातयति ।
आ देवो देवान् वक्षदिति शंसति । असौ वै देवो देवानावहति ॥

उद्यन् सूर्यस्तथास्त्वं यन् यज्ञादीनां प्रवर्तकः† ।
आवक्षदावहेत् ॥

॥ एतमेव तदेतस्मिँल्लोक आयातयति ।
यक्षदग्निर्देवो देवानिति शंसति ।
अयं वा अग्निर्देवो देवान् यजति ॥

अग्निर्होता हि देवानां मानुषस्तदधिष्ठितः ॥

॥ अग्निमेव तदस्मिँल्लोक आयातयति ॥

---

* पा० सू० ३-२-६४. † 'सूर्यः खलु देवो दीप्यमानः सन् देवान् यष्टव्यान् यज्ञेष्वावहति आगमयति । सूर्ये उदिते सवनानामारम्भात्' इति भट्टभास्करः.

॥ सो अध्वरा करति जातवेदा इति शंसति । वायुर्वै जातवेदाः ॥

*विदिः कृञर्थः ॥

॥ वायुर्हीदं सर्वं करोति यदिदं किञ्च ॥

वायुः सदा जगत् सर्वं चेष्टायुक्तं करोति वै ॥

॥ वायुमेव तदन्तरिक्षलोक आयातयति ॥

इत्थं सूर्याग्निवायूंस्त्रीनाश्रित्य निविदीरिता ॥

द्वितीयः खण्डः ।

---

अथाज्यसूक्त आचार्यो[1] विग्रहं त्वाद्यपादयोः ।

तृतीयान्तिमयोश्चैक्यं रोचयन् प्रब्रवीति ह—

॥ †प्र वो देवायाग्नय इत्यनुष्टुभः प्रथमे पदे विहरति ॥

‡प्रेत्यानुष्टुभसप्तर्चप्रथमायास्तु ये पदे ।

विहरेत् ते पृथक् कुर्यात् ततो द्वे श्लेषयेत् पदे ॥

अवसाय त्वनुच्छ्वस्य वचनं विहृतोच्यते ॥

॥ तस्मात् स्त्र्यूरू विहरति ॥

स्त्री सम्भोगपरा ह्यूर्ध्वाधःशयाना रतार्थिने ।

ऊरू पृथक् करोतीह तस्मादर्थस्तथास्त्विति ॥

§'या न ऊरू उशती'ति सूर्यासूक्तेऽध्यगीष्महि ॥

---

१. 'सूक्तसाद्यागाम्' च. छ. पाठः

---

* 'जातवेदाः जातधनः धनानामुत्पत्तिहेतुः' इति भट्टभास्करः. 'उच्छ्वासनिःश्वासप्रदानेन जातं प्राणिनं वेदयति जीवनयुक्तत्वेन ज्ञापयति' इति सायणः. † ऋक्सं० ३-१-१२-१. ‡ 'प्र वः सप्त ऋषभस्त्वानुष्टुभम्' इति सर्वानुक्रमणी म० ३ सू० १३. § ऋक्सं० ८-३-२७-२.

॥ समस्यत्युत्तरे पदे ॥

तृतीयं च चतुर्थं च पदे सङ्गमयेदुभे ॥

॥ तस्मात् पुमानूरू समस्यति ॥

पुमान् शयान उपरि स्यादूरू श्लेषयत्यपि ।
*'न सेशे यस्य रम्बते' †'न सेशे यस्य रोमशम्' ॥
‡'कपृन्नरः कपृथमुद्' ति तिस्रोऽध्यगीष्महि ॥

॥ तन्मिथुनम् ॥

तत् पृथक्त्वैक्ययुगळं स्त्रीपुंसयुगळं खलु ॥

॥ मिथुनमेव तदुक्थमुखे करोति ॥

तत् तेन । उक्थमुखे शस्त्रादौ ॥

॥ प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद ॥

सः ११

पुनः स्तौति—

॥ प्र वो देवायाग्नय इत्येवानुष्टुभः प्रथमे पदे विहरति ॥

§एव पुनः ॥

॥ वज्रमेव तत् परोवरीयांसं करोति ॥

तत् तेन वज्रं शस्त्रम् उत्तरोत्तरस्थूलम् ॥

---

* ऋक्सं० ८-४-४-१. † ऋक्सं० ८-४-४-२. ‡ ऋक्सं० ८-५-१६-६.
§ 'इत्येवानुष्टुभ इति योऽयमेवकारः स पूर्वस्यैवानुवादः नतु नूतनविधिरिति ज्ञापनार्थः' इति सायणः. 'उक्त एव शंसनविशेषे वर्णकान्तरं क्रियते इति प्रदर्शयितुमेवकारः' इति भट्टभास्करः.

॥ समस्यत्येवोत्तरे पदे ॥

एव पुनः ॥

॥ आरम्भणतो वै वज्रस्याणिमा ॥

*आदावणुत्वं वज्रस्य शङ्कुलादेर्हि[1] दृश्यते ॥

॥ अथो दण्डस्य ॥

आरम्भणतोऽणिमेत्येव ॥

॥ अथो परशोः ॥

पूर्ववत् ॥

अणुत्वव्दादिमनिचा[†] टिलोपेनाणिमा पुमान् ॥

॥ वज्रमेव तत् प्रहरति द्विषते भ्रातृव्याय वधं योऽस्य स्तृत्यस्तस्मै स्तर्तवै ॥

‡उक्तार्थम् ॥

तृतीयः खण्डः ।

---

1. 'शङ्कुलादौ हि' प. इ. पाठः.

---

* 'आरम्भणतो वै वज्रस्याणिमाथो दण्डस्याथो परशोः । एतदुक्तं भवति—वज्रस्यादिरणीयान् ततः स्थूलं मध्यम् । ततोऽपि स्थूलमन्तम्' इति गोविन्दस्वामी. 'वज्रस्य दण्डभागस्यात्वारम्भणे आरम्भे हस्तग्रहणप्रदेशेऽणिमा अणुत्वं भवति । अथो अनन्तरं दण्डभागस्यान्योन्योऽणिमा पूर्वस्माद्धलो भवति । अथो तदनन्तरं च परशोः आस्यप्रदेशस्यान्योऽणिमा ततोऽप्यूनो भवति । यदा चाणिमा उपर्युपरि क्षीयते तदा चोपर्युपरि वरिमा भवति वज्रस्य' इति भट्टभास्करः. 'वज्रशब्देन खड्गादिरूपमायुधमभिधीयते । दण्डशब्देन गदा विवक्षिता । परशुरपि तथाविधः । यथा अयं त्रिविधो वज्रः, एवमिदमपि सूक्तम्' इति सायणः. † पा० सू० ५-१-१२३. ‡ pages 202 & 203.

अथाग्नीध्रीयवासार्दसिद्धौ प्राह कथां शुभाम्—

॥ देवासुरा वा एषु लोकेषु समयतन्त ॥

*उक्तार्थम् ॥

॥ ते वै देवाः सद एवायतनमकुर्वत ॥

सदःप्रदेशं रक्षार्थस्थानं चक्रुः पुरा सुराः ॥

॥ तान् सदसोऽजयन् ॥

आद्रावयन् सदोदेशात् सुरांस्तानसुरा अपि ॥

॥ त आग्नीध्रं सम्प्रापद्यन्त ॥

सदसो द्राविता देवा आग्नीध्रीयं समाश्रिताः ॥

॥ ते ततो न पराजयन्त ॥

ततः आग्नीध्रीयात् । पराजयः प्रच्युतिः ॥

॥ तस्मादाग्नीध्र उपवसन्ति न सदसि ॥

†अतस्त्यक्त्वा सदः सर्वे आग्नीध्रीये वसन्ति हि ॥

॥ आग्नीध्रे ह्यधारयन्त ॥

हि यस्मात् ।

‡अग्नीधः शरणे रण् भत्वं चेत्याग्नीध्रनिर्वचः ॥

---

* page 93. † 'आग्नीध्र एतां रात्रिमृत्विजो वसन्ति' इति आप० श्रौ० सू० ११-२१-१३. ‡ पा० सू० वा० ४-३-१२०. 'प्रयाजादिप्रवानेनाग्नेरिन्धका देवा ध्रियन्तेऽस्मिन्निर्त्याग्नीध्रम् । घञर्थे कविधानमित्यधिकरणे कः । इन्धेः क्विप् अग्नीधमेवाग्नीध्रः स्वार्थिकोऽण् । वर्णव्यत्ययेन वाकारस्य दीर्घत्वम् । तदिदानीमाग्नीध्रस्याग्नीध्रत्वम् । अग्नीधः शरणे रण् भत्वं चेत्येतदनाश्रित्यैवमुक्तम्' इति भट्टभास्करः.

॥ यदाग्नीध्रेऽधारयन्त तदाग्नीध्रस्याग्नीध्रत्वम्[1] ॥

किञ्च,

॥ तेषां वै देवानामसुराः सदस्यानग्नीन् निर्वापयांचक्रुः ॥

सदसि भवान् धिष्ण्यानग्नीन् ।

वापेरां णिचि शान्त्यर्थात् पुक् कृञ्चानुप्रयुज्यते* ।

अशमयन् ॥

॥ ते देवा आग्नीध्रादेव सदस्यानग्नीन् विहरन्त† ॥

सदस्यादिषु दैत्यैर्वै नाशितेषु ततः सुराः ।
आग्नीध्राद् व्यहरन्नग्नीन् हृष्टो लब्ध्वा न तद् व्रितः ॥

॥ तैरसुररक्षांस्यपाघ्नत ॥

तैराग्नीध्राद् प्रणीतैः ॥

॥ तथैवैतद् यजमाना आग्नीध्रादेव सदस्यानग्नीन्
विहरन्ति ॥

एतदेतर्हि ॥

॥ असुररक्षांस्येव तदपघ्नते ॥

तत् तैः । अग्निभिः ॥

---

१. 'आग्नीध्रत्वम् । तेषाम्' ग. ङ. पाठः.

---

* पा० सू० ३-१-४०. † 'देवा वै यज्ञं पराजयन्त तमाग्नीध्रात् पुनरपाजयन्नेतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदाग्नीध्राद् धिष्णियान् विहरति यदेव यज्ञस्यापराजितं तत एवैनं पुनस्तनुते' इति तै० सं० ६-३-१.

अथ स्तोत्रवाचिनमाज्यशब्दं निराह—

॥ ते वै प्रातराज्यैरेवाजयन्त आयन् ॥

ते देवाः प्रातः प्रातःसवने । *'पञ्चदशान्याज्यानि', चत्वारीति सामविदां प्रसिद्धेः । आ साधु । जयन्तः वशीकुर्वन्तः । आयन्नागच्छन् ॥

॥ यदाज्यैरेवाजयन्त आयंस्तदाज्यानामाज्यत्वम् ॥

क्षेपणार्थादजेराज्यमञ्जेर्वा निर्ब्रुवन्ति यत् ।
तत्र सुष्ठु जयार्थत्वादाङ्पूर्वाज्जेर्निरुच्यताम् ॥

इति भावः ॥

सदःप्रवेशे पश्चात्त्वमच्छावाकस्य चाह ह—

॥ तासां वै होत्राणामायतीनामाजयन्तीनामच्छा-
वाकीयाहीयत ॥

तासां सदःप्रवेशित्वेन प्रसिद्धानां ‡होत्राणामृत्विजां मध्ये । अच्छावाकीया । §'होत्राभ्यश्छः' स्वार्थे । अच्छावाको नाम होत्रको दुर्बलत्वादहीयत च्युतवान् । कर्तरि यक् ॥

---

* ताण्ड्यब्रा० २०-३-१. बहिष्पवमानसूक्तादनन्तरम् 'अग्न आयाहि' (उत्तरऋक् १-४) इत्यारभ्य गीयमानानि सूक्तान्याज्यस्तोत्राणि । तत्र प्रातःसवने चत्वारि । माध्यन्दिनसवने पञ्च । तृतीयसवने षट् इति पञ्चदश. † 'आङ्पूर्वाज्जयतेरजतेर्वा ण्यन्ताद्' इति गोविन्दस्वामी. ‡ 'वषट्कर्तारो होत्रादयो होत्राः । देवात्मानो होत्राः, मनुष्यात्मानो होत्रका इति केचित्' इति भट्टभास्करः. 'होत्रका यद्यपि पुरुषास्तथापि तदीय-तनुविवक्षया तासामित्यादिस्त्रीलिङ्गनिर्देशः । यास्तन्वः पूर्वमसुरानपाघ्नत तासामेव होत्राणां होत्रकतनूनाम्, अच्छावाकीया अच्छावाकसम्बन्धिनी तनूः' इति सायणः. § पा० सू० ५-१-१३५.

॥ तस्यामिन्द्राग्नी अध्यास्ताम् ॥

अभूतां स्थापकौ तस्या इन्द्राग्नी नाम देवते ।

अधि सम्यक् । ङसो ङि[*] ॥

कथं तयोः स्थापकत्वं नान्येषामत उच्यते—

॥ इन्द्राग्नी वै देवानामोजिष्ठौ बलिष्ठौ सहिष्ठौ सत्तमौ पारयिष्णुतमौ ॥

[†]ओजो दीप्तिर्बलं वीर्यं प्रसह्यकरणं सहः ।
गाम्भीर्यं सत् पारयिष्णुरुपक्रान्तसमाप्तिकृत् ॥
टिलोप इष्ठनि तमप् पारेर्णेश्छन्दसीष्णुचि[‡] ॥

॥ तस्मादैन्द्राग्नमच्छावाकः प्रातस्सवने शंसति ॥

तस्मात् तथाहि । इन्द्राग्निदेवत्यं शस्त्रम् । [§]'इन्द्राग्नी आगतम्' इत्यादि सूत्रितम्[¶] ॥

॥ इन्द्राग्नी हि तस्यामध्यास्ताम्[$] ॥

हि यस्मात् ॥

---

* 'अधिशीङ्स्थासां कर्मेत्यास्तेः सकर्मकत्वादस्यानुपादानाच्च द्वितीयार्थे सप्तमी द्रष्टव्या । इन्द्राग्नी हि तस्यामित्यत्राप्येवमेव' इति गोविन्दस्वामी. 'तस्यां तन्त्राम्' इति सायणः. † 'ओजिष्ठौ अतिशयेन देहबलवन्तौ बलिष्ठौ अतिशयेन बुद्धिबलवन्तौ सत्तमौ अतिशयेन समीचीनमती' इति भट्टभास्करः. 'ओजःशब्देन बाहुवीर्यमभिप्रेतं, सहःशब्देन प्रसह्यकारित्वं नाम बलम् । बलशब्दः काकाक्षिनिरीक्षणवदुभयत्र संबध्यते । सत्तमौ अतिशयेन सन्तौ' इति गोविन्दस्वामी. ‡ पा० सू० ३-२-१३७. § ऋक्सं० ३-१-१०-१. ¶ आ० श्रौ० सू० ५-१०-२८. $ 'अध्यास्ताम् अध्यासाताम् । आसेर्व्यत्ययेन परस्मैपदम् अधिशीङ्स्थासामिति कर्मसंज्ञाभावश्च । यद्वा अस्तेरिदं । स्वामित्वेन भवनमधिभवनम् । इन्द्राग्नी खलु तस्यामधि स्वामित्वेनास्तामभवताम् । अधिरीश्वर इति कर्मप्रवचनीयत्वाद् यस्मादधिकमिति सप्तमी' इति भट्टभास्करः.

॥ तस्माद्ध पुरस्तादन्ये होत्रकाः सदः प्रसर्पन्ति।
पश्चाच्छावाकः॥

प्रविशन्ति सदः पूर्वं हो पो नेऽग्नीद् ब्र च प्र पद्।
पश्चादर्थे *'पश्च पश्चा च च्छन्दसि' निपातितौ॥

॥ पश्चेव हि हीनोऽनु सञ्जिगमिषति॥

मन्दो हीनः पूर्वगतानतुगन्तुं किलेच्छति।

†'गमेरिट् परस्मैपदेषु'॥

॥ तस्माद्यो ब्राह्मणो बह्वृचो वीर्यवान् स्यात्
सोऽस्याच्छावाकीयां कुर्यात्॥

‡बह्वृचश्चरणाख्यायां वीर्यमुक्तिस्थपाटवम्॥

॥ तेनैव साहीना भवति॥

सा अच्छावाकीया। अहीना सुदृढा। तेन वीर्यवद्बह्वृचकर्तृकत्वेन[1]॥

चतुर्थः खण्डः।

---

१. 'बह्वृचवतकृत्वेन' प. ह. पाठः.

---

* पा० सू० ५-३-३३. † पा० सू० ७-२-५८. ‡ पा० सू० वा० ५-४-७४.

होतुः प्रथमशस्त्रं यदाज्यं तत् स्तोतुमाह इ—

॥ देवरथो वा एष यद्यज्ञः ॥

यत् यः ॥

रमन्तेऽत्र समारूढा *रमेः क्थन सुखदो रथः ।
देवार्थोऽयं तत्कृतो वा देववत् पूज्य एव वा ॥

॥ तस्यैतावन्तरौ रश्मी यदाज्यप्रउगे ॥

भवार्थेऽप्यायवृद्धिः स्यात्तान्तरौ मध्यवर्तिनौ† ।
यद्वे रश्मी तु रज्जू वै तस्य देवरथस्य इ ॥

॥ तद्यदाज्येन पवमानमनुशंसति प्रउगेणाज्यं देवरथस्यैव तदन्तरौ रश्मी विहरत्यलोभाय ॥

तत् तत्र पवमानं बहिष्पवमानम् । आज्येन प्रथमशस्त्रेण अनुशंसति यत् । यच्च प्रउगेण द्वितीयशस्त्रेण होतुराज्यं नाम स्तोत्रमनुशंसति । विहरति तत् सङ्गृह्णाति । अलोभाय अनाकुलत्वाय ॥

॥ तामनुकृतिं मनुष्यरथस्यैवान्तरौ रश्मी विहरन्त्यलोभाय ॥

तां कृतिमनु लक्षीकृत्य । विहरन्ति । रथस्य परिचारकाः ॥

॥ नास्य देवरथो लुभ्यति न मनुष्यरथो य एवं वेद ॥

अस्य वेदितुः । देवरथो यज्ञः । लुभिर्दिवादिः । व्याकुलो न स्यात् ॥

॥ तदाहुः ॥

---

* उणादिसू० २-२. † 'अन्तरौ अन्तरङ्गौ प्रधानोपकरणत्वात् । यद्वा प्रेरकत्वादन्तरालस्थानीयौ' इति भट्टभास्करः.

चोद्यस्वरूपमाह—

॥ यथा वाव स्तोत्रमेवं शस्त्रम् ॥

*'स्तुतमनु शंसति' इति श्रुतेः॥

ततः किम्,

॥ पावमानीषु सामगाः स्तुवत आग्नेयं होताऽऽज्यं शंसति कथमस्य पावमान्योऽनुशस्ता भवन्तीति ॥

†अस्य अनेन। ‡'प्र वो देवायाग्नय' इत्याग्नेयं सूक्तं शंसता कथमनुशस्ताः §'उपास्मै गायत' ¶'दविद्युतत्या' §'पवस्व' इत्यृचः पवमानदेवताः स्युः॥

परिहरति—

॥ यो वा अग्निः स पवमानः ॥

‡पवमानः शुद्धिकारी सर्वस्याग्निर्हि शोधकः॥

॥ तदप्येतदृषिणोक्तमग्निर्ऋषिः पवमान॥ इति। एवमु हास्याग्नेयीभिरेव प्रतिपद्यमानस्य पावमान्योऽनुशस्ता भवन्ति[1] ॥

एवमुह एवञ्च सति। आग्नेयीभिः शस्त्रोभिम्‖। प्रतिपादिः शंसनार्थः। अग्निदेवत्याः शंसतानेन॥

किञ्च,

॥ तदाहुर्यथा वाव स्तोत्रमेवं शस्त्रम् ॥

१. 'भवन्तीति' घ. ङ. पाठः.

* ऐ॰ ब्रा॰ २४-४. 'स्तोत्रमग्रे शस्त्रात्' इति आ॰ श्रौ॰ सू॰ ५-१०-१. † 'अस्य होतुः' इति सायणः. ‡ ऋक्सं॰ ३-१-१३-१. § ऋक्सं॰ ६-७-३६-१. ¶ ऋक्सं॰ ७-१-४१-३. § ऋक्सं॰ ७-२-७-१. ‡ 'योऽयमग्निः स एव पवमानो वायुः श्रोत्रविशयेनैकत्वप्रतिभासात्। यद्वा शोधकत्वादग्निरेव पवमान इति मन्त्रार्थः' इति सायणः. ॥ ऋक्सं॰ ७-२-१०-५. ‖ 'अग्निदेवताकाभिः सूक्तगताभिः ऋग्भिः' इति सायणः.

ततः किं,

॥ गायत्रीषु सामगाः स्तुवत आनुष्टुभं होताज्यं शंसति
कथमस्य गायत्र्योऽनुशस्ता भवन्तीति ॥

आनुष्टुभं प्रवः सप्त गायत्र्यथाप्युपा नव ।

आनुष्टुभमिति । *उत्साद्यण् । उक्तं हि—

"अनुष्टुबुष्णिक् त्रिष्टुप् च जगती पङ्क्तिरेव च ।
उत्सादित्वादणेभ्यः[1] स्यादीव्यतः प्रागणन्यतः ॥
उक्ताद्युत्कृतिपर्यन्तच्छन्दसस्सविशेषकात् ।
स्वार्थे तु सर्वतस्त्वण् स्यादिति शब्दविदो विदुः ॥" इति ॥

परिहरति—

॥ सम्पदेति ब्रूयात् ॥

चोदकान् प्रति ॥

कथं,

॥ सप्तैता अनुष्टुभः ॥

†'प्रवः सप्त ऋषभस्त्वानुष्टुभम्' इति हि सर्वानुक्रमणी ॥

॥ तास्त्रिः प्रथमया त्रिरुत्तमयैकादश भवन्ति ॥

सप्तसु चतुराधिक्यात् ॥

॥ विराड् याज्या द्वादशी ॥

विपरिणामेनानुष्टुबित्स्येव ।

---

1. 'उत्सादिः स्यादणेभ्यः' क. ख. पाठः.

---

* पा० सू० ४-१-८६. † म० ३. सू० १३.

नन्वत्र इन्द्रश्चे[1]त्येषा ह्यधिकत्रिंशदक्षरा ।
कथमस्या अनुष्टुप्त्वमत उत्तरमुच्यते—

॥ नवा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम् ॥

ह्येकवर्णाधिकोनत्वे छन्दसो नान्यथा खलु ॥

॥ ताः षोळश गायत्र्यो भवन्ति ॥

ता द्वादशानुष्टुभः स्युर्गायत्र्यः षोडशैव हि ।
कथं स्यादेवमिति चेत् सम्पत्तिः[2] श्रूयतामियम् ।
प्रातिशाख्यनिदानादौ प्रोक्ता श्रुतिषु सम्मता ॥

"छन्दस्तुरीयेण समानसंख्या याश्छन्दसोऽन्यस्य भवन्त्यृचोऽन्याः ।
यावत्तुरीयं भवति स्वमासां तावत्य एता इतरा भवन्ति ॥"

इति प्रातिशाख्ये[†] ।

*"यस्य कस्यचिच्छन्दसः सम्पदं कश्चिदिच्छति ।
चतुर्थं तस्य संख्याय तावतीराहरेदृचः ॥
यदुतच्छन्द आहरेदन्यदन्यस्य सम्पदे ।
चतुर्थं तस्य संख्याय विद्यात्तास्तावतीर्ऋचः ॥"

इति छन्दोगनिदाने[‡] ॥

"गायत्र्यादिच्छन्दसां सम्पदुक्तौ यत्तुच्छन्दः प्रेप्स्यते[2] येन तत्र ।
तुर्यान् वर्णान् प्रगणय्योभयत्र ह्यगायत्र्यस्तोष्णिहश्चेति विद्यात् ॥

---

१. 'संप्रति' घ ङ. पाठः. २. 'प्रोच्यते' क ख. पाठः.

---

* ऋक्सं० ३-१-२५-४. † पट० १८. वाराणस्यां मुद्रिते पुस्तके पद्यमिदं पठितम्. ‡ निदानगतच्छन्दोविचितौ पट० २. ख० २.

द गायत्र्योऽनुष्टुभस्तो द चोष्णिक् यानुष्टुभश्चैवमेवा जगत्याः ।
एवं कृत्वा द्वादशानुष्टुभः स्युर्गायत्र्यो वै षोळशेत्यादिसिद्धिः ॥
महाव्रते बृहतीनां सहस्रं निष्केवल्ये सम्पदा प्राप्यते हि ।
कश्छन्दसां योगमावेद धीर इति स्तुता मन्त्रतः सम्पदेषा ॥"

इति बृहद्देवताशेषे । अत्र च,

षद् त सप्त थ दाष्टौ तु संख्या कटपयादिना ।
गायत्र्यः सप्तोष्णिहः षळित्याद्यर्थोऽत्र गृह्यताम् ॥

सूत्र्यते हि चतुर्थारण्यके[*]— 'सप्त सप्त गायत्र्यः षट् षळुष्णिहो भवन्ति' इति ॥

॥ एवमुहास्यानुष्टुब्भिरेव प्रतिपद्यमानस्य गायत्र्यो-
ऽनुशस्ता भवन्ति ॥

पूर्ववत् ॥

॥ [†]अग्न इन्द्रश्च दाशुषो दुरोण इत्याग्नेन्द्र्या यजति ॥

उत्तरपदवृद्धिर्नेन्द्रस्य परस्य[‡] इति ॥

स्तौति—

॥ नवा एताविन्द्राग्नी सन्तौ व्यजयेतामाग्नेन्द्रौ[§]
वा एतौ सन्तौ व्यजयेताम् ॥

[¶]'विपराभ्यां जेः' इति तङ् । स्वार्थिकोऽण् ।

---

* ऐ० आ० ५-२-५. मुद्रितग्रन्थरीत्या (Asiatic Society) पञ्चमारण्यकमिदम्. † ऋग्वे० ३-१-२५-४. ‡ पा० सू० ७-३-२२. § अग्नीन्द्राविन्द्रापि पाठमाह भट्टभास्करः । तथाचाह—'अग्नीन्द्रौ अग्निप्रधानौ अग्निपूर्वौ वा सन्तौ विजयिनावभूताम् । आग्नेन्द्राविति क्वचित् पाठः । तत्र स्वार्थिकोऽण्' इति. ¶ पा० सू० १-३-१९.

इन्द्रस्य प्राग्भवेनेन्द्र[1]पूर्वत्वे नाभवज्जयः।
जयोऽभूदग्निपूर्वत्वे क्रूरस्याग्नेर्हि दाहतः॥

॥ तद्यदाग्नेन्द्रया यजति विजित्या एव॥

यजति यत् तद् विजित्यै विजयाय स्यात्॥

॥ सा विराट् त्रयस्त्रिंशदक्षरा भवति॥

'दशकास्त्रयो विराट्। एकादशका वा' इति हि सर्वानुक्रमणी*॥

॥ त्रयस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च तत् प्रथम उक्थमुखे देवता अक्षरभाजः करोति॥

तत् तत्र॥

॥ अक्षरमक्षरमेव तद् देवता अनुप्रपिबन्ति॥

एकैकवर्णममृतसममास्वादयन्ति ताः।

तत् ताः॥

॥ देवपात्रेणैव तद्देवतास्तृप्यन्ति॥

पात्रेण पिबतेः ष्ट्रंस्तु† करणे पानहेतुना।
तत् तेन याज्यानुवाक्येन तृप्तियुक्ता भवन्ति च॥

॥ तदाहुः॥

---

१. 'प्राग्भवलेनेन्द्र' क. ङ. पाठः.

---

* परि॰ ६-७, ८. † उणादिसू॰ ४-१६०.

चोद्यस्वरूपमाह—

॥ यथा वाव शस्त्रमेवं याज्या ॥

शस्त्रतयाज्ययोः साम्यमुचितं हि श्रुतौ श्रुतम् ॥

ततः किम्,

॥ आग्नेयं होताऽऽज्यं शंसत्यथ कस्मादाग्नेन्द्र्या यजतीति ॥

अथ तथा सति, केवलाग्नि[1]देवत्या याज्या भवितुमर्हतीति भावः ॥

परिहरति—

॥ या वा आग्नेन्द्र्यैन्द्राग्नी वै सा ॥

वै खलु। वै एव।

नहि क्रमो वस्तुगतस्तदन्यत्वकृतौ क्षमः। इति भावः ॥

ततः किं,

॥ सेन्द्राग्नमेतदुक्थम् ॥

शस्त्रमुक्थं तदिन्द्राग्निदेवतायुगळान्वितम्।
*आद्यादृद्धिर्ज्योतिपवद् बहुव्रीहौ सहस्य सः† ॥
नन्वाग्नेयमिदं सूक्तमत उत्तरमुच्यते—

॥ ग्रहेण तूष्णींशंसेन च ॥

सेन्द्राग्नमित्येव ॥

---

१. 'तथा सति न केवलाग्नि' ख. ङ. पाठः.

---

* संज्ञापूर्वकविधित्वान्न वृद्धिरिति भावः. † पा० सू० ६-३-७८.

कथम्,

॥ [*]इन्द्राग्नी आगतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषितेत्यैन्द्राग्नमध्वर्युर्ग्रहं गृह्णाति[†] । भूरग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रस्सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति होता तूष्णींशंसं शंसति ॥

ततश्च,

॥ तद्यथैव शस्त्रमेवं याज्या ॥

तत् तेन, ऐन्द्राग्नत्वेन । एवं तथा ॥

पञ्चमः खण्डः ।

---

पराङ्मुखे समासीने त्वध्वर्यौ जप उच्यते[‡] ।
फलित्वरूपसम्पत्त्यै निषेकादि च वर्ण्यते—

॥ होतृजपं जपति ॥

सुमदित्यादिमन्त्रस्य नाम होतृजपस्त्विति ॥

॥ रेतस्तत् सिञ्चति ॥

तत् तेन ॥

॥ उपांशु जपति ॥

वर्णाभिव्यक्तिरहितमुच्चारणमुपांशु वै ॥

---

* ऋक्सं॰ ३-१-११-१. † 'अध्वर्युरैन्द्राग्नं गृह्णाति । इन्द्राग्नी आगतं सुतमिति ग्रहणसादनौ' इति आप॰ श्रौ॰ सू॰ १२-२५-८. ‡ 'पराङध्वर्यावावृत्ते सुमत्पद्वग्दे पिता मातरिश्वाच्छिद्रा पदा धाच्छिद्रोक्था कवयः शंसन् । सोमो विश्वविन्नीथा निनेषद् बृहस्पतिरुक्थामदानि शंसिषद् वागायुर्विश्वायुर्विश्वमायुः क इदं शंसिष्यति स इदं शंसिष्यतीति जपित्वाभिहिङ्कृत्य शोंसावोमित्युच्चैराहूय' इति आ॰ श्रौ॰ सू॰ ५-९-१.

॥ उपांश्विव वै रेतसः सिक्तिः ॥

इव एव ।

योनौ हि रेतसः सेकः[1] क्रियते गुप्तमेव तु ॥

॥ पुराह्नावाज्जपति ॥

कुत एवं,

॥ यद्वै किञ्चोर्ध्वमाह्नावाच्छस्त्रस्यैव तत् ॥

किञ्च किञ्चित् ।

आह्नावस्योपरिष्टाच्चेज्जपः शस्त्राङ्गतां व्रजेत् ॥

॥ पराङ्ङ् चतुष्पद्यासीनमभ्याह्वयते ॥

सैषा चतुष्पदी भूम्यां यदा हस्तौ च पादवत् ।
निहितौ तु तयासीनमध्वर्युं प्रति चाह्वयेत् ॥

एतच्च युक्तमित्याह—

॥ तस्मात् पराञ्चो भूत्वा चतुष्पादो रेतः सिञ्चन्ति ॥

तस्मात् तथाहि । चतुष्पादः पशवः । पराञ्चः अनभिमुखाः ॥

आह्नावादनन्तरमध्वर्युः,

॥ सम्यग् द्विपाद् भवति ॥

सम्यगभिमुखः । द्विपात् हस्तौ भूम्या आदत्ते ॥

॥ तस्मात् सम्यञ्चो भूत्वा द्विपादो रेतः सिञ्चन्ति ॥

द्विपादः मनुष्याः । सम्यञ्चोऽभिमुखाः । अञ्चतौ 'समः समि'* ॥

---

१. 'रेतस्संसेकः' च. छ. पाठः.

---

* पा॰ सू॰ ६-३-९३.

॥ पिता मातरिश्वेत्याह ॥

जपैकदेशम् ॥

अत्र,

॥ प्राणो वै पिता प्राणो मातरिश्वा प्राणो रेतः* ॥

ततः किं,

॥ रेतस्तत् सिञ्चति ॥

तत् तत्र ॥

॥ अच्छिद्रा पदा धा इति ॥

धादित्युच्चार्ये धा इति छान्दसः ॥

अत्र,

॥ रेतो वा अच्छिद्रम् ॥

कुतः,

॥ अतो ह्यच्छिद्रः सम्भवति ॥

अतः प्राणरूपाद् रेतसः । अच्छिद्रः पूर्णाङ्गः ॥

॥ अच्छिद्रोक्था कवयः शंसन्निति ॥

अत्र,

॥ ये वा अनूचानास्ते कवयः ॥

अनूचानाः सर्ववेदपाठार्थज्ञानसंयुताः ॥

---

* 'रेतश्च प्राणः प्राणयुक्तस्यैव रेतसो जननहेतुत्वात् । अत एवारण्यके समाम्नायते—'यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेत न संभवेत्' (ऐ० आ० ३-२-२) इति सायणः

॥ त इदमच्छिद्रं रेतः प्रजनयन्नित्येव तदाह ॥

ते कवयः क्रान्तदर्शनाः। जनयन्। लोटो लङ्व्यण्न। जनयतु ॥

रेतः सुतार्थं कर्वीनां प्रसादादिह वै भवेत्।

इति भावः ॥

सोमो विश्वविन्नीथा निनेषद् बृहस्पतिरुक्थामदानि शंसिषदिति ॥

व्याचष्टे—

॥ ब्रह्म वै बृहस्पतिः। क्षत्रं सोमः ॥

विप्रो बृहस्पतिः प्रोक्तः सोमः क्षत्रिय ईरितः* ।
अंशान्वयाद्धि सोमस्य क्षत्रत्वमिति वै विदुः ॥

"इन्द्रात् प्रभुत्वं ज्वलनात् प्रतापं क्रौर्यं यमात् सोमत एव सौम्यम्।
सत्त्वस्थिती रामजनार्दनाभ्यामादाय राज्ञां क्रियते शरीरम् ॥"

इति श्रीविष्णुधर्मे† भवति ॥

॥ स्तुतशस्त्राणि नीथानि चोक्थामदानि च ॥

नीथानीति स्तोत्रमुक्तं शस्त्रमुक्थामदेति च ॥

एवञ्च,

॥ दैवेन चैवैतद् ब्रह्मणा प्रसूतो दैवेन च क्षत्रेणोक्थानि शंसति ॥

एतदेतर्हि प्रसूतः अनुज्ञातः। उक्थानि शस्त्राणि ॥

---

* सोमस्य क्षत्रियत्वं 'तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इति शतपथब्राह्मणे (१४-४-२-२३) बृहदारण्यकोपनिषदि (१-४-११) चाम्नातम्. † अध्या० ६६ श्लो० ५.

कस्मादेवम्,

॥ एतौ ह वा अस्य सर्वस्य प्रसवस्येशाते यदिदं किञ्च ॥

प्रसवस्य । कर्मणि ओरप्* । अनुज्ञातव्यस्य । अस्य सर्वस्येति व्याचष्टे— यदिदं किञ्चेति । एतौ विप्रराजानौ । ईशाते ईश्वरौ भवतः ॥

तदनुज्ञा च प्रार्थ्येत्याह—

॥ तद्यदेताभ्यामप्रसूतः करोत्यकृतं तत् ॥

तत् तत्र । एताभ्यां विप्रराजभ्याम् । यत्कर्म करोति । अप्रसूतः अननुज्ञातः । अकृतं करणानर्हं तत् ॥

ततः किम्,

॥ अकृतमकरिति वै निन्दन्ति ॥

अकः अकार्षीः ॥

॥ कृतमस्य कृतं भवति नास्याकृतं कृतं भवति
य एवं वेद ॥

†अस्यानेन वेदित्रा ॥

कृतं कर्तव्यमेव स्यान्नैवाकृत्यं कृतं भवेत् ॥

॥ वागायुर्विश्वायुर्विश्वमायुरित्याह ॥

* पा० सू० ३-३-५७. † 'अस्य वेदितुः' इति सायणः.

व्याचष्टे—

॥ प्राणो वा आयुः । प्राणो रेतो वाग् योनिः ॥

शताब्दरूपमायुश्च प्राणास्थित्येह वै भवेत्* ।
†प्राणकार्यश्च रेतो वाग् योनिः संश्लेषकारिणी ॥
‡'वाचा मित्राणि संदधती'ति खल्वध्यगीष्महि ॥

॥ योनिं तदुपसंधाय रेतः सिञ्चति ॥

§उपसंधाय विहृत्य । तत् तत्र ॥

॥ क इदं शंसिष्यति स इदं शंसिष्यतीत्याह ॥

अत्र,

॥ ¶प्रजापतिर्वै कः ॥

ततश्च,

॥ प्रजापतिः प्रजनयिष्यतीत्येव तदाह ॥

शंसनस्य प्रजापतिहेतुत्वात् ॥

षष्ठः खण्डः ।

---

* 'आयुःशब्देन प्राण एव विवक्ष्यते 'यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः' (कौषी० उ० ३-२) इति श्रुतेः' इति सायणः. † 'प्राणो रेतः प्राणनहेतुत्वात् । योनिरेव वाक् सर्वार्थानां विकल्पमूलत्वात्' इति भट्टभास्करः. ‡ ऐ० आ० ३-१-६. § 'उपसन्धानमुपसंश्लेषः' इति भट्टभास्करः. 'योनिमुपसन्धाय गर्भस्थानमभिलक्ष्य' इति सायणः. 'शस्त्रस्य योनिभूतां वाचमुपसन्धाय मन्त्रेण रेतोभूतं यजमानं सिञ्चति' इति गोविन्दस्वामी. ¶ 'को ह वै नाम प्रजापतिः' इति तै० ब्रा० २-२-१०.

गुणाः केचिदथोच्यन्ते तूष्णींशंसे निविद्यपि—

॥ आहूय तूष्णींशंसं शंसति ॥

शोंसावों पूर्वमुक्त्वाथ भूरग्नीत्यादिकं वदेत्* ॥

॥ रेतस्तत् सिक्तं विकरोति ॥

यद्रेतः सिक्तमग्रे तद् गर्भस्थाने प्रवेशयेत् ।
गर्भाशयप्रवेशस्तु विपूर्वेण कृत्रोच्यते† ॥

॥ सिक्तिर्वा अग्रेऽथ विकृतिः ॥

योनौ प्राग्रेतसः सेकः प्राप्तिर्गर्भाशये ततः ॥

॥ उपांशु तूष्णींशंसं शंसति । उपांश्विव वै रेतसः सिक्तिः ॥

इव एव ॥

॥ तिर इव तूष्णींशंसं शंसति ॥

तिरः जपात् किञ्चिदुच्चैः ॥

॥ तिर इव वै रेतांसि विक्रियन्ते ॥

ओर्यकि लद्[1](?) । विकुर्वन्ति ।

रेतांसि मातुरुदरे[2] किञ्चिदुच्छ्रनयन्ति वै ॥

किञ्च,

॥ षट्पदं तूष्णींशंसं शंसति ॥

---

१. 'लद् । रेतांसि', २. 'मातुरुदरं' घ. ङ. पाठः.

---

* 'शोंसावोमित्युच्चैराहूय तूष्णींशंसं शंसेदुपांशु सप्रणवमसन्तन्वन्' इति आ० श्रौ० सू० ५-५-१. † 'देहत्वेन परिणामो विकारः' इति महभास्करः.

ज्योतिश्शब्दैरग्रभूतैरवसाने पदानि षट् ।

सूत्र्यते हि—*'यद्यु वै षट्पदः पूर्वैर्ज्योतिश्शब्दैरग्रेऽवस्येद्' इति ॥

॥ षड्विधो वै पुरुषः ॥

लोमानि त्वङ्मांसमस्थि सिरा मज्जेति षड्विधाः ॥

॥ षळङ्गः ॥

पुरुष इत्येव ।

†पाणिपादमुखघ्राणनेत्रश्रोत्रैः षळङ्गता ॥

॥ आत्मानमेव तत् षड्विधं षळङ्गं विकरोति ॥

जननार्हं तु वृद्धत्वं विकार इह कथ्यते ॥

॥ तूष्णींशंसं शस्त्वा पुरोरुचं शंसति ॥

तूष्णींशंसं तु शंसित्वा शंसेन्निविदमत्र च ।
प्राक् सूक्ताद्रोचनादेषा पुरोरुक् प्रोच्यते निवित् ॥

॥ रेतस्तद्विकृतं प्रजनयति ॥

तत् तत्र रेतो विकृतं प्रवृद्धं तु प्रकाशयेत्‡ ॥

॥ विकृतिर्वा अग्रेऽथ जातिः । उच्चैः पुरोरुचं शंसति§ ॥

निवित् पुरोरुक् ॥

---

* आ० श्रौ० सू० ५-९-११. † 'षळङ्ग इति यथा ब्राह्मणान्तरे षोढा विहितो वै पुरुष आत्मा च शिरश्चत्वार्यङ्गानि' इति (तै० सं० ५-६-९) । आत्मा मध्यमः कायः शिर उपरिभागः द्वौ पाणी द्वौ पादौ इति केचिदाहुः । आत्मा कायः स च पञ्चविधः । मध्यकायो द्वे पार्श्वे पृष्ठं कुक्षिः इति । एवं पञ्चविध आत्मा च शिरश्च इति पुरुषः षड्विधः । तस्याङ्गानि षट् द्वे पाणी द्वौ पादौ द्वौ च स्तनौ', ‡ 'विकृतं कललीभूतं प्रजनयति प्रजात्वेन परिणमयति' इति भट्टभास्करः. § 'उच्चैर्निविदं यथानिशान्तमभिर्देवेद्ध इति' इति आ० श्रौ० सू० ५-९-१२.

॥ उच्चैरेवैनं तत् प्रजनयति* ॥

तत् तम्। एनं यजमानम् ॥

॥ द्वादशपदां पुरोरुचं शंसति ॥

पदद्वादशकोपेता ग्रग्निर्देवादिका निवित् ॥

॥ द्वादश वै मासाः संवत्सरः संवत्सरः प्रजापतिः सः ॥

यस्तु संवत्सरो नाम स प्रजानां हि रक्षकः ॥

कुतः,

॥ अस्य सर्वस्य प्रजनयिता सः ॥

अब्दायत्तं हि जगतः सर्वस्यास्य प्रवर्तनम् ॥

॥ योऽस्य सर्वस्य प्रजनयिता स एवैनं तत् प्रजया पशुभिः प्रजनयति ॥

ततश्च,

॥ प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद। जातवेदस्यां पुरोरुचं शंसति जातवेदोन्यङ्गाम्† ॥

न्यङ्गं चिह्नम्। 'सो अध्वरा करति जातवेदा' इति[1] ॥

॥ तदाहुः ॥

---

1. 'इति जातवेदश्शब्दे भवाम्। तदाहुः' क. ख. पाठः.

---

* 'उच्छ्रितगुणेन देहेन विशिष्टं प्रजनयति' इति भट्टभास्करः. 'उत्पादनकाले प्रसववेदनया तन्मातोच्चैर्ध्वनिं करोति। तदिदमुच्चैः प्रजनयतीत्युच्यते' इति सायणः.

† 'जातवेदो(न्य ?)ङ्गामिति। जातवेदश्शब्दावयवाम्। केचित् पठन्ति जातवेदोन्यङ्गामिति। तत्र जातवेदश्शब्दचिह्नामिति द्रष्टव्यम्' इति भट्टभास्करः.

चोद्यस्वरूपमाह—

॥ यत् तृतीयसवनमेव जातवेदस आयतनमथ कस्मात् प्रातःसवने जातवेदस्यां पुरोरुचं शंसतीति ॥

यत् यदि । अथ तथा सति । एव खलु । पुरोरुचं निविदम् ।

जातवेदास्तु देवोऽयं वर्तते ह्याग्निमारुते* ॥

परिहरति—

॥ प्राणो वै जातवेदाः ॥

कथं,

॥ स हि जातानां वेद ॥

†शस आम् । एवमुत्तरत्रापि ॥

॥ यावतां वै स जातानां वेद ते भवन्ति ॥

भूतिः समृद्धिः । स प्राणः ॥

॥ येषामु न वेद किमु ते स्युः ॥

उ पुनः उ खलु । किं स्युः । नहि भवन्तीति भावः ॥

॥ यो वा आज्य आत्मसंस्कृतिं वेद तत्सुविदितम् ॥

यजमानशरीरस्य य आज्ये वेत्ति संस्कृतिम् ।

तत् तेन सुष्ठु विदितं स हि विज्ञानपारगः ॥

सप्तमः खण्डः ।

---

* 'तथाच सम्प्रदायविद आहुः' इत्यवतारिकया पद्यमिदं सायणेन पठ्यते.

† 'जातानामिति । कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । जातानि जन्मवन्ति शरीराणि सर्वभूतानि वा येषु स्वयं तिष्ठन्ति तानि सर्वाणि' इति भट्टभास्करः. 'जातानामुत्पन्नानां शरीराणां स्वरूपं वेद' इति सायणः.

अथाज्यसूक्तस्य ऋचां[1] प्राणसंस्कृतिकर्मणि ।
आभिरूप्यं तु सप्तानां सम्यगाह प्ररोचयन्—

॥ *प्र वो देवायाग्नय इति शंसति[2] ॥

तत्र,

॥ प्राणो वै प्र ॥

प्रशब्देन प्राण उक्त एकदेशस्य कीर्तनात् ।
†प्रजापतेर्दशब्देन दण्डदंशदमा यथा ।
दैत्यसर्पब्राह्मणानां हितं प्रष्टुमुपेयुषाम् ॥

॥ प्राणं हीमानि सर्वाणि भूतान्यनुप्रयन्ति ॥

चरन्ति सर्वभूतानि प्राणे सत्येव नान्यथा ॥

॥ प्राणमेव तत् सम्भावयति ॥

तत् तेनं प्रशब्देन‡ । सम्भावनमुत्पादनम्§ ॥

---

१. 'अथाद्यसूक्तस्यऋचां', २. 'शंसति । प्राणो' ख. ङ. पाठः.

---

* ऋक्सं० ३-१-१३-१. 'उत्तमेन पदेन प्र वो देवायेत्याज्यमुपसन्तनुयात्' इति आ० श्रौ० सू० ५-९-१५. † बृहदारण्यके त्वेवं दृश्यते—'त्रयः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेतिहोचुर्दाम्यतेति न आत्थेत्योमितिहोवाच व्यज्ञासिष्टेति । अथहैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेतिहोचुर्दत्तेति न आत्थेत्योमितिहोवाच व्यज्ञासिष्टेति अथहैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेतिहोचुर्दयध्वमिति न आत्थेत्योमितिहोवाच व्यज्ञासिष्टेति' (५-२) इति.
‡ 'प्राणसम्बन्धिनि अन्नप्रकर्षे प्राणशब्दो वर्तते । तस्य (प्राण ! प्र)शब्दो द्योतकः । तत्र द्योत्यद्योतकयोरभेदोपचारात् प्राणप्रशब्दयोः सामानाधिकरण्यम्' इति भट्टभास्करः.
§ 'सम्भावितं पूजितं करोति' इति सायणः.

॥ प्राणं संस्कुरुते ॥

संस्कृतिरलङ्कारः । *'सम्पर्युपेभ्यः—' इति सुट् ॥

॥ †दीदिवांसमपूर्व्यमिति शंसति ॥

प्र ऋतावा सय सनो दीदिवोतन नूतच ।
इति क्रमात् संहितास्थादन्य आश्रीयते क्रमः‡ ॥
शंसनाय स प्र दीदि सनः शर्माणि चोतनः ।
स यन्ता ऋत नूनोराख्यायान्त्वे[1] क्रमयोः समे ॥

॥ मनो वै दीदाय ॥

दीदीति धातुर्दीप्त्यर्थस्तिपो णल् वृद्धिरायचि ।
आदौ प्रकाशते ॥

स्पष्टयति—

॥ मनसो हि न किञ्चन पूर्वमस्ति ॥

'मनसा वा अग्रे संकल्पयति' इति श्रुतेः§ ॥

॥ मन एव तत् सम्भावयति । मनः संस्कुरुते ।
¶स नः शर्माणि वीतय इति शंसति । वाग्वै शर्म ॥

वागिन्द्रियेण सम्पाद्यशब्दः सुखकरो महान् ॥

---

१. 'स यन्ता च ऋतानूनोरायन्ते' घ. ङ. पाठः.

---

* पा० सू० ६-१-१३७. † ऋक्सं० ३-१-१३-५. ‡ 'अनुब्राह्मणं वानुपूर्व्यम्' इति आ० श्रौ० सू० ५-१-२२. § ऐ० आ० ३-१-१. ¶ ऋक्सं० ३-१-१३-४.

उपपादयति—

॥ तस्माद्वाचानुवदन्तमाह शर्म वदास्मायांसीति ॥

कश्चिद् ब्रूते स्वं सखायं गुरूक्तार्थानुवादिनम् ।
*अस्मा अस्य यथा शर्म तथा वद ङसस्तु ङे ॥
†आङ्पूर्वादमतेर्लेट् सिप् ‡मोऽनुस्वारः शपश्च लुक् ।
आंसि यास्यसि शर्म त्वं गुरौ वृत्तेऽनुवादतः ॥
इति तस्मात्तथाहीह वाग्युक्तं शर्म शुश्रुम[1] ॥

असौ आंसि । आयादेशः । §'लोपः शाकल्यस्य' इति पक्षे यलोपाभावः ॥

॥ वाचमेव तत् सम्भावयति वाचं संस्कुरुते ।
¶उत नो ब्रह्मन्नविष इति शंसति श्रोत्रं वै ब्रह्म ॥

---

१. 'शुश्रुम । वाचमेव' क. ख. पाठः.

---

* शर्मन्वद् इति च्छेदः सायणमते । तथाच तद्व्याख्या—'असौ गुरूक्तार्थस्य सम्यगनुवादिने शिष्याय शर्मवत् सुखयुक्तं जीवनं सम्पन्नम्' इति. † 'आयांसि समन्ततो नियतोऽसि । आङ्पूर्वस्य यम उपरमे इत्यस्य धातोश्छान्दसं रूपम् । आस्मा इत्याकारश्च च्छान्दसः' इति सायणः. अत्रत्यो भट्टभास्करीयव्याख्याभागः क्वचिद् अशुद्धोऽपि विशेषार्थदर्शनाद् यथामातृकमेव निवेश्यते—'शर्म सुखकरं वद भूयोऽपि वद । किं कारणमेवमुच्यत इति चेत् त्वं वाल्यस्मै ईदृशाय सुखहेतवे वचनाय आयांसि आगच्छसि अत्यर्थं शक्नोषि । तस्मादेवमाह तस्माच्छर्महेतुर्वागिति मन्यामहे । अम गत्यादिष्वित्यस्य च्छान्दसः शपो लुक् । यद्वा शर्म वदाः वदामः भूयोऽपि वदितुमे सि ले............आगमः सकारस्य च्छवत्वलोपा व्यत्ययेन न क्रियन्ते । सुखहेतुमिमां ते वाचमविच्छेदेन वदत देवा वा मा यांसि इति मा इंसीरिति उपरतां मा कार्षीः । यमेर्लुङि मध्यमैकवचने इतश्च लोपे यमरमनमातामिति सगिटोः सकारस्य यत्वलोपावप्राप्तावेव क्रियेते व्यत्ययेनात्वलोपो वा द्रष्टव्यः । यद्वा यमन्तालेटि छन्दसः शपो लुक् । छन्दस्युभयथा इति सिप आर्धधातुकत्वाण्णिलोपः । एवं वदनप्रार्थनया निवृत्तिप्रतिषेधाच्च सुखहेतुर्वागिति मन्यामहे । सुखमेव हि प्रार्थ्यते । तन्निवृत्तिरेव च प्रसज्यमाना निषिध्यते प्राणिभिः' इति भट्टभास्करः. ‡ पा० सू० ८-३-२३. § पा० सू० ८-३-१९. ¶ ऋक्सं० ३-१-१३-६.

कथं,

॥ श्रोत्रेण हि ब्रह्म शृणोति ॥

ब्रह्म वेदः ॥

॥ श्रोत्रे ब्रह्म प्रतिष्ठितम् ॥

ततश्च,

॥ श्रोत्रमेव तत् सम्भावयति ॥

तत् तत्र ॥

॥ श्रोत्रं संस्कुरुते ॥

॥ *स यन्ता विप्र एषामिति शंसति । अपानो वै यन्ता ॥

यमेर्बन्धनार्थात् तृच् ॥

॥ अपानेन ह्ययं यतः प्राणो न पराङ् भवति ॥

अन्तर्वर्तिवायुना हि बहिर्गच्छन् स वार्यते ॥

॥ अपानमेव तत् सम्भावयति । अपानं संस्कुरुते ।

†ऋतावा यस्य रोदसी इति शंसति । चक्षुर्वा ऋतम् ॥

कथं,

॥ तस्माद्यतरो विवदमानयोराहाहमनुष्ठया चक्षुषादर्शमिति तस्य श्रद्दधति ॥

तथाहि कौचित्[1] संसत्सु विरुद्धं वदतस्तयोः[2] ।
यतरो योऽहमद्राक्षं चक्षुषेत्याह तस्य तु ॥

---

१. 'कौपाद्', २. 'वदतोस्तयोः' क, ख, पाठः.

* ऋक्सं० ३-१-१३-३ † ऋक्सं० ३-१-१३-२.

वाक्यं जनाः श्रद्दधति सत्यं चक्षुर्ऋतं ततः ।
*भासनेति वदेः शानजिरितो वेंति चाङ् दशः ॥
दाञः †श्नाभ्यस्तयोरातः स्थोऽन्तौ किः पुरन्तुष्टिमीः‡ ॥

॥ चक्षुरेव तत् सम्भावयति चक्षुः संस्कुरुते ।

¶नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वस्वित्युत्तमया परिदधाति ॥

व्याचष्टे—

॥ आत्मा वै समस्तः सहस्रवांस्तोकवान् पुष्टिमान् ॥

सहस्रं बहु तोकञ्च पुत्रः पुष्टिः सुखान्वयः ।
एभिः समस्तः सम्पूर्ण आत्मा पुरुष उच्यते ॥

॥ आत्मानमेव तत् समस्तं सम्भावयति ।

आत्मानं समस्तं संस्कुरुते ॥

शस्त्रान्ते ॥

॥ याज्यया यजति ॥

§अग्न इन्द्रश्चेत्यनया ॥

॥ ‖प्रत्तिर्वै याज्या ॥

---

* पा० सू० १-३-४७. † पा० सू० ३-१-५७. ‡ पा० सू० ६-४-११२. § 'अनुपूर्वात् तिष्ठतेः किपि तृतीयाया ज्यादेशः' इति भट्टभास्करः. ¶ ऋक्सं० ३-१-१३-७. 'आहूयोत्तमया परिदधाति' इति आ० श्रौ० सू० ५-९-२४. § ऋक्सं० ३-१-२५-४. 'अग्न इन्द्रश्च दाशुषो दुरोण इति याज्या' इति आ० श्रौ० सू० ५-९-२६. ‖ हविष आदानप्रदाने च पुरोनुवाक्यायाज्याभ्यामिति । तथाच तै० सं० 'पुरोनुवाक्ययादत्ते प्रयच्छति याज्यया' (२-६-२) इति । 'ह्वयति वा अनुवाक्यया प्रयच्छति याज्यया' इति शत० ब्रा० १-७-२-७७. 'पुरोनुवाक्या देवतास्मरणार्था । याज्या च हविःप्रदानार्था' इति कात्या० श्रौ० सू० १-८-९. 'दानुदपकनः प्रत्तिः कर्मो जृम्भणमिति यो गोषु प्रसिद्धः । यथा ब्राह्मणान्तरे 'प्रत्ता वै गौर्दुहे प्रत्तेडा यजमानाय दुहे' (तै० सं० १-७-१) इति यज्ञात्मिकाया धेनोः सर्वाभिमतफलप्रदानादिकर्मस्थानीया याज्या' इति भट्टभास्करः.

दात्रः करणे क्तिन्। *'अच उपसर्गात्तः'॥

सा च,

॥ पुण्यैव लक्ष्मीः ॥

यज्ञानुष्ठानलब्धा श्रीः पुण्यमेव हि साधयेत्॥

॥ पुण्यामेव तल्लक्ष्मीं सम्भावयति ॥

†'तोर्लि'। तत् तत्र ॥

॥ पुण्यां लक्ष्मीं संस्कुरुते ।

स एवं विद्वान् छन्दोमयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति ॥

इदमर्थे मयट्। छन्दो गायत्र्यादि, देवता अग्न्यादि, ब्रह्म वेदः, ‡अमृतं मरणाभावः, सम्भूय सम्यग्भूत्वा होताप्येति प्राप्नोति ॥

॥ य एवं वेद ॥

सोऽपि ॥

किञ्च,

॥ यो वैतद्वेद यथाच्छन्दोमयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति ॥

यष्टेति स इति शेषः। यथा सम्यक्, वा खलु, एतदर्थरूपम्।

छन्दआदिमयो यष्टा देवताः प्रतिपद्यते।
इति यो वेद सोऽप्येति देवता इति गृह्यताम्॥

* पा० सू० ७-४-४७. † पा० सू० ८-४-६०. ‡ 'अमृतमयः ब्रह्मलक्षणपरमात्ममयः' इति भट्टभास्करः.

पुनः स्तौति—

॥ तत् सुविदितम् ॥

*भावे क्त एतज्ज्ञानं यत्तत् सु सुष्ठिति गृह्यताम् ॥

॥ इत्यध्यात्मम् ॥

शरीरमधिकृत्यैवं सूक्तमुक्तं सयाज्यकम् ॥

॥ अथाधिदैवतम् ॥

देवता अधिकृत्याथ तूष्णींशंसादि वर्ण्यते ॥

अष्टमः खण्डः ।

---

॥ षट्पदं तूष्णींशंसं शंसति ॥

उक्तार्थम्† ॥

स्तौति—

॥ षड्वा ऋतवः ऋतूनेव तत् कल्पयति ॥

तत् तेन षट्त्वेन कल्पयति सुयुक्तान् करोति ॥

किञ्च,

॥ ऋतूनप्येति ॥

‡अप्ययोऽनुभवः ॥

---

* 'तदिदं वेदितुरुक्तं फलं सुविदितं सुप्रसिद्धं ब्रह्मवादिनाम् । यद्वा अयजमानस्यापि वेदितुः फलसंपत्तौ कारणमनेनोच्यते ' इति भट्टभास्करः. † page 396. ‡ 'अप्येति प्राप्नोति ' इति सायणः. 'अनुप्रवेशोऽप्ययः ' इति भट्टभास्करः.

॥ द्वादशपदां पुरोरुचं शंसति । द्वादश वै मासाः ।
मासानेव तत् कल्पयति ॥

तत् तत्र ॥

॥ मासानप्येति ।
*प्र वो देवायाग्नय इति शंसति ॥

अत्र,

॥ अन्तरिक्षं वै प्र ॥

†प्रभूतशब्दैकदेशप्रशब्देन खमुच्यते ॥

॥ अन्तरिक्षं हीमानि सर्वाणि भूतान्यनुप्रयन्ति ॥

खे प्रभूतावकाशे हि वर्तन्ते जन्तवः सुखम् ॥

॥ अन्तरिक्षमेव तत् कल्पयत्यन्तरिक्षमप्येति ।
‡दीदिवांसमपूर्व्यमिति शंसति । असौ वै दीदाय ॥

आदौ दीप्यते ॥

असाविति कः,

॥ योऽसौ तपति । एतस्माद्धि न किञ्चन पूर्वमस्ति ॥

यस्य प्रयाणमन्वन्य उद्ययुर्मन्त्रलिङ्गतः ॥

---

* ऋक्सं० ३-१-१३-१. † 'अन्तरिक्षे पक्षिणां प्रयाणं, प्रयाणस्यार्थं प्रतीकः प्रेति' इति गोविन्दस्वामी. 'सर्वे प्राणिनोऽन्तरिक्षमनुसृत्य तिष्ठन्ति । तस्मिन्नवकाशे प्रकृष्टगमनादन्तरिक्षस्य प्रशब्दवाच्यत्वम्' इति सायणः. ‡ ऋक्सं० ३-१-१३-५.

॥ एतमेव तत् कल्पयति । एतमप्येति ।

*स नः शर्माणि वीतय इति शंसति । अग्निर्वै शर्माण्यन्नाद्यानि यच्छति ॥

पाकेन सुस्वादु कुर्वन् भक्ष्यमग्निर्ददाति हि ॥

॥ अग्निमेव तत् कल्पयति । अग्निमप्येति ।

†उत नो ब्रह्मन्नविष इति शंसति । चन्द्रमा वै ब्रह्म ॥

अमृतात्मकत्वात्‡ ॥

॥ चन्द्रमसमेव तत् कल्पयति । चन्द्रमसमप्येति ।

§स यन्ता विप्र एषामिति शंसति । वायुर्वै यन्ता ॥

कथं,

॥ वायुना हीदं यतमन्तरिक्षं न समृच्छति ॥

¶ऋच्छिः प्रळयार्थः ।

खं हि वातेन नद्धत्वाच्चर्मवन्नाहि वेष्ट्यते ॥

॥ वायुमेव तत् कल्पयति । वायुमप्येति ।

$ऋतावा यस्य रोदसी इति शंसति । द्यावापृथिवी वै रोदसी ॥

---

* ऋक्सं० ३-१-१३-४. † ऋक्सं० ३-१-१३-६. ‡ 'चन्द्रमा वै ब्रह्म ब्रह्मप्राप्तिहेतुत्वात्। 'आदित्याच्चन्द्रमसम्' इति श्रुतेः' इति गोविन्दस्वामी. 'आह्लादहेतुत्वादमृतात्मकत्वाच्च' इति भट्टभास्करः. 'नक्षत्रादिप्रकाशेषु बृहत्त्वाच्चन्द्रमसो ब्रह्मत्वम्' इति सायणः. § ऋक्सं० ३-१-१३-२. ¶ 'समृच्छति गच्छति' इति गोविन्दस्वामी. 'सम्यक् प्राप्नोति' इति सायणः. 'लीयते विलीयते' इति भट्टभास्करः. $ ऋक्सं० ३-१-१३-२

औङ ईत् । द्यौश्च पृथिवी च । *'दिवसश्च पृथिव्याम्' इति द्यावादेशः ॥

॥ द्यावापृथिवी एव तत् कल्पयति । द्यावापृथिवी अप्येति ।

†नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वस्वित्युत्तमया परिदधाति ।

संवत्सरो वै समस्तः सहस्रवांस्तोकवान् पुष्टिमान् ॥

पूर्ववत् ॥

॥ संवत्सरमेव तत् समस्तं कल्पयति । संवत्सरं समस्तमप्येति । याज्यया यजति ॥

पूर्ववत् ॥

॥ वृष्टिर्वै याज्या ॥

जगत्पोषकत्वात् ॥

॥ विद्युदेव ॥

या हि वृष्टिः सा विद्युदेव ॥

कुतः,

॥ विद्युद्धीदं वृष्टिमन्नाद्यं सम्प्रयच्छति ॥

‡विद्युद् वृष्टिं पुरो दत्त्वायान्नाद्यानि ददाति हि ॥

॥ विद्युतमेव तत् कल्पयति ॥

तत् तत्र ॥

---

* पा० सू० ६-३-३०. † ऋक्सं० ३-१-१३-७. ‡ तथाच मनुः—"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इति ३, ७६.

॥ विद्युतमप्येति ।

**स एवं विद्वानेतन्मयो देवतामयो भवति भवति ॥**

एवं ज्ञानोपसम्पन्नो यष्टा होता च वै सुखम् ।
एतन्मयो वसन्तादिविद्युदन्तमयो भवन् ॥
एतान् प्राप्नोति वै देवान् देवतान्वयिसौख्यवान् ।
मयडर्थः सुखप्राप्तिर्द्विरुक्त्यर्थः समापनम् ॥

नवमः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ सुखप्रदायां दशमोऽध्यायः[1] ॥

प्रथमे दशके खण्डसंख्या स्यादेकसप्ततिः ।
अध्यायिकाः षद् पञ्च षण्नव चत्वार एव च ॥
दशाष्टौ च षळष्टौ च नवेत्येवं समीरिताः ।
*गर्वगाया[2] च मुख्येति कलिशुद्धदिने सति ॥
वृत्तिः षाड्गुरवी जाता ब्राह्मणस्य सुखप्रदा ।
†क्षेत्रपालं वीरभद्रं भद्रकाळीं विनायकम् ।
दुर्गां च सर्वकार्येषु विघ्नशान्त्यै नमाम्यहम् ॥

## द्वितीयपञ्चिका समाप्ता ।

## प्रथमदशकं च समाप्तम् ॥

---

१. 'इति षड्गुरुशिष्येण विरचितायां ब्राह्मणवृत्तौ दशमोऽध्यायः', २. 'सुखगाया', ष. ङ. पाठः.

* कलिदिनसंख्या—1567343=A. D. 1192. † श्लोकमिदं ग्रन्थप्रतिलेखकसंयोजितमिति सम्भाव्यते । ष. ङ. ग्रन्थयोस्तु पद्यस्यास्य स्थानेऽन्यदेव पद्यं पठ्यते । यथा—

"नमामि देवं नरनाथमच्युतं नारायणं लोकगुरुं सनातनम् ।
अनादिमव्यक्तमचिन्त्यमव्ययं वेदान्तवेद्यं पुरुषोत्तमं हरिम् ॥" इति.

## अथैकादशोऽध्यायः ।

ॐ । वर्णितं दशमे त्वाज्यमथ प्रउगमुच्यते—

॥ ग्रहोक्थं वा एतद् यत् प्रउगम् ॥

उक्थं शस्त्रं कर्मणि क्थन्[*] वचेर्वैं सम्प्रसारणम्[†] ॥

कथं,

॥ नव प्रातर्ग्रहा गृह्यन्ते ॥

ऐन्द्रवायवादयः ॥

॥ नवभिर्बहिष्पवमाने स्तुवते ॥

[‡]उपास्मै [§]दविद्युतत्या [¶]पवस्वेति तृचैस्त्रिभिः ।
निरभ्यासैः स्तुवन्त्याद्ये पवमानेऽत्र सामगाः ॥

॥ स्तुते स्तोमे दशमं गृह्णाति[$] ॥

[ψ]अध्वर्युराश्विनम् । श्रूयते हि—' आश्विनो दशमो गृह्यते । तं तृतीयं जुहोति ' इति ॥

॥ हिंकार इतरासां दशमः ॥

ऋचां नवानामुक्तानां हिङ्कारो दशमो मतः ॥

ततश्च,

॥ सो सा सम्मा ॥

---

[*] उणादिसू० २-७. [†] पा० सू० ६-१-१५. [‡] ऋक्सं० ६-७-३६-१. [§] ऋक्सं० ७-१-४१-३. [¶] ऋक्सं० ७-२-७-१. [$] 'तस्माद् बहिष्पवमाने स्तुत आश्विनो गृह्यते' इति तै० सं० ६-४-९. [ψ] 'एतयैवाध्वर्युः पात्राणि संमृश्याश्विनं गृह्णाति' इति आप० श्रौ० सू० १२-१८-९.

सा । उ अपि* । समस्य मकार उपजनः ।

यर्चां संख्या या ग्रहाणां सा च सा च समा भवेत् ॥

अथ प्रउगऋचां स्तौति—

॥ वायव्यं शंसति ॥

†वायवायाहीति तृचं शंसेद् वै वायुदैवतम् ॥

॥ तेन वायव्य उक्थवान् ॥

तेन वायव्यतृचेन ।

ऐन्द्रवायवपूर्वांशो वायव्यग्रह उच्यते ॥

॥ ऐन्द्रवायवं शंसति ॥

‡'इन्द्रवायू इमे' इति तृचम् ॥

॥ तेनैन्द्रवायव उक्थवान् ॥

§ऐन्द्रवायव इत्युक्तः परोंऽशस्त्वैन्द्रवायवे ॥

॥ मैत्रावरुणं शंसति ॥

¶'मित्रं हुवे' इति ॥

॥ तेन मैत्रावरुण उक्थवान् ।

आश्विनं शंसति ॥

$'अश्विना यज्वरीरिषः' इति ॥

---

* 'उकारोऽवधारणे । वैवं प्रतिपादिता समता सैव सा तादृश्येव सा ग्रहाणां स्तोत्रियाणां च समा सम् इति संख्यासाम्यम् इत्यर्थः । आतश्चोपसर्गे इत्यङ्प्रत्ययः । ग्रहा एवमुक्तेन प्रकारेण सा ग्रहसंख्या सा च स्तोत्रियसंख्या समैव ' इति भट्टभास्करः. 'उकारो निपातः समुच्चयार्थः सन् स्त्रीलिङ्गाभ्यां तच्छब्दाभ्यां संबध्यते । तथा सति सा च ग्रहसंख्या सा च स्तोत्रियसंख्येत्युक्तं भवति' इति सायणः. † ऋक्सं॰ १–१–३–१. ‡ ऋक्सं॰ १-१-३-४. § 'ऐन्द्रवायवग्रह उक्थवान् भवति । यत्र वायव इन्द्रवायुभ्यां चैन्द्रवायवो ग्रहो गृह्यते स वायव्यश्च भवति ऐन्द्रवायवश्च भवति' इति भट्टभास्करः. ¶ ऋक्सं॰ १-१-४-२. $ ऋक्सं॰ १-१-५-१.

॥ तेनाश्विन उक्थवान् । ऐन्द्रं शंसति ॥

*'इन्द्रायाहि चित्रभानो' इति ॥

॥ तेन शुक्रामन्थिना उक्थवन्तौ ॥

शुक्रश्च मन्थी चेति द्वौ शुक्रस्यात्वं निपातितम् ॥

॥ वैश्वदेवं शंसति ॥

†'ओमासः' इति ॥

॥ तेनाग्रयण उक्थवान् ।

सारस्वतं शंसति ॥

‡'पावका नः' इति ॥

अत्र चोदयति—

॥ न सारस्वतो ग्रहोऽस्ति ॥

तत्र सारस्वततृचः कस्योक्थ्यमिति गृह्यताम् । इति शेषः ॥

परिहरति—

॥ वाक् तु सरस्वती ॥

ततः किं,

॥ ये तु के च वाचा ग्रहा गृह्यन्ते तेऽस्य सर्वे शस्तोक्था उक्थिनो भवन्ति य एवं वेद ॥

के च केचित् । अस्य अनेन सारस्वततृचेन । §उक्थिन इति व्याचष्टे—शस्तोक्था इति । शस्तं कृतशंसनम् उक्थं शस्त्रं येषां ते । तस्य वेदितुः ।

---

* ऋक्सं० १-१-५-४. † ऋक्सं० १-१-६-१. ‡ ऋक्सं० १-१-६-४.

§ 'उक्थिनो भवन्तीत्यादि विदुषः फलम्' इति भट्टभास्करः.

फलं भ्रातृगतं कर्तुर्दंष्ट्रापूपिकया भवेत् ।
*वायुरग्रेगेति खैलसप्तानां तु पुरोरुचाम् ॥
क्रमादेते तृचाः सप्त परस्तादिति गृह्यताम् ।
सर्वेषु प्रउगेष्वेवं पुरोरुग्भ्यः परे तृचाः ॥

प्रथमः खण्डः।

---

पुनः स्तौति—

॥ अन्नाद्यं वा एतेनावरुन्धे यत् प्रउगम् ॥

यदेतत् प्रउगं शस्त्रं तेनान्नाद्यं समश्नुते ।
आद्यं भोज्यं प्रधानत्वादन्नस्यात्र पृथग्ग्रहः ॥

उपपादयति—

॥ अन्यान्या देवता प्रउगे शस्यते ॥

वाय्विन्द्रवायू च मित्रावरुणाश्वीन्द्रविश्वकाः ।
सरस्वती भिन्नरूपा देवतात्र हि शस्यते ॥

॥ अन्यदन्यदुक्थं प्रउगे क्रियते ॥

उक्थं वाक्यं तच्च भिन्नं खिलाखिलविभेदतः ।
पुरोरुचो हि खैलिक्यः स्वधीतं तृचसप्तकम् ॥

ततश्च,

॥ अन्यदन्यदस्यान्नाद्यं गृहेषु ध्रियते य एवं वेद ॥

स्थाप्यतेऽन्नं बहुविधं वेदितुस्तु गृहेषु वै ॥

---

* 'वायुरग्रे गा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टात् तृचं तृचं शंसेत्। वायवायाहि दर्शतेति सप्त तृचाः' इति आ० श्रौ० सू० ५-१०-४, ५.

पुनरपि स्तौति—

॥ एतद्ध वै यजमानस्याध्यात्मतममिवोक्थं यत् प्रउगम् ॥

*अध्यात्मतममतिशयेन स्वदेहत्वेन निर्मितमिव ॥

॥ तस्मादेनेनैतदुपेक्ष्यतममिवेत्याहुः ॥

एनेन यष्ट्रा । तस्मात् किञ्चेत्यर्थः । उपेक्ष्यं श्रद्धया ज्ञेयम् । उप सम्यक् ॥

कुतः,

॥ एतेन ह्येनं होता †संस्करोतीति ॥

एतेन प्रउगेण । एनं यष्टारम् । हि यस्मात् ॥

कथं,

॥ वायव्यं शंसति ॥

वायव्यादय उक्ताः प्राक् तृचाः सारस्वतान्तकाः ॥

॥ तस्मादाहुः ॥

तस्मात् तत्र, इत्यर्थे डसि ॥

॥ वायुः प्राणः ॥

---

* 'आत्मनि भवमध्यात्मम्' इति गोविन्दस्वामी. 'अन्येभ्यः शस्त्रेभ्योऽतिशयेनात्मनोऽन्तरङ्गमिव भवति । आत्मन्यधि अन्तरङ्गतया स्थितमध्यात्मम् उपचारेण तत्रस्थे तच्छब्दः। तेनाव्ययीभावादप्यातिशायनिको भवति । इवशब्दोऽवधारणेऽपि वर्तत इत्युक्तम्' इति भट्टभास्करः. 'आत्मानं शरीरमधिकृत्य वर्तत इत्यध्यात्मम्' इति सायणः.

† 'अपूर्वाश्रयविलक्षणदेहयोगित्वकरणं यजमानस्य संस्कारः' इति भट्टभास्करः. 'पूर्वत्राज्यशस्त्रस्य यजमानशरीरनिष्पत्तिहेतुत्वाभिधानात् तदध्यात्मम् इदं तूत्पन्नस्य शरीरस्य संस्कारत्वादतिशयेनैवाध्यात्मम्' इति सायणः.

कथम्,

॥ प्राणो रेतः ॥

कुतः,

॥ रेतः पुरुषस्य प्रथमं संभवतः सम्भवतीति ॥

सम्भवत उदरे जायमानस्य ॥

ततश्च,

॥ यद् वायव्यं शंसति प्राणमेवास्य तत् संस्करोति ॥

अस्य यष्टुः । तत् तेन ॥

॥ ऐन्द्रवायवं शंसति । यत्र वाव प्राणस्तदपानः ॥

तत् तत्र ॥

॥ यदैन्द्रवायवं शंसति प्राणापानावेवास्य तत् संस्करोति* ॥

अस्य यष्टुः । तत् तेन ॥

॥ मैत्रावरुणं शंसति तस्मादाहुः ॥

पूर्ववत् ॥

कथं,

॥ चक्षुः पुरुषस्य प्रथमं सम्भवतः सम्भवतीति यन्मैत्रावरुणं शंसति चक्षुरेवास्य तत्संस्करोति† ।

आश्विनं शंसति । तस्मात् कुमारं जातं संवदन्त उप ॥

---

* 'प्राणापानयोरविनाभूतत्वादैन्द्रवायवेन सूक्तेन प्राण इवापानोऽपि यजमानसम्बन्धी संस्कृतो भवति' इति भट्टभास्करः. 'उच्छ्वासरूपः प्राणो यत्रास्ति, तत्र निःश्वासरूपोऽपानोऽप्यस्ति । इन्द्रवायू च प्राणापानरूपौ । तस्मात् तेन सूक्तेन प्राणापानयोः संस्कारः' इति सायणः. † 'चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः' (तै० सं० ६·४·९) इति श्रुतेश्चक्षुरादिकारणत्वमेषाम्.

तस्मात् किञ्च । जातं कुमारं सं सम्यक् उपवदन्ते । *'भासनोपसम्भाषा—' इति तङ् ॥

कथं,

॥ वै शुश्रूषते नि वै ध्यायतीति ॥

श्रोतुमिच्छति । †'ज्ञाश्रुस्मृदृशां—' इति तङ् । निध्यायति अवलोकयति । वैशब्दौ चार्थौ ॥

॥ यदाश्विनं शंसति श्रोत्रमेवास्य तत् संस्करोति ।
ऐन्द्रं शंसति । तस्मात् कुमारं जातं संवदन्ते ॥

पूर्ववत् ॥

कथम्,

॥ प्रतिधारयति वै ग्रीवा अथो शिर इति ॥

अथो अपिच ।

ग्रीवा गळसिरास्ताश्च शिरश्चायं तु बालकः ।
वीर्ययोगाद्धारयतीत्येवमाहुः शिशुं प्रति ॥

॥ यदैन्द्रं शंसति वीर्यमेवास्य तत् संस्करोति ।
वैश्वदेवं शंसति । तस्मात् कुमारो जातः पश्चेव प्रचरति ॥

इव एव । पश्च पश्चात् ।

जातः पाण्यादिविक्षेपं पश्चादेव करोति हि ॥

---

* पा० सू० १-३-४७. † पा० सू० १-३-५७.

कस्मादेवं,

॥ वैश्वदेवानि ह्यङ्गानि ॥

विश्वेदेवप्रसादाद्धि सर्वाङ्गपरिपूर्णता ॥

॥ यद् वैश्वदेवं शंसत्यङ्गान्येवास्य तत् संस्करोति । सारस्वतं शंसति । तस्मात् कुमारं जातं जघन्या वागाविशति ॥

तस्मात् तथाहि ।

इवार्थे जघनाच्छाखादित्वाद्ये* वै जघन्यगीः ।
वाग्वै जघनवत् पश्चाद्भूता जातस्य जायते ॥

॥ वाग्घि सरस्वती ॥

नात्र वाच्यमस्ति ॥

॥ यत् सारस्वतं शंसति वाचमेवास्य तत् संस्करोति ॥

स्तुत्वा विविच्यैवमथो सह सर्वं प्रशंसति—

॥ एष वै जातो जायते सर्वाभ्य एताभ्यो देवताभ्यः ॥

प्राक्जातुरुदराज्जातो वाय्वादिभ्यस्तु जायते ।
ऋतूक्तफलयोगाद्देहसम्बन्धसंयुतः ॥

॥ सर्वेभ्य उक्थेभ्यः ॥

उक्थं शस्त्रम् । पूजायां बहुत्वम् । जातो जायत इत्येव ॥

॥ सर्वेभ्यश्छन्दोभ्यः ॥

शस्त्रावयवगतेभ्यः ॥

---

* पा० सू० ५-३-१०३.

॥ सर्वेभ्यः प्रउगेभ्यः ॥

प्रउगावयवसप्ततृचेभ्यः ॥

॥ सर्वेभ्यः सवनेभ्यः ॥

प्रातस्सवनादिभ्यः । यजमानो जायते ॥

॥ य एवं वेद ॥

सोऽपि ॥

॥ यस्य चैवं विदुष एतच्छंसन्ति ॥

यद्दर्शनेऽप्यृत्विजः स्यादिदं फलमितीष्यताम् ।
प्रयोगापेक्षं बहुत्वम् ॥

द्वितीयः खण्डः ।

---

पुनरपि तदेव स्तौति—

॥ प्राणानां वा एतदुक्थं यत् प्रउगम् ॥

प्रउगाख्यमिदं शस्त्रं प्राणसंप्राप्तये भवेत् ॥

कथं,

॥ सप्त देवताः शंसति ॥

वाय्वाद्याः ॥

ततः किं,

॥ सप्त वै शीर्षन् प्राणाः ॥

नेत्रे श्रोत्रे घ्राणबिले वाक् प्राणाः सप्त मूर्धनि ॥

॥ शीर्षन्नेव तत् प्राणान् दधाति ॥

तत् तत्र ॥

॥ किं स यजमानस्य पापभद्रमाद्रियेतेतिहस्माह
योऽस्य होता स्यादिति ॥

यदि तदा कुर्यादिति शेषः। अस्य यजमानस्य यो होता स्यात् स यदि पापमुपद्रवं भद्रमभ्युदयं वाद्रियेत श्रद्दध्यात् तदा स किं कुर्यादिति कश्चिचोद्यमाह स्मेत्यर्थः* ॥

परिहरति—

॥ अत्रैवैनं यथा कामयेत तथा कुर्यात् ॥

†अत्र प्रउगे। एनं यजमानम्। यथेच्छं कुर्यात् ॥

स्पष्टयति—

॥ यं कामयेत प्राणेनैनं व्यर्धयानीति। वायव्यमस्य लुब्धं शंसेत् ॥

होता यमिच्छेत् प्राणेन हीनं कुर्यामिमं त्विति।
तदास्य प्रउगे लुब्धं वायव्यं तृचमीरयेत् ॥
‡लुभिर्व्यूर्धिश्च नाशार्थौ क्तः कर्मणि णिचश्च लोट् ॥

॥ ऋचं वा पदं वातीयात् तेनैव तल्लुब्धम् ॥

अत्ययोऽतिक्रमः। पदं पादप्रदर्शनत्वादर्धर्चे वा ॥

---

* 'पापं वा भद्रं वा कर्तुं कथमाद्रियेत। होत्रे स्वातन्त्र्यं सर्वदा वर्तते। अतस्तद्विरोधि कर्म किञ्चिदपि कर्तुं नार्हति। अतोऽस्यात्रस्य पापभद्रं कर्तुं कथमाद्रियेत। तत्कारी सत्कुत्सितम् भवति' इति भट्टभास्करः. † 'अत्रैव तस्मिन्' इति सायणः. ‡ 'व्युद्धिर्वियोगः, लुब्धं व्यामुग्धं लुभ विमोहने इत्यस्मादेतद् रूपम्' इति गोविन्दस्वामी. 'लुभ विमोहन इति धातुः' इति सायणः.

॥ प्राणेनैवैनं तद् व्यर्धयति ॥

तत् तत्र ॥

॥ यं कामयेत प्राणापानाभ्यामेनं व्यर्धयानीति ॥

यं यष्टारम् ॥

॥ ऐन्द्रवायवमस्य लुब्धं शंसेत् ॥

तृचम् ॥

॥ ऋचं वा पदं वातीयात् तेनैव तल्लुब्धम् । प्राणापानाभ्यामेवैनं तद् व्यर्धयति ।

यं कामयेत चक्षुषैनं व्यर्धयानीति । मैत्रावरुणमस्य लुब्धं शंसेत् ॥

तृचम् ॥

॥ ऋचं वा पदं वातीयात् तेनैव तल्लुब्धम् । चक्षुषैवैनं तद् व्यर्धयति ।

यं कामयेत श्रोत्रेणैनं व्यर्धयानीति ॥

णिचो लोटो *'मेर्निः' ॥

॥ आश्विनमस्य लुब्धं शंसेत् ॥

होता ॥

॥ ऋचं वा पदं वातीयात् तेनैव तल्लुब्धम् । श्रोत्रेणैवैनं तद् व्यर्धयति ।

यं कामयेत वीर्येणैनं व्यर्धयानीति । ऐन्द्रमस्य लुब्धं

* पा० सू० ३-४-८९.

शंसेत् । ऋचं वा पदं वातीयात् तेनैव तल्लुब्धम् । वीर्येणैवैनं तद् व्यर्धयति ॥

वीर्यं बलम् ॥

॥ यं कामयेताङ्गैरेनं व्यर्धयानीति ॥

अङ्गैः पाण्यादिभिः ॥

॥ वैश्वदेवमस्य लुब्धं शंसेत् । ऋचं वा पदं वातीयात तेनैव तल्लुब्धम् । अङ्गैरेवैनं तद् व्यर्धयति ।

यं कामयेत वाचैनं व्यर्धयानीति । सारस्वतमस्य लुब्धं शंसेत् । ऋचं वा पदं वातीयात् तेनैव तल्लुब्धम् । वाचैवैनं तद् व्यर्धयति ॥

इत्थं पापादरे प्रोक्तं भद्रेच्छायां ब्रवीत्यथ—

॥ यमु कामयेत सर्वैरेनमङ्गैः सर्वेणात्मना समर्धयानीति । एतदेवास्य यथापूर्वमृजुक्लृप्तं शंसेत् ॥

एव तदा । उ पुनः । अङ्गैः पाण्यादिभिः । आत्मना देहेन । समर्धयानि पूर्णं करवाणि । एतत् प्रउगम् । *ऋजु सुष्ठु । क्लृप्तं व्यवस्थितम् । यथा पूर्वमवोचाम ॥

॥ सर्वैरेवैनं तदङ्गैः सर्वेणात्मना समर्धयति ॥

एवं कुर्वन्निति शेषः ॥

॥ सर्वैरङ्गैः सर्वेणात्मना समृध्यते य एवं वेद ॥

वेदिता स च ऋध्नोति तिपस्त श्नः श्यनत्र वै ॥

तृतीयः खण्डः ।

---

* 'यथापूर्वं यथाक्रमम् ऋजु अवसानातिक्रमेण क्लृप्तं यथाकल्पनं यथोत्पत्ति । यद्वा, क्लृप्तम् अविकल्पम्' इति भट्टभास्करः

॥ तदाहुः ॥

चोद्यस्वरूपमाह—

॥ यथा वात्र स्तोत्रमेवं शस्त्रम् ॥

ततः किम्,

॥ आग्नेयीषु सामगाः स्तुवते वायव्यया होता प्रतिपद्यते । कथमस्याग्नेय्योऽनुशस्ता भवन्तीति ॥

सारस्वतान्तसप्तानां वायव्येति प्रदर्शनम् ।
इहाग्नेय्यः सामगानामग्न आयाहि वीतये* ॥
कथमाग्नेय्योऽनुशस्ता वायव्यायास्तु शंसता ।

शंसनार्थः प्रतिपदिः । टार्थे ङे ॥

परिहरति—

॥ अग्नेर्वा एताः सर्वास्तन्वो यदेता देवताः ॥

यत् याः । एता वायव्याद्याः । तन्वः शरीराणि ॥

कथं,

॥ स यदग्निः प्रवानिव दहति । तदस्य वायव्यं रूपम् ॥

†प्रवान् प्रकर्षेण गच्छन् । इव एव । रूपं सादृश्यम् । इदमर्थे वायोर्यत्‡ । दहतीति यत् ॥

॥ तदस्य तेनानुशंसति ॥

अस्य अग्नेः तद्रूपम् । §तेन तृचेन । एवमुत्तरत्रापि ॥

* ऋक्सं० ४-५-२२-५. 'आग्नेय्यः अग्न आयाहीत्याद्याः अग्नि दूतमित्याद्या वा' इति गोविन्दस्वामी. † 'प्रकर्षवानेव सम्यग्विकस्वालतया दहत्यग्निरिति यदस्ति तद् प्रकर्षात्मकं वायुसम्बन्धि रूपं वायुना ज्वालाधिक्योदयात्' इति सायणः. ‡ पा० सू० ४-२-३१. § 'तेन वायुना' इति गोविन्दस्वामी. 'वायुरूपेण' इति सायणः.

॥ अथ यद् द्वैधमिव कृत्वा दहति द्वौ वा इन्द्रवायू ॥

"* द्वित्र्योश्च धमुञ्" ॥

॥ तदस्यैन्द्रवायवं रूपम् ॥

पूर्ववत् ॥

॥ तदस्य तेनानुशंसति ॥

†कुर्वन् द्वेधा दाहमग्निरिन्द्रवायूपमो मतः ॥

॥ अथ यदुच्च हृष्यति नि च हृष्यति तदस्य मैत्रावरुणं रूपम् ॥

हृषिर्दिवादिर्गत्यर्थो मित्र ऊर्ध्वमुदेति हि ।
निम्नगामी च वरुणस्ततोऽग्निरनयोः समः ॥
अधश्चोर्ध्वं च काष्ठादि संदहन् विक्षिपत्ययम्‡ ॥

॥ तदस्य तेनानुशंसति ॥

॥ स यदग्निर्घोरसंस्पर्शस्तदस्य वारुणं रूपम् ॥

दुस्पर्शोऽग्निर्निम्नगामी दुस्पर्शेवरुणोपमः ॥

तत्र च,

तं यद् घोरसंस्पर्शं सन्तं मित्रकृत्येवोपासते तदस्य
मैत्रं रूपम् ॥

मित्रीकरणं मित्रकृतिः ।

---

* पा० सू० ५-३-४५. † 'द्वैधं कृत्वाऽन्यया कयेण द्वेधा भूत्वा दहति' इति गोविन्दस्वामी. 'ज्वालाद्वयमिव कृत्वा' इति सायणः. ‡ 'यस्मादयमग्निर्दाहारम्भे दारुसंयोगादुद्धृष्यति ऊर्ध्वज्वालो भवति । अथ भस्मीकृतदारुर्नि निहृष्यति निवृत्तज्वालो भवति' इति भट्टभास्करः.

शीतार्ता जुह्वतश्चाग्निं प्रविसारितपाणयः ।
सख्यसम्पादन इव सेवन्तेऽतोऽस्य मित्रता ॥

॥ तदस्य तेनानुशंसति ।

अथ यदेनं द्वाभ्यां बाहुभ्यां द्वाभ्यामरणीभ्यां मन्थन्ति
द्वौ वा अश्विनौ तदस्याश्विनं रूपम् ॥

द्वित्वं बाह्वोररण्योश्च तेनाग्नेरश्वितुल्यता ॥

॥ तदस्य तेनानुशंसति ।

अथ यदुच्चैर्घोषः स्तनयन् बबबाकुर्वन्निव दहति
यस्माद् भूतानि विजन्ते तदस्यैन्द्रं रूपम् ॥

उच्चैर्घोषो महाशब्दः स्तनयन्नशनिध्वनिम् ।
कुर्वंश्च बबबाकुर्वन् बबबेति ह्यनुक्रिया ॥
तुदादिरत्नुदात्तेच्च विजिरर्थोऽत्र बिभ्यति ।
भूतानि *भीत्रेति भसिरित्यग्नेरिन्द्रतुल्यता ॥

॥ तदस्य तेनानुशंसति ।

अथ यदेनमेकं सन्तं बहुधा विहरन्ति तदस्य वैश्वदेवं रूपम् ॥

†एकमौपासनं गार्ह्यं बहून् श्रौता हि कुर्वते ॥

---

* पा॰ सू॰ १-४-२५. † 'एकं सन्तं बहुधा नानादेशेषु पाकार्थं विहरन्ति' इति गोविन्दस्वामी. 'अग्नेराहवनीयादिस्थानेष्वाग्नीध्रादिधिष्ण्येषु च बहुधा विहरणं वदति' इति सायणः.

॥ तदस्य तेनानुशंसति ॥

**अथ यत् स्फूर्जयन् वाचमिव वदन् दहति तदस्य सारस्वतं रूपम् ॥**

*स्फूर्जयन्नशनिवन्महाध्वनिं कुर्वन् वाचं भाषमाण इव ॥

॥ तदस्य तेनानुशंसति ।

**एवमु हास्य वायव्ययैव प्रतिपद्यमानस्य तृचेन तृचेनैवैताभिर्देवताभिः स्तोत्रियोऽनुशस्तो भवति ॥**

†उक्तार्थम् ॥

इति शस्त्रं समाप्य शस्त्रयाज्यां ब्रवीति ह—

**॥ ‡विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना । पिबा मित्रस्य धामभिरिति वैश्वदेवमुक्थं शस्त्वा वैश्वदेव्या यजति ॥**

प्रउगे वैश्वदेवोक्तिर्वाय्वादिबहुयोगतः ।
वैश्वदेव्या गुणभूतविश्वदेववायुमित्रेन्द्राग्निदेवत्यया ॥

॥ यथाभागं तद् देवताः प्रीणाति ॥

प्रीणाति तर्पयति तद् यथाभागं यथांशकम् ॥

चतुर्थः खण्डः ।

---

* 'स्फूर्जयन् हसन्' इति गोविन्दस्वामी. 'स्फूर्जयन् शब्दं वस्तु निष्पिषन्' इति भट्टभास्करः. 'स्फूर्जयति ईषद्विच्छिन्नं विलक्षणोच्चारणमिव शब्दं करोति' इति सायणः. † page 383. ‡ ऋक्सं० १-१-२७-४. 'विश्वेभिः सोम्यं मध्विति याज्या' इति आ० श्रौ० सू० ५-१०-१०.

शस्त्रयाज्याप्रसङ्गेन वषट्कारं ब्रवीत्यथ—

॥ देवपात्रं वा एतद् यद् वषट्कारः ॥

यत् यः ।

पिबतेः ष्ट्रंस्तु* करणे पात्रं पानस्य साधनम् ॥

ततश्च,

॥ वषट्करोति ॥

वषट्कारं कुर्यात् ॥

॥ देवपात्रेणैव तद् देवतास्तर्पयति ॥

हविर्भागिनीः । तत् तत्र ॥

किञ्च,

॥ अनुवषट्करोति ॥

†'सोमस्याग्ने वीहीत्यनुवषट्कारः' इति हि श्रूयते ॥

अनुवषट्कारं स्तौति—

॥ तद् यथादोऽश्वान् वा गा वा पुनरभ्याकारं तर्पयन्त्येव-मेवैतद् देवताः पुनरभ्याकारं तर्पयन्ति यदनुवषट्करोति ॥

तदिति वाक्योपन्यासे । ‡अद इति वक्ष्यमाणपरामर्शः ।

अभ्याङ्कृत्य पूर्णभक्षार्थस्तस्मात् कार्थे णमुल् कृतः ।
घासमुद्गादिकं भक्ष्यं पुनः प्रापय्य रक्षिणः ॥

---

* उणादिसू० ४-१६०. † आ० श्रौ० सू० ५-५-१५. ‡ 'अद इति सर्वनाम्ना लोकप्रसिद्धिं दर्शयति' इति भट्टभास्करः. 'अदः किञ्चिदिदं निदर्शनमस्ति' इति सायणः

अश्वान् गोरक्षिणो गाश्च तर्पयन्ति तथा त्विदम्।
एतदेतास्तर्पयन्ति यचे कुर्वन्ति क्षेत्सु तिष्॥

॥ इमानेवाग्नीनुपासत इत्याहुर्धिष्ण्यानथ कस्मात्
पूर्वस्मिन्नेव जुह्वति पूर्वस्मिन् वषट्कुर्वन्तीति* ॥

इमान् धिष्ण्यानेवाग्नीन् सदस्युपासते। के। ये वषट्कुर्वन्ति। अथ तथा सति। कस्मात् पूर्वस्मिन्नुत्तरवेद्याग्नेय्येऽग्नौ जुह्वत्यध्वर्यव इति चोद्यम्॥

परिहरति—

॥ यदेव सोमस्याग्ने वीहीत्यनुवषट्करोति तेन
धिष्ण्यान् प्रीणाति ॥

अनुवषट्कारेण धिष्ण्याग्निप्रीतिरित्यर्थः॥

अथ तन्त्रेण चोद्यद्वयमाह—

॥ असंस्थितान् सोमान् भक्षयन्तीत्याहुर्येषां
नानुवषट्करोति को नु सोमस्य स्विष्टकृद्भाग इति ॥

†‘ऋतुयाजान् द्विदेवत्यान्’ इत्यादियज्ञगाथादर्शनाद् येषामृतुयाजद्विदेवत्यपात्नीवतादित्यग्रहसावित्रग्रहाणां नानुवषट्करोति होत्रादिः, तानसंस्थितानसमाप्तान् किमिति भक्षयन्तीत्येकं चोद्यम्। सोमस्य स्विष्टकृतो भागोंऽशः को न्वित्यपरम्॥

---

* ‘चोद्यस्वरूपप्रदर्शनार्थो द्वितीय इतिकरणः। चोद्यहेतुप्रदर्शनार्थः प्रथम इतिकरणः’ इति भट्टभास्करः। † आ० श्रौ० सू० ५-५-२१.

इति चोद्यद्वयं तन्त्रेण परिहरति—

॥ यद्वाव सोमस्याग्ने वीहीत्यनुवषट्करोति तेनैव संस्थितान् सोमान् भक्षयन्ति स उ एव सोमस्य स्विष्टकृद्भागः ॥

सोमस्येत्यविशेषोक्ते सर्वसोमार्थताभवत् ।

इत्येकः परिहारः । स उ खलु एव अनुवषट्कारः सोमस्य स्विष्टकृदंश इत्यपरः । पूर्वं चाध्यगीष्महि—* 'स यदनुवषट्करोत्यग्नेरेव स्विष्टकृतोऽनन्तरित्यै ' इति ॥

ततश्च,

॥ वषट्करोति ॥

अन्विति शेषः । अनुवषट्कारं कुर्यात् ॥

पञ्चमः खण्डः ।

---

अथ वषट्कारं स्तौति—

॥ वज्रो वा एष यद् वषट्कारः ॥

यत् यः । वज्रः वज्रवद् विजयकृत् ॥

ततश्च,

॥ यं द्विष्यात् तं ध्यायेद् वषट्करिष्यन् ॥

स्मरेच्छत्रुं नामरूपगोत्रवर्णादिसंयुतम् ॥

---

* page 139.

कृते च ध्याने,

॥ तस्मिन्नेव तं वज्रमास्थापयति ॥

बाधकत्वेन तद्देहे वषड्वज्रं प्रवेशयेत् ॥

॥ षळिति वषट्करोति ॥

षळितिरूपं वषट्कारं कुर्यात् ॥

व्याचष्टे—

॥ षड् वा ऋतवः ॥

एवञ्च,

॥ ऋतूनेव तत् कल्पयति ॥

तत् तत्र । सम्यक्त्वः क्लृप्तिः* ॥

किञ्च,

॥ ऋतून् प्रतिष्ठापयति ॥

सुस्थिरान् करोति ॥

एवञ्च,

॥ ऋतून् वै प्रतितिष्ठत इदं सर्वमनु प्रतितिष्ठति
यदिदं किञ्च ॥

इदं सर्वमिति व्याचष्टे— यदिदं किञ्चेति । लक्षणेऽनुः कर्मप्रवचनीय†
इति । प्रतितिष्ठत इति शतुः शस् ।

* 'कल्पनमविपर्यस्तधर्मत्वम्' इति भट्टभास्करः † पा० सू० १-४-८४.

ऋतुप्रतिष्ठा जगतः प्रतिष्ठायै तु कल्पते ॥

॥ प्रतितिष्ठति य एवं वेद ॥

सः ॥

षळित्येकं वषट्कारमन्यथा स्तौति रोचयन्—

॥ तदुह स्माह हिरण्यदन् वैदः ॥

स्वाभ्यासवृक्षर्ग्वेदेन यस्य दन्ता हिरण्मयाः ।
निर्मिताः शीर्णदन्तस्य स वै प्रोक्तो हिरण्यदन् ॥

इत्यैतिहासिकाः । तत् तत्र । उ खलु । आह स्म ॥

कथम्,

॥ एतानि वा एतेन षट् प्रतिष्ठापयति ॥

एतानि वक्ष्यमाणानि । एतेन षळिति वषट्कारेण ॥

कथं,

॥ द्यौरन्तरिक्षे प्रतिष्ठिता । अन्तरिक्षं पृथिव्याम् ॥

प्रतिष्ठितमिति गम्यते ॥

॥ पृथिव्यप्सु ॥

प्रतिष्ठिता ॥

॥ आपः सत्ये ॥

प्रतिष्ठिताः । *"तत्सत्यं सदिति प्राणः" इति श्रुतेरात्मात्र सत्यम्† ॥

॥ सत्यं ब्रह्मणि ॥

ब्रह्म वेदः ॥

---

* ऐ॰ आ॰ २-१-५. † 'आपश्च सत्ये समाश्रिताः । जनेषु सत्यवादिषु सत्सु यथाकालं वर्षिसंभवात्' इति सायणः.

॥ ब्रह्म तपसि ॥

*तपः परमं ज्योतिः। †"ऋतं च सत्यं चाभीद्धात् तपसः" इति यथा। प्रतिष्ठितम्॥

॥ इत्येता एव तत्प्रतिष्ठाः‡। प्रतितिष्ठन्तीरिदं सर्व-
मनु प्रतितिष्ठति यदिदं किञ्च॥

तत् तत्र॥

॥ प्रतितिष्ठति य एवं वेद॥

सः॥

इति वेदमतेनापि मन्त्रः पळिति संस्तुतः॥

अथान्यमाह—

॥ वौषळिति वषट्करोति॥

श्रूयते हि—§'वौषळिति वषट्कारः' इति॥

व्याचक्षाणः स्तौति—

॥ असौ वाव वौ॥

अत्र वौ इति शब्देन सूर्योऽसौ कथ्यते कथम्।
¶विर्वो हिर्ह्वि सोऽर्थे सदा खे गतिमान् रविः॥
§निघण्टौ पठ्यते चैवं 'विः पक्षिपरमात्मनोः'॥

---

* 'तपसि वषट्कारमन्त्रानुष्ठानरूपे' इति सायणः, 'परस्मिंस्तेजसि ईश्वरशरीरे' इति भट्टभास्करः. † ऋक्सं० ८-८-४८-१. ‡ 'अत्र यद्यप्यन्तरिक्षादीनामेव प्रतिष्ठात्वं ब्राह्मणेनोच्यते, तथापि द्युलोकस्यापि देवानां प्रतिष्ठात्वात् प्रतिष्ठेति द्युप्रभृतयः पठ्यन्ते। तपसस्तु सर्वस्य सत्त्वस्य सर्वप्रतिष्ठात्वे तस्य होत्रा कश्चिदप्रतिष्ठापनीयत्वात् तद्व्यतिरेकेण षड् गृह्यन्ते' इति भट्टभास्करः. § आ० श्रौ० सू० १-५-१५. ¶ 'उणादिसू० ४-७. (Madras University edition) इदं च कातन्त्रोणादिपाठानुसारेण. 'वौशब्दो निपातत्वाद् वा गतिप्रजनेत्यादिधातुजत्वाद्वा गमनस्वभावमादित्यमाचष्टे' इति सायणः. § वैजयन्त्यां शेषकाण्डे पुंलिङ्गाध्याये श्लो० ६०.

॥ ऋतवः षट् ॥

षट्पदेनर्तवश्चोक्ताः सुपः स्थाने जसोऽत्र लुक् ॥

ऋतुपट्के विरादित्यः स्थित इत्यर्थ इष्यताम्* ॥

ततश्च,

॥ एतमेव तदृतुष्वादधाति ॥

तत् तेन वौषट्शब्देन स्थापयेदृतुषु त्वमुम्[1] ॥

स्पष्टयति—

॥ ऋतुषु प्रतिष्ठापयति ॥

ऋतुषट्के स्थापयति सूर्यं किं स्यात् तदुच्यते—

॥ यादृगिव वै देवेभ्यः करोति तादृगिवास्मै देवाः कुर्वन्ति ॥

इव एव ।

ऋतुषु स्थापयन् सूर्यं स्वयं चैव स्थिरो भवेत् ।

यादृशं कुरुते कर्म तादृशं फलमश्नुते ॥

इति भावः ॥

षष्ठः खण्डः ।

---

१. 'स्थापयतः' क. ख. पाठः.

---

* 'वौषडित्यादिना वौषडिति वषट्कारान्तरं विदधाति । अत्र पक्षे वौ षडिति द्वे पदे वक्ति । तत्र पूर्वस्यार्थमाह—असौ वाव वाविति असौ खल्वादित्यो वौ इति पदेन सम्मन्त्रेणोच्यते । वेतेरौणादिके डिप्रत्यये विरिति आकाशगामी आदित्य उच्यते । तत्र षडृतवः उत्पद्यन्तामनेन यागेन इति समुदायार्थः । अस्यार्थस्य द्योतकः पदसमुदायात्मा निपातोऽयं द्रष्टव्यः । आदित्ये हि षडृतव उत्पद्यन्ते आदित्यगत्यधीनात्मलाभत्वादृतूनाम् । यद्वा वौ आदित्ये जगतां धारयितरि षडृतवः सद्भावेन वर्तन्ताम्', † 'एतमेव तदित्यादि । ननु विप्रतिषिद्धमिदं ब्राह्मणम् । आदित्य ऋतूनां स्थापनं मन्त्रेण प्रतिपाद्यते । आदित्यमेव ऋतुष्वादधाति इति ब्राह्मणेन कथमुच्यते । अयमभिप्रायः—नानेन वषट्शब्दस्यार्थोऽभिधीयते । अपितु ईदृशस्य वाक्यस्य फलमनेन ख्याप्यते इति व्याचष्टे । यस्मादादित्यस्योपकाराय तस्मिन् ऋतवः प्रतिष्ठाप्यन्ते तस्मात् प्रत्युपकारार्थमृतुष्वादित्यं प्रतिष्ठापयति । न केवलमृतूनामादित्ये स्थापनमेवानेन क्रियते, अपित्वादित्यस्याप्यृतुष्वास्थापनमनेन वौषट्शब्देन प्रतिपाद्यते प्रत्युपकारपर्यन्तत्वान्महत्सूपकारस्य । ...एतदेव स्पष्टयति यादृगिव वा इत्यादि' इति भट्टभास्करः.

वषट्कारं स्तौति तत्र त्रिधास्तित्वं प्रदर्शयन्—

॥ त्रयो वै वषट्काराः ॥

*त्रयस्त्रिविधाः ॥

कथं,

॥ वज्रो धामच्छद् रिक्तः ॥

विविच्याह—

॥ स यमेवोच्चैर्बलि वषट् करोति स वज्रः ॥

स होत्रादिः । बलि बलवत्, अतिस्फुटम् । यं वषट् वषट्कारं करोति प्रयुङ्क्ते स वज्रः ॥

ततश्च,

॥ तं तं प्रहरति द्विषते भ्रातृव्याय वधम् ।
योऽस्य स्तृत्यस्तस्मै स्तर्तवै ॥

†उक्तार्थम् ॥

॥ तस्मात स भ्रातृव्यवता वषट्कृत्यः ॥

‡विभाषा कृवृषोः क्यप् तुक् कार्यः शत्रुमता स च ॥

॥ अथ यः समः संततोऽनिर्हाणर्चः स धामच्छत् ॥

समः याज्यया तुल्यध्वनिः । संततः मध्ये उच्छ्वासरहितः । व्याचष्टे—अनिर्हाणर्चः । निर्हाणं विश्लेषः । §'ऋक्पूः—' इत्यकारः समासान्तः । ऋचा विश्लेषरहितः¶ ॥

---

* 'प्रकारत्रित्वं वषट्कार उपपादयति त्रिप्रकारो वषट्कारोऽयं भवतीति । वषट्शब्दश्च वौषडादीनामुपलक्षणम् । वषट्कारसाधनः शब्द इत्यर्थः' इति भट्टभास्करः. † pages 202 & 203. ‡ पा० सू० ३-१-१२०. § पा० सू० ५-४-७४. ¶ 'नितरां हानं निर्हाणम् । यस्य वषट्कारस्य ऋग् हीना न भवति सोऽनिर्हाणर्चः' इति गोविन्दस्वामी.

॥ तं तं प्रजाश्च पशवश्चानूपतिष्ठन्ते ॥

तं वषट्कारम् । तं धामच्छत्संज्ञम् । अनु संलक्षीकृत्य । प्रजाः पशवश्चोपतिष्ठन्ते ।

*धामच्छत्त्वं श्रिया धाम गृहं छादयतीति ह ॥

॥ तस्मात् स प्रजाकामेन पशुकामेन वषट्कृत्यः ॥

चेति शेषः ॥

॥ अथ येनैव षळवराप्नोति स रिक्तः ॥

†षण्मन्द्रमध्यमोत्तमद्रुतलम्बितमध्यमान् ।
ध्वनेर्विभागान् विच्छिन्द्याद् येन व्याहरणेन वै ॥
स रिक्ताख्यो वषट्कारोऽवराधिश्छेदवाचकः‡ ॥

स च,

॥ रिणक्त्यात्मानं रिणक्ति यजमानम् ॥

रिची रुधादिः ॥

व्याचष्टे—

॥ पापीयान् वषट्कर्ता भवति पापीयान् यस्मै वषट्करोति ॥

---

* 'धाम गृहस्थानं तत्र यथा रक्षांसि न प्रविशन्ति तथा छादयति स धामच्छद्' इति सायणः. † तथाच ऋक्प्रातिशाख्ये—'त्रीणि मन्द्रं मध्यममुत्तमं च स्थानान्याहुः सप्त यमानि वाचः', 'तिस्रो वृत्तीरुपदिशन्ति वाचो विलम्बितां मध्यमां च द्रुतां च' इति १३-४२ & ४६. (Benares Edition) ‡ 'येन वषट्कारेण षडपि शब्दधर्मान् शिक्षाशास्त्रप्रसिद्धान् वर्णस्वरमात्राबलस्थानसन्तानाख्यान् अवराप्नोति व्यर्थयति अवहीनान् करोति स वषट्कारो रिक्तो नाम' इति भट्टभास्करः. 'षट्शब्दो वषट्कारमभिधत्ते येनैवोच्चारणेन षडवराप्नोति वषट्कारोऽवरार्धं समृद्धयभावं प्राप्नोति । नीचोच्चारणेन वषट्कारस्य समृद्धयभाव' इति सायणः. 'षळिति वषट्कारमन्त्रः तस्य अवराधः ऋक्स्वराणामैकश्रुत्यम्' इति गोविन्दस्वामी.

*पापीयान् निःश्रीकः ॥

॥ तस्मात् तस्याशां नेयात् ॥

इच्छानिषेधे निषिद्धा दण्डापूपिकया क्रिया ॥

॥ किं स यजमानस्य पापभद्रमाद्रियेतेतिहस्माह योऽस्य होता स्यादिति । अत्रैवैनं यथा कामयेत तथा कुर्याद् ॥

†उक्तार्थम् ॥

॥ यं कामयेत यथैवानीजानोऽभूत् तथैवेजानः स्यादिति ॥

ईजानः इष्टवान् ॥

तत्र,

॥ यथैवास्य ऋचं ब्रूयात् तथैवास्य वषट्कुर्यात् ॥

‡'ऋत्यकः' । अस्य यजमानस्य ॥

॥ सदृशमेवैनं तत् करोति ॥

तत् तेनानीजानेन । एनमीजानम् ॥

तथा,

॥ यं कामयेत पापीयान् स्यादिति ॥

तत्र,

॥ उच्चैस्तरामस्य ऋचमुक्त्वा शनैस्तरां वषट्कुर्यात् ।
पापीयांसमेवैनं तत् करोति ॥

तत् तत्र ॥

---

* 'अत्यन्तनरकसाधनपापेन युक्तः' इति सायणः. † page 419. ‡ पा॰ सू॰ ६-१-१२८.

तथा,

॥ यं कामयेत श्रेयान् स्यादिति ॥

श्रेयान प्रशस्यतरः ॥

तदा,

॥ शनैस्तरामस्य ऋचमुक्त्वोच्चैस्तरां वषट्कुर्यात् ॥

एतच्च,

॥ श्रिय एव ॥

स्यात् । तादर्थ्ये ङे । इयङ् । एव पुनः ॥

स्पष्टयति—

॥ एनं तच्छ्रियामादधाति ॥

तत् तत्र । श्रियां समृद्धौ ॥

ततश्च,

॥ संततमृचा वषट्कृत्यम् ॥

भावे क्तः संततं क्रमलुग् वषद् तुक् कृन्नपोः क्यपि* ।
वषट्कारस्य कर्तव्यं संश्लेषणमृचा सह ॥

किमर्थं,

॥ संतत्यै ॥

प्रजातिसमृद्ध्यर्थम् ॥

---

* पा० सू० ३-१-१२०.

॥ संधीयते प्रजया पशुभिर्य एवं वेद ॥

सः । संधीयते सम्बध्यते ।

त्रिषु धामच्छदेवेह सम्यक् कर्तव्य ईरितः ।

अत एव हि सूत्र्यते— "' उच्चैस्तरां बलीयान् याज्यायाः ' इति ॥

सप्तमः खण्डः ।

---

अथ सम्यग् वषट्कर्तुर्देवताध्यानमुच्यते—

॥ यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद् वषट्करिष्यन् ॥

(पुरा देवै ?)र्वेदितव्यं रूपवर्णायुधादिकम् ।

देवतानां नामपत्नीपुत्रभृत्यादिकं तथा ॥

ध्यायंश्च,

• ॥ साक्षादेव तद् देवतां प्रीणाति ॥

तत् ताम् । साक्षादव्यवधानेन ॥

स्पष्टयति—

॥ प्रत्यक्षाद् देवतां यजति ॥

टार्थे तसिः, प्रत्यक्षेण* । यजति सम्यक् प्रीणाति ॥

अथ वषट्कारानुमन्त्रणं विधातुमाह—

॥ वज्रो वै वषट्कारः ॥

---

* आ० श्रौ० सू० ३-५-६. । 'यागकाले प्रत्यक्षेण यष्टव्येत्यर्थः । ननु देवता चक्षुषा न दृश्यते । कथमस्याः प्रत्यक्षत्वमिति चेत्, नायं दोषः । मानसप्रत्यक्षस्य विवक्षितत्वात् । यथा पुरोवर्तिनी देवता चक्षुषा दृश्यते तथैव चिन्त्यमानापि मनसा दृश्यत एव ' इति सायण..

ततः किं,

॥ स एष प्रहृतोऽशान्तो दीदाय ॥

प्रहृतः, ह्वृञ् शब्दनार्थः, प्रयुक्तः । अशान्तः कुपितः दीदाय ।

दीदीतिधातुर्दीप्त्यर्थो ल(त? ति)णल् दीप्यते भृशम् ॥

॥ तस्य हैतस्य न सर्व इव शान्तिं वेद न प्रतिष्ठाम् ॥

तस्य वषट्कारस्य । शान्तिं शमनं प्रतिष्ठां सुखस्थितिं च* । सर्वो न जानाति । इव एव ॥

॥ तस्माद्धाप्येतर्हि भूयानिव मृत्युः ॥

तस्माद् तथाहि । एतर्ह्यस्मिन्नपि काले । †स वषट्कारः भूयान् बहुतरः मृत्युरिव मरणहेतुः ॥

॥ तस्य हैषैव शान्तिरेषा प्रतिष्ठा ॥

चेति शेषः । एषा वक्ष्यमाणा ॥

सा च,

॥ वागित्येव ॥

वागोजइत्यादिमन्त्रः प्रोक्त आदिग्रहादिह ॥

॥ तस्माद् वषट्कृत्य वषट्कृत्य वागित्यनुमन्त्रयेत ॥

---

* 'प्रतिष्ठाम् अवसानम् । एतावत्येव दीप्यते नातः परमित्येतदपि न जानाति' इति भट्टभास्करः. † 'तस्माच्छान्तिप्रतिष्ठाज्ञानाभावादेतर्ह्यपीदानीमपि लोके मृत्युर्भूयानिव बहुभूत एव प्रवर्तते' इति सायणः. 'जीवनादपि बहुतरः प्रजानां मृत्युर्भवति हिंसकाकान्तत्वाद्' इति भट्टभास्करः.

'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुक्त्वोक्त्वानुमन्त्रयते इत्यर्थः । वषट्शब्दस्य *साक्षात्प्रभृतित्वाद् गतित्वे कृत्वः क्त्वो ल्यप् लुक् ॥

अनुमन्त्रितश्च,

॥ स एनं शान्तो न हिनस्ति ॥

सः वषट्कारः । एनं वषट्कर्तारम् ॥

अनुमन्त्रणान्तरमाह—

॥ वषट्कार मा मां प्रमृक्षो माहं त्वां प्रमृक्षं बृहता मन उपह्वये व्यानेन शरीरं प्रतिष्ठासि प्रतिष्ठां गच्छ प्रतिष्ठां मा गमयेति वषट्कारमनुमन्त्रयेत ॥

मृक्षिर्हिंसार्थः ॥

एतत्र †दुष्टित्याह—

॥ तदु ह स्माह ॥

तत् अनुमन्त्रणम् उ निन्दयन् कश्चिद् ब्रह्मवादी आह स्म ह ॥

कथं,

॥ दीर्घमेतत् सदप्रभु ॥

इतीति शेषः । एतदनुमन्त्रणम् अप्रभु असमर्थम् । सत् भवत् । ‡दीर्घं दुर्वचं चेति ॥

---

* पा० सू० १-४-७४ † 'तदुह तत्रैवानुमन्त्रणे' इति सायणः. ‡ 'दीर्घं दीर्घकालोच्चारणीयं सद् असौ वषट्कारं शमयितुम्' इति भट्टभास्करः.

केन तर्हि,

॥ ओजः सह ओज इत्येव वषट्कारमनुमन्त्रयेत ॥

स्तौति—

॥ ओजश्च ह वै सहश्च वषट्कारस्य प्रियतमे तन्वौ ॥

ओजो दीप्तिर्बलं चापि प्रसह्यकरणं सहः ।

तन्वौ शरीरे द्वे ॥

॥ प्रियेणैवैनं तद्धाम्ना समर्धयति ॥

*तत् तेन धाम्ना तेजसा । एनं वषट्कारम् । सम्यग् वर्धयति ॥

किञ्च,

॥ प्रियेण धाम्ना समृध्यते य एवं वेद ॥

ऋः श्यन् । तिपस्तः । स वेदितश्नोति ॥

अथ पूर्वोक्तवागोजोयन्त्वं वक्तुं ब्रवीति ह—

॥ वाक् च वै प्राणापानौ च वषट्कारः ॥

प्राणापानवाग्यतेन दौहिना वाच्य इत्यतः† ॥

ततः किं,

॥ त एते वषट्कृते वषट्कृते व्युत्क्रामन्ति ॥

ति नाना । ‡उत्क्रम ऊर्ध्वगतिः । §'क्रमः परस्मैपदेषु' इति शपि दीर्घः ॥

---

* 'वषट्कार एनं होतारम् आत्मीयेन प्रियेण धाम्ना स्थानेन तेजसा वा' इति भट्टभास्करः. 'एनं वषट्कारः प्रियेण धाम्ना सर्वभूतानामनुग्रहकारिणा प्रियेण स्वरूपेण समृद्धं करोति' इति सायणः. † 'वाक् च प्राणापानौ वा अयं वषट्कारः । तद्धेतुत्वात् तात्स्वरूप्यम्' इति भट्टभास्करः. 'येयं वागस्ति यौ च प्राणापानौ तावेते त्रयो वषट्कारस्वरूपम्' इति सायणः. ‡ 'व्युत्थाय निष्क्रामन्ति' इति भट्टभास्करः. § पा० सू० ७-३-७६.

तच्छान्तये,

॥ *तानुमन्त्रयेत वागोजः स ह ओजो मयि प्राणापानाविति ॥

तान् उत्क्रान्तान् ॥

॥ आत्मन्येव तद्धोता वाचं च प्राणापानौ च प्रतिष्ठापयति ॥

तत् तेनानुमन्त्रणेन । होत्रादिर्वषट्कर्ता । आत्मनि स्वे देहे ॥

ततश्च,

॥ सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद ॥

†उक्तार्थानि ॥

अष्टमः खण्डः ।

---

* प्रैषं पुरोरुचं वेदिं ग्रहं निविदमेव च ।
पञ्च शब्दान्निर्ब्रुवाणो रोचयंस्त्वौत्ययो पृथक्—

॥ यज्ञो वै देवेभ्य उदक्रामत् ॥

‡उक्तार्थम् ॥

॥ तं प्रैषैः प्रैषमैच्छन् ॥

प्रैषसूक्तसमाम्नातैर्होतायक्षत्पदादिकैः ।
§णमुल् तुमर्थेऽन्वयें प्र प्रैच्छन्नन्वेष्टुमध्वरम् ॥

---

* 'वागोजः स ह ओजो मयि प्राणापानाविति वषट्कारमुक्तांस्तानुमन्त्रयते' इति आ० श्रौ० सू० १-५-१७. † page 247. ‡ page 18. § 'प्रैषम् आह्वानम्' इति सायणः.

॥ यत् प्रैषैः प्रैषमैच्छंस्तत् प्रैषाणां प्रैषत्वम् ॥

*नष्टान्वेषणहेतुत्वात् प्रैषत्वमिति गृह्यताम् ॥

किञ्च,

॥ तं पुरोरुग्भिः प्रारोचयन् ॥

पुरोरुचस्तु खैलिक्यः प्राक् तृचेभ्यो हि सप्त याः ।
†वायुरग्रादिकाः शस्त्रे द्वितीये प्रउगाह्वये ॥

॥ यत् पुरोरुग्भिः प्रारोचयंस्तत् पुरोरुचां पुरोरुक्त्वम् ॥

अन्विष्यमाणे यज्ञे वै दीपा आसन् पुरोरुचः‡ । इत्यर्थः ॥

किञ्च,

॥ तं वेद्यामन्वविन्दन् ॥

अलभन्त ॥

॥ यद् वेद्यामन्वविन्दंस्तद् वेदेर्वेदित्वम् ॥

§विदेरिचि कृते वेदिराधारे लभ्यतेऽत्र तत् ॥

॥ तं वित्तं ग्रहैर्व्यगृह्णत ॥

वित्तं लब्धम् । ग्रहैरैन्द्रवायवादिभिः । विग्रहो विभज्य ग्रहणम् ॥

॥ यद् वित्तं ग्रहैर्व्यगृह्णत तद् ग्रहाणां ग्रहत्वम् ॥

¶'ग्रहवृदृनिश्चि—' इति करणेऽप् ॥

---

* 'प्रैषन्त्याह्वानं कुर्वन्त्येभिरिति व्युत्पत्त्या मन्त्राणां प्रैषनाम सम्पन्नम्', † तै० ब्रा० २-४-७ अनुवाके द्रष्टव्याः । 'वायुरग्रे मा यज्ञप्रीरिति यसानां पुरोरुचां तस्यास्तस्या उपरिष्टात् तृचं तृचं शंसेत् । वायवायाहि दर्शतेति सप्त तृचाः' इति आ० श्रौ० सू० ५-१०-४,५. ‡ 'आरोचयन् यज्ञस्य रुचिमुत्पादितवन्तः । अतः पुरो रोचनाद्धेतुत्वात् पुरोरुगिति नाम सम्पन्नम्' इति सायणः. § उणादिसू० ४-११८. इन् इत्प्रत्ययाभ्यामेव वेदिशब्दनिष्पत्तिर्मुद्रितोणादिषु दृश्यते. ¶ पा० सू० ३-३-५८.

॥ तं वित्त्वा निविद्भिर्न्यवेदयन् ॥

वित्त्वा लब्ध्वा । निवेदनं प्रकाशनम् ॥

॥ यद् वित्त्वा निविद्भिर्न्यवेदयंस्तन्निविदां निवित्त्वम् ॥

निपूर्वाद्विदेः प्रकाशनार्थात् करणे सम्पदादिकिप्* ॥

अथ प्रैषांस्तु वदतः प्रषास्तुः प्रह्वतोच्यते—

॥ महद्वाव नष्टैष्यभ्यल्पं वेच्छति ॥

नष्टैषी नष्टान्वेषणकारी । अल्पं फलादि महद्रत्नादिकं वा अभीच्छति प्रार्थयते ॥

तत्र,

॥ यतरो वाव तयोर्ज्याय इवाभीच्छति स एव तयोः
साधीय इच्छति ॥

तयोर्मध्ये यतरः यः । ज्यायः महत् । इव एव । साधीयः अत्यर्थम् । बाढस्येयसुनि साधः† ॥

एवञ्च,

॥ य उ एव प्रैषान् वर्षीयसो वर्षीयसो वेद स
उ एव तान् साधीयो वेद ॥

वृद्धस्येयसुनि वर्षादेशः‡ । वृद्धतरान् । उ खलु । उ पुनः । वेद जानाति ॥

---

* पा० सू० वा० ३-३-९४. † पा० सू० ५-३-६३. ‡ पा० सू० ६-४-१५७.

ततः किं,

॥ नष्टैष्यं ह्येतद् यत् प्रैषाः ॥

एतद्वै । यत् ये । जसोऽम् । नष्टैष्याः । इषेः कर्मणि ण्यत्* ॥

॥ तस्मात् प्रह्वस्तिष्ठन् प्रेष्यति ॥

प्रह्वः अवनतगात्रः । तस्मात् तथाहि । सूत्र्यते हि—†'दक्षिणो होतृषदनात् प्रह्वोऽवस्थाय वेद्यां दण्डमवष्टभ्य ब्रूयात् प्रैषांश्चादेशम्' इति ॥

नवमः खण्डः ।

---

अथ निविदः स्तौति—

॥ गर्भा वा एत उक्थानां यन्निविदः ॥

यत् याः । उक्थानां शस्त्राणाम् । एते गर्भाः । लुप्तोपमम् । गर्भा इव ॥

कथं,

॥ तद्यत् पुरस्तादुक्थानां प्रातःसवने धीयन्ते
तस्मात् पराञ्चो गर्भा धीयन्ते पराञ्चः संभवन्ति ॥

यत्तदोर्व्यत्ययेऽत्र स्यात् पराञ्चस्तु पराङ्मुखाः ।
योनौ गर्भा निधीयन्ते सिक्ता वृद्धिं व्रजन्ति यत्‡ ॥

---

* 'नष्टैष्यं नष्टस्यान्वेषणसाधनम् । करणे कृत्यः' इति भट्टभास्करः. † आ० श्रौ० सू० ३-१-२०. ‡ 'गर्भाःपराञ्चः शरीरे परमुत्कृष्टं पुरोभागमभयन्तो गच्छन्तो धीयन्ते धार्यन्ते । प्रसवकालेऽपि पराञ्चः पुरोमार्गं गच्छन्त उत्पद्यन्ते प्रयुक्ताः' इति सायणः. 'यथा गर्भाः प्रथमं पार्श्वतः प्रविश्य ततो मध्ये स्थित्वा पश्चात् ततो गर्भान्निर्गच्छन्ति तद्वत् प्रथमं प्रातःसवने उक्थानां पुरस्तात् पूर्वस्मिन् पार्श्वे धीयन्ते स्थाप्यन्ते शस्यन्ते निविदो यस्मात् तस्मात् स्त्रीशरीरेषु पराञ्चः बाह्यद् गर्भाधानमपुनरावृत्ता निषिच्यन्ते गर्भाः गर्भोपादानानि रेतांसि । तत्र च पराञ्चोऽपुनरावृत्ता एव संभवन्ति संपद्यन्ते वर्धन्त इत्यर्थः' इति भट्टभास्करः

तस्मात् सूक्तस्य पुरतो निवित् प्रातर्निधीयते ।
उक्थं शस्त्रमवयवापेक्षं च बहुवद्वचः ॥

तत् तत्र ॥

किञ्च,

॥ यन्मध्यतो मध्यंदिने धीयन्ते तस्मान्मध्ये गर्भा धृताः ॥

पूर्ववत् ॥

॥ यदन्ततस्तृतीयसवने धीयन्ते तस्मादमुतोऽर्वाञ्चो गर्भाः प्रजायन्ते ॥

*अर्वाञ्चः अर्वाचीनाः । अमुतः मातुरुदरात् । अन्ततः प्रागन्त्यायाः । †'एकां परिशिष्य तृतीयसवने' इति हि वक्ष्यते ॥

विदुष आह—

॥ प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद ॥

अपरथा स्तौति—

॥ पेशा वा एत उक्थानां यन्निविदः ॥

यत् याः । पेशम् अलंकारः । जसि सलोपश्छान्दसः‡ ॥

॥ तद्यत् पुरस्तादुक्थानां प्रातस्सवने धीयन्ते यथैव प्रवयणतः पेशः कुर्यात् तादृक् तत् ॥

---

* 'अमुतो गर्भाशयाद् अर्वाञ्चः इतोमुखाः' इति भट्टभास्करः. † ऐ० ब्रा० ११-११. ‡ 'पिश अवयवे । असुन्प्रत्ययः शौ सेरछन्दसि बहुलमिति लोपः । यद्वा यति रूपं द्रष्टव्यम्' इति भट्टभास्करः.

तत् तत्र । तादृक् तादृशम् ।

वस्त्रादेर्वयनारम्भदेशं प्रवयणं विदुः ।
वेञो ल्युट् करणे ज्ञेयः प्रशब्दश्चादिकर्मणि ॥

॥ यन्मध्यतो मध्यंदिने धीयन्ते यथैव मध्यतः
पेशः कुर्यात् तादृक् तत् ॥

हारिद्रादिकसूत्रेण वस्त्रं मध्ये विभूष्यते ॥

॥ यदन्ततस्तृतीयसवने धीयन्ते यथैवावप्रज्जनतः
पेशः कुर्यात् तादृक् तत् ॥

*अवप्रज्जनेति वस्त्राद्यन्तदेशोऽभिधीयते ॥

॥ सर्वतो यज्ञस्य पेशसा शोभते य एवं वेद ॥

यज्ञस्य सर्वालङ्कारैर्विद्वानपि स शोभते ॥

दशमः खण्डः ।

---

अथ ता एव निविदः पुनः स्तौति प्ररोचयन्—

॥ सौर्या वा एता देवता यन्निविदः ॥

---

* 'अवसितं प्रजननमवप्रजननम् अवसानम् । द्वितीयो जकार उपजनः । यद्वा प्रतिमुखं जननं प्रजननम् । सर्वात्मना समाप्तिः । प्रतेरन्त्यलोपश्छान्दसः' इति भट्टभास्करः.

सूर्यादित्यर्येनष्टाप् (?) ता निविदः सूर्यसन्निभाः*।
पूज्यत्वाद्देवता यद् याः सूर्यसादृश्यमाह ह—

॥ तद्यत् पुरस्तादुक्थानां प्रातस्सवने धीयन्ते मध्यतो मध्यन्दिनेऽन्ततस्तृतीयसवन आदित्यस्यैव तद् व्रतमनु पर्यावर्तन्ते ॥

तत् तत्र । तत् तेन । व्रतं कर्म । परि सर्वतः । अनु लक्षीकृत्य । आवर्तन्ते कुर्वन्ति ॥

अथ निविदां पच्छस्तामाह—

॥ पच्छो वै देवा यज्ञं समभरन् ॥

†'ऋचः श' इति पादस्य पद्भावे पच्छ उच्यते ।
‡'ऋचां त्व' इत्यृचः पादैश्चतुर्वर्गाभिधायिभिः ॥

§पुरा यज्ञं सुरा जह्रुरिति श्रौती कथोच्यते¶ ।

भृञ् ज्ञानार्थः ॥

॥ तस्मात् पच्छो निविदः शस्यन्ते ॥

यथापाठं पादेष्ववसाय ॥

---

* 'या निविदः सन्ति ता एताः सूर्यसम्बन्धिन्यः' इति सायणः. 'सूर्यस्य व्रतं सौरं, तत्र साध्व्यः सौर्याः सूर्येण तुल्यव्रताः । निविदो नाम सौर्याः सूर्येण तुल्यकर्माणो भवन्ति । तदेवाह—आदित्यस्यैव तद् व्रतं कर्मानु पर्यावर्तन्ते पर्यायेणानुवर्तन्तेऽनुगच्छन्ति । तत्प्रकारश्च तद्यत् पुरस्तादित्यादिना दर्शितः । यदा पुनः सूर्यस्येना इत्यर्थे तस्येदमित्यण् क्रियते तदापि ङीपि सूर्यतिष्यागस्त्येति यलोपे सौर्यो निविदः स्युः न सौर्याः । तस्मात् सौरे कर्मणि साध्व्य इति तत्र साधुरिति यद् भवति इति वेदितव्यम्' इति भट्टभास्करः. † पा॰ सू॰ ६-३-५५. ‡ ऋक्सं॰ ८-२-२४-६. § 'देवाः खलु यज्ञं निविदात्मकं पच्छः पादशः पदे पदेऽवसाय समभरन्' इति भट्टभास्करः. 'देवाः पुरा यज्ञं पच्छः पादशः समभरन् एकैकं पादं क्रमेण संपादितवन्तः' इति सायणः. ¶ कथा चेयं मृग्या.

शंसित्रे निविदामश्वं देयं वक्तुं कथोच्यते—

॥ यद्वै तद्देवा यज्ञं समभरंस्तस्मादश्वः समभवत् ।

तस्मादाहुरश्वं निविदां शंस्त्रे दद्यादिति ॥

यत् यत्र । वै पुरा । तत् ते । तस्मात् ल्यब्लोपे कर्मणि, तस्मिन् काले* । तस्मात् तथाहि । शंस्त्रे, इष्ट्र† । शंसित्रे ॥

अश्वदानं स्तौति—

॥ तदु खलु वरमेव ददति ॥

उ अपि ।

क्रतोरुक्ता दक्षिणास्तु यजमाने ददत्यपि ।

तदश्वदानमधिकं वरणीयं वरं विदुः ॥

किञ्च,

॥ न निविदः पदमतीयात् ॥

अत्ययोऽतिक्रमः ॥

॥ यन्निविदः पदमतीयाद् यज्ञस्य तच्छिद्रं कुर्यात् ॥

यत् यदि । तदतिक्रमणं कर्तुं ॥

ततश्च,

॥ यज्ञस्य वै छिद्रं स्रवद् यजमानोऽनु पापीयान् भवति ॥

तुक् नात्र वा पदान्तस्य‡ त्वयाःकृतरसं स्रवत् ॥

---

* 'यद्वै यस्मिन्नेव देशे तत् तदा देवा यज्ञं संपादितवन्तस्तस्माद् देशात्' इति सायणः. 'यद्वै तदित्यादि । यदा खलु देवा यज्ञं निविदात्मकं तत् तेन प्रकारेण पञ्चशः समभरन् तदा तस्मात् तादृशाद् यज्ञात्' इति भट्टभास्करः. † पा० सू० ७-२-३४. ‡ पा० सू० ६-१-७६.

निगमयति—

॥ *तस्मान्न निविदः पदमतीयात् ॥

किञ्च,

॥ न निविदः पदे विपरिहरेत् ॥

विपरिहारो व्यत्यासः ॥

॥ यन्निविदः पदे विपरिहरेन्मोहयेद् यज्ञम् ॥

कर्तव्याज्ञानं मोहः ॥

ततश्च,

॥ मुग्धो यजमानः स्यात् ॥

व्याकुलचित्तः ॥

॥ तस्मान्न निविदः पदे विपरिहरेत् ॥

किञ्च,

॥ न निविदः पदे समस्येत् ॥

समासोऽनवसायोच्चारणम् ॥

॥ यन्निविदः पदे समस्येद् यज्ञस्य तदायुः संहरेत् ॥

यत् यदि । तत् तदा । अल्पकालतयायुषो नाशः ॥

ततश्च,

॥ प्रमायुको यजमानः स्यात् ॥

मायुर्द्रूस्शब्दः । †'यत् पशुर्मायुम्' इति लिङ्गात् । मायुर्मरणमित्येके ॥

* 'तस्मान्न निविद इति द्वितीयं निषेधवचनमभ्यासपरिहारार्थम्' इति भट्टभास्करः.

† तै० सं० ३-१-५.

॥ तस्मान्न निविदः पदे समस्येत् ॥

किन्तु,

॥ प्रेदं ब्रह्म प्रेदं क्षत्रमित्येते एव समस्येत् ॥

एते पदे ॥

किमर्थं,

॥ ब्रह्मक्षत्रयोः संश्रित्यै ॥

संश्रितिर्दुर्भेदः संश्लेषः ॥

॥ तस्माद् ब्रह्म च क्षत्रं च संश्रिते ॥

*सर्वस्य साधके इति शेषः । तस्मात् तथाहि ॥

किञ्च,

॥ न तृचं न चतुर्ऋचमतिमन्येत निविद्धानम् ॥

†निविन्निधानं सूक्तं स्यात् तृचादि तु ततोऽल्पकम् ।
ऋचमेकर्चकं वापि कस्मादित्यत उच्यते—

॥ एकैकं वै निविदः पदमृचां सूक्तं प्रति‡ ॥

---

* 'तस्मादेव लोके जातिद्वयं परस्परमाश्रित्य तिष्ठति । ब्राह्मणो धर्मं प्रवर्तयति क्षत्रियस्तस्य रक्षां करोति ' इति सायणः. † 'उक्तं प्रातःसवने उक्थानां पुरस्तान्निविदो दध्यादिति । तृतीयसवने च वक्ष्यति एकामृचं परिशिष्य तत्र निविदो दध्यादिति । इदानीं तु माध्यंदिने सवने मध्ये निधीयमाना निवित् क प्रदेशे निधेया इति शङ्कायां तन्निर्णयः क्रियते—न तृचं न चतुर्ऋचमतिमन्येत निविद्धानमिति । माध्यंदिने सवने तृचं वा चतुर्ऋचं वातीत्य निविद्धानं न मन्येत । तृचचतुर्ऋचाभ्यधिकास्वृक्षु पञ्चषट्सप्तादिषु निविद्धानं कर्तुं न मन्येत । अपितु तिसृषु चतसृषु वा ऋक्षु निविदं दध्यात् । त्रिचतुर्ग्रहणाद् द्वयोरेकस्यां च निविदं न दध्यादिति लभ्यते ' इति भट्टभास्करः. ‡ 'ऋचं सूक्तं प्रति ' इति सायणसम्मतः पाठः । तथाच तद्व्याख्या 'निविदः सम्बन्धि यदेकैकमेव पदं तदेव प्रत्यृचं प्रतिसूक्तं च समर्थं भवति ' इति.

ऋचां सम्बन्धि यत् सूक्तं तेन तुल्यं निवित्पदम् ।
एकैकमर्हन्तं नार्वाक् वोढुं तृचचतुर्ऋचाम् (?) ॥

निगमयति—

॥ तस्मान्न तृचं न चतुर्ऋचमतिमन्येत निविद्धानम् ॥

किञ्च,

॥ निविदा ह्येव स्तोत्रमतिशस्तं भवति ॥

स्तोमातिशंसनं चापि निविदा कृतमिष्यताम् ॥

किञ्च,

॥ एकां परिशिष्य तृतीयसवने निविदं दध्यात्* ॥

शिषः असर्वोपयोगे क्त्वो ल्यप् ॥

॥ यद् द्वे परिशिष्य दध्यात् प्रजननं तदुपहन्यात् ॥

यत् यदि । द्वे ऋचौ । प्रजननं योनिम्† ॥

व्याचष्टे—

॥ गर्भैस्तत् प्रजा व्यर्धयेत् ॥

गर्भैः सम्पाद्याः प्रजाः । द्विपरिशेषणं तत् । व्यर्धयेत् नाशयेत्‡ ॥

॥ तस्मादेकामेव परिशिष्य तृतीयसवने निविदं दध्यात् ॥

---

* 'एकां शिष्ट्वा तृतीयसवने' इति आ० श्रौ० सू० ५-१४-२३.
† 'द्वाभ्यामतिशंसनेन प्रजननस्य पीडितत्वात् प्रजननस्थानीयत्वाच्च ज्योतिष्टोमस्य । यथोक्तं प्रजननं ज्योतिरिति' इति भट्टभास्करः.　‡ 'प्रजननमुपहन्यादित्यनेन यजमानस्य प्रजोत्पादनराहित्यम् । प्रजा व्यर्धयेदित्यनेन पूर्वमुत्पन्नानां पुत्रादीनामपत्यराहित्यम्' इति सायणः.

किञ्च,

॥ न सूक्तेन निविदमतिपद्येत ॥

*ङ्यर्थे टा । अतिपत्तिः स्वदेशात् प्रच्युतिः ॥

॥ येन सूक्तेन निविदमतिपद्येत न तत् पुनरुपनिवर्तेत ॥

वृतिरन्तर्णीतण्यर्थः । न पुनरावर्तयेत्[1] ॥

कुतः,

॥ वास्तुहमेव तत् ॥

†'प्रहीणं वास्तुहं च्युतम्' इति निघण्टुः ॥

॥ अन्यत् तद्दैवतं तच्छन्दसं सूक्तमाहृत्य तस्मिन्निविदं दध्यात् ॥

‡'अनसन्तान्नपुंसकात्—' इति टच् ॥

॥ §मा प्र गाम पथो वयमिति पुरस्तात् सूक्तस्य शंसति ॥

च्युतसूक्तस्थानीयस्य पुरस्तान्मा प्रगामेति षळृचं शंसेत्¶ ॥

कस्मादेवम्,

॥ पथो वा एष प्रैति यो यज्ञे मुह्यति ॥

---

1. 'पुनरुपनिवर्तयेत्' प. क. पाठः.

---

* 'सूक्तेन निविद्धानीयेन' इति भट्टभास्करः. † निघण्टुरयं सुबन्धः. 'वास्तुशब्देन निविदः स्थानमुच्यते तस्य स्थानस्य घातकम्' इति सायणः. ‡ पा० सू० ५-४-१०३. § ऋक्सं० ८-१-१९-१. ¶ 'स्थानं चेन्निविदोऽतिहरेन्मा प्रगामेति पुरस्तात् सूक्तं शस्त्वाऽन्यस्मिंस्तद्दैवते दध्यात्' इति आ० श्रौ० सू० ६-६-१८. 'निविदः स्थानातिहारो नामैवंरूपः । सूक्तस्य यस्मिन्नन्तराले निविद् धीयते तस्माद् या पूर्वा ऋक् तदन्तर्गतेन प्रणवेनाहावमहृत्वैवानन्तरामेव ऋचं सन्धाय तस्यामनिचोदिते-ऽवसानेऽवसानपर्यन्तमुक्त्वा यदावस्येत् एवंप्रकार एव निविदतिहारो नान्यः प्रकार इति । यतोऽन्यथा या प्रमादः स दुष्टोऽप एव न निविदतिहारः' इति तत्र गार्ग्यनारायणवृत्तिः.

यज्ञप्रयोगमूढो यः स मार्गाद् वैदिकाच्च्युतः ॥

॥ मा यज्ञादिन्द्र सोमिन इति ॥

प्रगामेत्यनुवर्त्य व्याचष्टे—

॥ यज्ञादेव तस्य प्रच्यवते ॥

तत् तत्र ॥

॥ मान्तःस्थुर्नो अरातय इति ॥

अरातयो नो न बाधेरन्नित्यर्थं मत्वा व्याचष्टे—

॥ अरातीयत एव तदपहन्ति ॥

*अरातिरसमृद्धिः। तां परस्येच्छतः। †'छन्दसि परेच्छायाम्' इति क्यचः शतुः शस्। अपहन्ति बाधते ॥

॥ ‡यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः।
तमाहुतं नशीमहीति ॥

अत्र,

॥ प्रजा वै तन्तुः ॥

ततश्च,

॥ प्रजामेवास्मा एतत् संतनोति ॥

अस्मै अस्य। एतत् एतर्हि। सम्यग् विस्तारयति ॥

॥ §मनो न्वा हुवामहे नाराशंसेन सोमेनेति ॥

---

* 'अरातीयतः शत्रुत्वमिच्छतः' इति सायणः. † पा० सू० वा० ३-१-१०७.
‡ ऋक्सं० ८-१-१९-२. § ऋक्सं० ८-१-१९-३.

व्याचष्टे—

॥ मनसा वै यज्ञस्तायते ॥

*'तनोतेर्यकि' इत्यात्वम् ॥

स्पष्टयति—

॥ मनसा क्रियते । सैव तत्र प्रायश्चित्तिः प्रायश्चित्तिः ॥

प्रायो नाशस्तस्य चित्तिः समाधानमिदं भवेत् ।
†प्रायस्य चित्तिचित्तयोरिति सुड् गणसूत्रतः ॥
तत्रातिपत्तौ निविदां द्विरुक्त्यर्थः समापनम् ॥

एकादशः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ
सुखप्रदायामेकादशोऽध्यायः[1] ॥

---

## अथ द्वादशोऽध्यायः ।

अथाहावप्रतिगरं शस्त्वाजपविभेदतः ।
छन्दःसंकल्पनाद् देवविशां क्लृप्तिं ब्रवीति ह—

1. 'इति षड्गुरुशिष्येण विरचितायां ब्राह्मणवृत्तौ एकादशोऽध्यायः' प. क. पाठः.

* पा० सू० ६-४-४४. † पा० सू० ६-१-१५७.

॥ देवविशः कल्पयितव्या इत्याहुः । छन्दश्छन्दसि प्रतिष्ठाप्यमिति ॥

*देवविशः देवसेनाः । †'सर्वाणि वाव छन्दांसि च पृष्ठानि च' इत्यत्र छन्दसां देवपरिचारकत्वमुक्तमङ्गीकृत्योच्यते । ‡छन्दश्छन्दसि । सम्पत्त्या देवसेना इह सङ्कल्पयितव्या इत्याहुरित्यर्थः ॥

कथं,

॥ शोंसावोमित्याह्वयते प्रातस्सवने त्र्यक्षरेण§ ।
शंसामोदैवोमित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण¶ ॥

होताह्वानस्य कर्ताऽत्राध्वर्युः प्रतिगरस्य च ॥

॥ तदष्टाक्षरं सम्पद्यते ॥

त्रिभिश्च पञ्चभिश्चाष्टसंख्याभूदक्षरानुगा ॥

ततः किम्,

॥ अष्टाक्षरा वै गायत्री । गायत्रीमेव तत् पुरस्तात् प्रातस्सवनेऽचीक्लृपताम् ॥

पुरस्ताच्छब्दस्य । ‖'कृपो रो लः' । $'णौ चङ्युपधाया ह्रस्वः' । ‡'उर्ऋत्' । तसस्ताम् । होत्रध्वर्यू अकल्पयताम् ॥

---

* 'विशः सेनाः प्रजा वा' इति भट्टभास्करः. 'प्रजाः सैन्यरूपाः' इति सायणः.
† page 98. ‡ 'गायत्र्यादिकं सवनच्छन्दः उष्णादिजगत्यन्ते तस्मिन् छन्दसि प्रतिष्ठाप्यम् अक्षरसम्पत्त्या सेनायाम् । तदिदं देवविशां कल्पनम्' इति भट्टभास्करः.
§ 'शोंसावोमित्युक्त्वाऽऽहूय तूष्णींशंसं शंसेदुपांशु सप्रणवमसन्तन्वन् । एष आहावः प्रातस्सवने शस्त्रादिषु' इति आ० श्रौ० सू० ५-९-१, २. ¶ 'अध्वर्यो शोंसावोमिति होतुरभिज्ञाय प्रदक्षिणमावर्तमानः शोंसामोद इवेति प्रत्याह्वयते शंसामोद इवेति वा' इति आप० श्रौ० सू० १२-२७-१२. ‖ पा० सू० ८-२-१८. $ पा० सू० ७-४-१. ‡ पा० सू० ७-४-७.

किञ्च,

॥ उक्थं वाचीत्याह शस्त्वा चतुरक्षरम्[*] ॥

शस्त्रान्ते ॥

॥ ओमुक्थशा इत्यध्वर्युश्चतुरक्षरम् ॥

आहेत्येव ॥

॥ तदष्टाक्षरं सम्पद्यते । अष्टाक्षरा वै गायत्री ।
गायत्रीमेव तदुभयतः प्रातस्सवनेऽचीक्लृपताम् ॥

शस्त्रस्य पुरस्तात् परस्ताच्च । इति प्रातस्सवने ॥

॥ अध्वर्यो शोंसावोमित्याह्वयते मध्यंदिने षळक्षरेण[†] । शंसामोदैवोमित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण । तदेकादशाक्षरं सम्पद्यते । एकादशाक्षरा वै त्रिष्टुप् । त्रिष्टुभमेव तत् पुरस्तान्मध्यंदिनेऽचीक्लृपताम् । उक्थं वाचीन्द्रायेत्याह शस्त्वा सप्ताक्षरम् ॥

[‡]वि इन्द्रायेति व्यूहनेन ॥

॥ ओमुक्थशा इत्यध्वर्युश्चतुरक्षरम् । तदेकादशाक्षरं सम्पद्यते । एकादशाक्षरा वै त्रिष्टुप् । त्रिष्टुभमेव तदुभयतो मध्यंदिनेऽचीक्लृपताम् ॥

इति माध्यंदिने ॥

---

* 'उक्थं वाचीत्येषां शस्त्राजपः प्रातःसवने', 'उक्थं वाचीन्द्रायेति माध्यंदिने उक्थं वाचीन्द्राय देवेभ्य इत्युक्थेषु सर्वेषु षोडशिकेषु' इति आ० श्रौ० सू० ५-१०-२२, २४. † 'अध्वर्यो शोंसावोमिति माध्यंदिने शस्त्रादिष्वाह्वानः' इति आ० श्रौ० सू० ५-१४-३. ‡ 'वाचि इन्द्रायेत्यत्र सवर्णदीर्घमकृत्वाक्षरसंख्या गणयितव्या' इति भट्टभास्करः

॥ अध्वर्यो शोशोंसावोमित्याह्वयते तृतीयसवने सप्ता-क्षरेण* । शंसामोदैवोमित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण । तद् द्वादशाक्षरं सम्पद्यते । द्वादशाक्षरा वै जगती । जगतीमेव तत् पुरस्तात् तृतीयसवनेऽचीक्लृपताम् । उक्थं वाचीन्द्राय देवेभ्य इत्याह शस्त्वैकादशाक्षरम् ॥

†चि इन्द्रायेति व्यूह्लेन ॥

॥ ओमित्यध्वर्युरेकाक्षरम् ॥

आहेत्येव ॥

॥ तद् द्वादशाक्षरं सम्पद्यते । द्वादशाक्षरा जगती । जगतीमेव तदुभयतस्तृतीयसवनेऽचीक्लृपताम् ॥

पूर्ववत् ॥

.॥ तदेतदृषिः पश्यन्नभ्यनूवाच ‡यद् गायत्रे अधि गायत्र-माहितं त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत । यद्वा जगज्जगत्याहितं पदं य इत्तद्विदुस्ते अमृतत्वमानशुरिति ॥

अर्थस्तु—गायत्रे छन्दसि गायत्रमध्याहितं यत् प्रातःसवने, यच्च त्रैष्टुभात् परं त्रैष्टुभं मध्यंदिने निरतक्षत अतिष्ठत्, यद्वा तृतीयसवने, (जगती?) जगदिति जगतीपर्यायः । जगत् जगती जगति जगत्याम् आहितं स्थापितम् । पदं क्वचर्ये स्तुः, §पदे स्थाने । ये महात्मानः । इत् एव ।

* 'अध्वर्यो शोशोंसावोमिति तृतीयसवने शस्त्रादिष्वाह्वावः' इति आ० श्रौ० सू० ५-१८-४. † 'अत्रापि पूर्ववद् वाचि इन्द्रायेत्यनयोः सवर्णदीर्घमकृत्वा देवेभ्य इत्यत्र च इत्यादिपूरणं कृत्वैकादशाक्षरत्वं सम्पाद्यम्' इति भट्टभास्करः. ‡ ऋक्सं० २-३-१८-३. § 'एतद् त्रिविधं पदं यदस्ति तत् पदम्' इति सायणः.

तत् त्रिकालस्थानम् । विदुः जानन्ति । ते अमृतत्वं मरणाद्युपद्रवरहितत्वम् आनशुः । *'अश्नोतेश्च' इति नुट् । आनशिरे प्राप्तवन्तः इति गमयति ॥

॥ एतद्धै तच्छन्दश्छन्दसि प्रतिष्ठापयति ॥

होताध्वर्युसहितः । †एतदेतेन प्रकारेण ॥

तत एव,

॥ कल्पयति देवविशः ॥

देवसेनाभूतानि छन्दांसि सम्पादयति होता‡ ॥

॥ य एवं वेद ॥

सोऽपि ॥

प्रथमः खण्डः ।

---

अथानुसवनं छन्दो दैवतं च प्रदर्शयन् ।
सवनादिमशस्त्राणामनुष्टुब्मुख्यतां तथा ॥
प्रजापतिविभागाख्यमितिहासं ब्रवीति ह—

॥ प्रजापतिर्वै यज्ञं छन्दांसि देवेभ्यो भागधेयानि व्यभजत् ॥

यज्ञं सवनत्रयात्मकम् । छन्दांसि गायत्र्यादीनि । देवेभ्यः अग्न्यादिभ्यः । भागधेयानि भागान् । व्यभजत् पृथक्कृत्यादात् ॥

---

* पा० सू० ७-४-७२. † 'एतद् ऋषिप्रोक्तं मन्त्रवाक्यम्' इति सायणः.
‡ कल्पयतीत्यादि विदुषः फलम् इति सायणभट्टभास्करौ.

कथं,

॥ स गायत्रीमेवाग्नये वसुभ्यः प्रातस्सवनेऽभजत्* ॥

†वीति शेषः ॥

॥ त्रिष्टुभमिन्द्राय रुद्रेभ्यो मध्यंदिने ॥

व्यभजत् ॥

॥ जगतीं विश्वेभ्यो देवेभ्य आदित्येभ्यस्तृतीयसवने ॥

व्यभजत् ॥

॥ अथास्य यत् स्वं छन्द आसीदनुष्टुप्
तामुदन्तमभ्युदौहदच्छावाकीयामभि ॥

श्रुत्यन्तरादनुष्टुप् तु स्वभूतासीत् प्रजापतेः ।
‡उदौहदस्थापयत् तामुदन्तं प्रति चान्ततः ॥

स्पष्टयति—अच्छावाकीयामभि । §'होत्राभ्यश्छः' तस्येदमर्थे । प्रातः-सवनान्ते ¶'अच्छा वो अग्निमवसे' इति यदच्छावाकेन वक्तव्यं तत्रेत्यर्थः ॥

॥ सैनमब्रवीदनुष्टुप् ॥

कथं,

* 'प्रातःसवनेऽभजदिति सामर्थ्याद् प्रातःसवनमपि व्यभजदिति गम्यते',
† 'केवलोऽपि भजतिः सामर्थ्याद् व्युपसृष्टस्यार्थे वर्तते' इति भट्टभास्करः.
‡ 'अपसारितवान्' इति सायणः. 'उदनैषीत्' इति भट्टभास्करः. § 'पा० सू० ५-१-१३५. ¶ 'ऋक्सं० ४-१-१७-१. 'अच्छावाक यदस्वेत्युक्तोऽच्छा वो अग्निमवस इति तृचमन्वाह' इति आ० श्रौ० सू० ५-७-२.

॥ त्वं न्वेव देवानां पापिष्ठोऽसि यस्य तेऽहं स्वं
छन्दोऽस्मि यां मोदन्तमभ्युदौहीरच्छावाकीयामभीति ॥

नु इति खेदे। पापिष्ठोऽशुभकारी त्वम्। याम्,

अवध्याहार आतो विख्यातेर्मामनुयायिनीम् (?)।
अन्ते तु सवनस्य त्वं क्रौर्यादस्थापयः प्रभो ॥
त्वदीयत्वादहं ह्यग्रे निधातव्या त्वया खलु।
तिरस्कृत्य स्थापितान्ते दुःस्वभावतया तव ॥

इति भावः ॥

॥ तदजानात् ॥

ज्ञातवान् स च तद्वाक्यं मयैव हि कृतं त्विति ॥

अथ,

॥ स स्वं सोममाहरत् ॥

आहृत् अनुष्ठानार्थः ॥

आहृत्य च,

॥ स स्वे सोमेऽग्रं मुखमभिपर्याहरदनुष्टुभम् ॥

अग्रमिति व्याचष्टे—मुखमिति।

अनुष्टुभं स्थापितवान् सवनानां मुखेषु सः ॥

ततश्च,

॥ तस्मादनुष्टुबग्र्या[1] मुख्या युज्यते सर्वेषां सवनानाम् ॥

*'अग्राद्यत्'। उ पुनः। मुखमिव। †'शाखादिभ्यो यः'। अग्र्येति[2] व्याचष्टे—मुखमिति मुख्येति। युज्यते प्रयुज्यते। ‡तस्माद् एवमित्यर्थः ॥

---

१. 'अग्रिया', २. 'अग्रियेति' क. ख. पाठः

---

* पा० सू० ४-४-११६. † पा० सू० ५-३-१०३. ‡ 'तस्माद् तस्मादेव कारणात्' इति सायणः.

आज्ये मरुत्वतीये च वैश्वदेव इति त्रिषु ।
आद्या अनुष्टुभ ऋचः *प्रव †आत्वार ‡तत्सवि ॥

॥ अग्रयो[1] मुख्यो भवति श्रेष्ठतामश्नुते य एवं वेद ॥

सः ॥
किञ्च,

॥ स्वे वै स तत् सोमेऽकल्पयत् ॥

स्वे आत्मीये । सः प्रजापतिः । तत् अनुसवनम् अनुष्टुब्मुखत्वम् ॥

॥ तस्माद्यत्र क्व च यजमानवशो भवति । कल्पत एव यज्ञः ॥

§यत्र क्व च देशे तत्रेति शेषः ॥

॥ ¶अपि तस्यै जनतायै कल्पते यत्रैवं विद्वान् यजमानो वशी यजते ॥

यज्ञ इत्येव । यत्र जनताया वशी स्वतन्त्रः ॥

द्वितीयः खण्डः ।

---

१. 'अग्रियो' क. पाठः.

* ऋक्सं० ३-१-१३-१. † ऋक्सं० ६-५-१-१. ‡ ऋक्सं० ४-४-२५-१.
§ 'यत्र क्वापि देशे काले वा यजमानवशो यजमानविधेयो यज्ञो भवति स एव यज्ञः कल्पते एतस्य यजमानस्य । यद्वा यत्र यज्ञे कस्मिंश्चिदपि यज्ञावयवे प्रवृत्तौ निवृत्तौ वा यजमानवशं यजमानस्य वशं स्वातन्त्र्यं भवति तादृशस्य यजमानस्य सम्बन्धी यज्ञः कल्पत एव ' इति भट्टभास्करः. 'यत्र क्वापि यागे यज्ञो यजमानवशो भवति स यज्ञोऽपि कल्पत एव अवैकल्येनानुष्ठास्यामीत्यभिप्रेत्यानुष्टुभः सवनानामादौ प्रयोगे सति यज्ञस्य यजमानवशत्वं तत्र यज्ञो वैकल्यरहितो भवतीत्यर्थः' इति सायणः. ¶ अपिशब्दस्य पूर्ववाक्येनान्वयः सायणमते.

अथाज्यादिषु शस्त्रेषु या या प्रतिपदुच्यते ।
सर्वास्ता मृत्युपाशानां मोचन्य इति कथ्यते—

॥ अग्निर्वै देवानां होतासीत् ॥

वै पुरा ॥

॥ तं मृत्युर्बहिष्पवमाने[*]ऽसीदत् ॥

मृत्युर्निषण्णवानग्निं जिघृक्षुः कुपितोऽध्वरे ॥

अत्रान्तरे,

॥ सोऽनुष्टुभाज्यं प्रत्यपद्यत ॥

[†]प्रवोदेवायसप्तर्चं सूक्तमानुष्टुभं खलु ॥

॥ मृत्युमेव तत् पर्यक्रामत् ॥

तत् तेनानुष्टुप्प्रपदनेन । परिरतेरर्थे ॥

॥ तमाज्येऽसीदत् ॥

होतुराज्ये स्तूयमाने पुनर्मृत्युर्निषण्णवान् ॥

॥ स प्रउगेण प्रत्यपद्यत ॥

शंसनं प्रतिपद्दार्थेऽस्मोऽशंसत् प्रउगं स तु ॥

॥ मृत्युमेव तत् पर्यक्रामत् ॥

तत् तेन प्रउगशंसनेन ॥

---

* उपास्मै गायता नर इत्यादितृचाश्रयणेन प्रातस्सवने गीयमानं स्तोत्रं बहिष्पवमानः.

† ऋक्सं० ३-१-१३-१. 'उत्तमेन पदेन प्र वो देवायेत्याज्यमुपसन्तनुयात्' इति आ० श्रौ० सू० ५-९-१५.

॥ तं माध्यन्दिने *पवमानेऽसीदत् ॥

स्तूयमाने ॥

॥ सोऽनुष्टुभा मरुत्वतीयं प्रत्यपद्यत ॥

†'आत्वा रथम्' इत्येषा ह्यनुष्टुप् ॥

॥ मृत्युमेव तत् पर्यक्रामत् ॥

किञ्च,

॥ तं माध्यंदिने बृहतीषु नाशक्नोत् सत्तुम् ॥

बृहतीषु निष्केवल्यार्थं स्तूयमानासु। ‡सत्तुं, सदेस्तुमुन् अभिभवितुं नाशक्नोत् ॥

कुत एवं,

॥ प्राणा वै बृहत्यः ॥

§'प्राणो बृहती' इत्यारण्यके हि वक्ष्यते ॥

ततः किं,

॥ प्राणानेव तन्नाशक्नोद् व्यवैतुम् ॥

तत् तत्र। (व्यवैत्वाभि ? व्यवेणोऽभि) भवार्थात् तुमुन्। अभिभवितुम्¶ ॥

॥ तस्मान्मध्यंदिने होता बृहतीषु स्तोत्रियेणैव प्रतिपद्यते ॥

---

* उवा ते इत्यारभ्य माध्यंदिने गीयमानं स्तोत्रं माध्यंदिनपवमानः. † ऋक्सं० ६-५-१-१. 'आ त्वा रथं यथोतये इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ' इति आ० श्रौ० सू० ५-१४-४. ‡ 'सत्तुं प्राप्तुम्' इति सायणः. § ऐ० आ० २-१-६. ¶ 'व्यवैतुं वियोजयितुम्' इति सायणः.

तस्मात् तथाहि। *स्तोत्रियेण। †'अभि त्वा शूरे'ति बृहती‡सतोबृहत्यात्मकेन रथन्तरपृष्ठत्वे। बृहत्पृष्ठत्वे तु §'त्वामिद्धीति' प्रतिपद्यते निष्केवल्यम् ॥

॥ प्राणा वै बृहत्यः ॥

ततश्च,

॥ प्राणानेव तदभिप्रतिपद्यते ॥

तत् तत्र ॥

॥ तं तृतीयपवमानेऽसीदत् ॥

तमग्निं गृहीतं मृत्युरार्भवे पवमाने¶ ॥

॥ सोऽनुष्टुभा वैश्वदेवं प्रत्यपद्यत ॥

$'तत्सवितुर्वृणीमहे' इत्यनुष्टुप् ॥

॥ मृत्युमेव तत् पर्यक्रामत् । तं यज्ञायज्ञीयेऽसीदत् ॥

‡अग्निष्टोमसाम्नि गीयमाने ॥

॥ स वैश्वानरीयेणाग्निमारुतं प्रत्यपद्यत ॥

ψ'वैश्वानराय पृथु पाजसे' इति ॥

॥ मृत्युमेव तत् पर्यक्रामत् ॥

---

* 'गर्भिमरुत्वने सामभिः स्तोत्रं गीतं सोऽयं भृचः स्तोत्रियः' इति सायणः। † ऋक्सं० ५-३-२१-२. ‡ सतोबृहती छन्दोविशेषः। तल्लक्षणं यथा—'युग्मावष्टाक्षरौ पादावयुजौ द्वादशाक्षरौ। सा सतोबृहती नाम' इति (ऋक्प्रा० १६-५२). § ऋक्सं० ४-७-२७-१. 'निष्केवल्यस्य। अभित्वा शूर नो नुमोऽभित्वा पूर्वपीतये इति प्रगाथौ स्तोत्रियानुरूपौ यदि रथन्तरं पृष्ठम्। यद्यु वै बृहत् त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति' इति आ० श्रौ० सू० ५-१५-१, २, ३. ¶ 'स्वादिष्ठयेत्यारभ्य तृतीयसवने गेयं स्तोत्रमार्भवपवमानः' $ ऋक्सं० ४-४-२५-१. 'तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ' इति आ० श्रौ० सू० ५-१८-५. ‡ साम्नानेनाग्निष्टोमस्य समाप्यमानत्वादग्निष्टोमसामेत्युच्यते. ψ ऋक्सं० २-८-२०-१.

कुत एतत् ,

॥ वज्रो वै वैश्वानरीयम् ॥

वै इव । तीव्रत्वात् ॥

॥ प्रतिष्ठा यज्ञायज्ञीयम् ॥

*प्रतिष्ठाफलत्वात् ॥

ततः किं,

॥ वज्रेणैव तत् प्रतिष्ठाया मृत्युं नुदते ॥

तत् तेन। प्रतिष्ठायाश्च्यावयति मृत्युम् ॥

एवं ,

॥ स सर्वान् पाशान् सर्वान् स्थाणून् मृत्योरतिमुच्य स्वस्त्येवोदमुच्यत ॥

पाशान् बन्धनार्था रज्जूः । स्थाणून्† शङ्कून् । अतिमुच्य विधूय स्वस्ति अविनष्टम् । अमुच्यत योगबलेन स्वयमेव गलितोऽभूत् ॥

ततश्च ,

॥ स्वस्त्येव होतोन्मुच्यते सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद ॥

‡उक्तार्थानि ॥

तृतीयः खण्डः ।

---

* 'प्रतिष्ठा समाप्तेर्हेतुः' इति सायणः. 'प्रतिष्ठास्थानीयम्' इति भट्टभास्करः.

† 'स्थाणून् काष्ठोपलक्षितगदाद्यायुधानि' इति सायणः. ‡ page 247.

मरुत्वतीयशस्त्रार्थमितिहासं ब्रवीत्यथ —

॥ इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः
पराः परावतोऽगच्छत् ॥

अस्तृषि अवधिषम् । स्तृञ् हिंसायाम् । लुङ् इट् सिच् । *परावदिति दूरनाम । †पराः बह्वीः ॥

व्याचष्टे—

॥ स परमामेव परावतमगच्छत् ॥

अतिदूरं गतवान् ॥

स्पष्टयति—

॥ अनुष्टुब् वै परमा परावत् ॥

ततः किं,

॥ वाग् वा अनुष्टुप् ॥

‡अनुष्टुप् इति वाङ्नामसु पाठात् ॥

॥ स वाचं प्रविश्याशयत् ॥

अशेत । शीङ् स्वित्यर्थः ।

वाक्यस्य शब्दशेषो भविष्यत्यर्थ इष्यताम्(?) ॥

एवं स्थिते,

॥ तं सर्वाणि भूतानि विभज्यान्वैच्छन् ॥

---

* या० निघ० ३-२६. † 'पराः प्रकृष्टाः' इति भट्टभास्करः. ‡ या० निघ० १-११.

भूतानि गणशोऽन्विष्य दिदृक्षन्ते स्म तं प्रभुम् ॥

॥ तं पूर्वेद्युः पितरोऽविन्दन् ॥

दृष्टवन्तः ॥

॥ उत्तरमहर्देवाः ॥

तमविन्दन्नित्येव ॥

॥ तस्मात् पूर्वेद्युः पितृभ्यः क्रियते ॥

पिण्डपितृयज्ञाभ्युदयश्राद्धादि ॥

॥ उत्तरमहर्देवान् यजन्ते* ॥

इष्ट्यादिभिः ॥

॥ तेऽब्रुवन् ॥

ते दृष्टेन्द्रकाः ॥

कथम्,

॥ अभिषुणवामैव तथा वाव न आशिष्ठमागमिष्यतीति ॥

अभिषुणवाम अभिषवं करवाम ।

सुत्वो लोडाड् गुणः पित्त्वान्नोऽस्मान् प्रति स वै द्रुतम् ।
आशीरिष्ठनि टेर्लोप आगमिष्यति खल्विति ॥

॥ तथेति तेऽभ्यषुण्वन् ॥

लङ् ॥

---

* 'इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपाराधमिति मन्यमानस्तं देवताः प्रैषमैच्छन् सोऽब्रवीद् प्रजापतिर्यः प्रथमोऽनुविन्दति तस्य प्रथमं भागधेयमिति तं पितरोऽन्वविन्दन् तस्मात् पितृभ्यः पूर्वेद्युः क्रियते सोऽमावास्यां प्रत्यागच्छत् तं देवा अभिसमगच्छन्तामा वै नः' इति तै० सं० २-५-३.

सुते,

॥ त *आ त्वा रथं यथोतय इत्येवैनमावर्तयन् ॥

आगन्तुमिन्द्रं प्रतिपत्तृचेन प्रैरयन् द्रुतम् ॥

॥ †इदं वसो सुतमन्ध इत्येवैभ्यः सुतकीर्त्यामाविरभवत् ॥

‡अनुचरतृचे सुतकीर्त्यां (स्तु ? सु)तशंसके[1] सति ।

एभ्यः एषामर्थाय । आविरभवत् ॥

॥ §इन्द्र नेदीय एदिहीत्येवैनं मध्यं प्रापादयन्त ॥

एनमिन्द्रं यज्ञस्य मध्यदेशमिन्द्रनिहवाख्यखैलिकव्यृचतृचप्रगायेन[2] प्रापादयन्त प्रवेशितवन्तः ॥

ततश्चात ऊर्ध्वम् ,

॥ आगतेन्द्रेण यज्ञेन यजते ॥

आगत इन्द्रो यस्मिन् तेन ॥

विदुषः फलमाह—

॥ सेन्द्रेण यज्ञेन राध्नोति य एवं वेद ॥

सः ॥

चतुर्थः खण्डः ।

---

१ 'स्तुतसंशब्दके' क. ख. पाठः. २. 'व्यृचतृचेन' घ. ङ. पाठः.

* ऋक्सं० ६-५-१-१. † ऋक्सं० ५-७-१७-१. ‡ येन त्र्यृचेन शस्त्रं प्रारभ्यते सोऽयं त्र्यृचः प्रतिपत् । तदनन्तरभावी त्र्यृचोऽनुचरः. § ऋक्सं० ६-४-२३-१. 'आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ । इन्द्र नेदीय एदिहीतीन्द्रनिहवः प्रगाथः' इति आ० श्रौ० सू० ५-१४-४, ५.

अथेन्द्रनिहवस्याङ्गमास्वापे स्वापिभिस्त्विति ।

तं स्तोतुमाहेतिहासं सम्यगेव प्ररोचयन्—

॥ इन्द्रं वै वृत्रं जघ्निवांसं नास्तृतेति मन्यमानाः
सर्वा देवता अजहुः ॥

अस्तृत । *'ह्रस्वादङ्गात्' । हतवान् । अजहुः त्यक्तवन्तः ॥

ओ हाक् त्यागे †सिजभ्यस्तविदिभ्यश्चेति लङ्झिजुस् ।

जघ्निवांसम्, लिटः क्वसुः‡ । §'विभाषा गमहनविदविशाम्' इतीट् ॥

॥ तं मरुत एव स्वापयो नाजहुः ॥

¶आपिराप्तो बन्धुः ।

॥ प्राणा वै मरुतः स्वापयः§ ॥

वै इवं ॥

स्पष्टयति—

॥ ⚹प्राणा हैवैनं तन्नाजहुः ॥

तत् तदा । इव एव ॥

---

* पा० सू० ८-२-२७. † पा० सू० ३-४-१०९. ‡ पा० सू० ३-२-१०७. § पा० सू० ७-२-६८. ¶ 'स्वापयः स्वापिनामानो मरुतः' इति भट्टभास्करः, 'सुषुप्तिकालेऽपि वर्तमानाः' इति सायणः. § 'प्राणा एव खलु स्वापिनामानो मरुतः' इति भट्टभास्करः. 'प्राणा एव स्वापयो मरुतः स्वापकालानुवर्तिनो वायवः । प्राणानां तत्कालानुवृत्तिमाथर्वणिकाः प्रश्नोत्तराभ्यामामनन्ति—भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन् जाग्रतीति प्रश्नः । प्राणाग्नय एवैतस्मिन् पुरे जाग्रतीत्युत्तरम्' इति सायणः. ⚹ 'प्राणा हैवैनम्' इति व्याख्यानुसारी पाठः स्यात्.

॥ तस्मादेषोऽच्युतः स्वापिमान् प्रगाथः* शस्यत
आस्वापे स्वापिभिरिति ॥

स्वापिमान् स्वापिशब्दवान् ॥

अतीव स्तौति—

॥ अपि ह यद्यैन्द्रमेवात ऊर्ध्वं छन्दः शस्यते तद्ध सर्वं मरुत्वतीयं भवत्येष चेदच्युतः स्वापिमान् प्रगाथः शस्यत आस्वापे स्वापिभिरिति ॥

छन्दः वेदः। मरुत्वानिन्द्रस्तदीयम् ॥

पञ्चमः खण्डः।

---

अथ ब्राह्मणस्पत्यं प्रगाथमाह—

॥ ब्राह्मणस्पत्यं प्रगाथं शंसति ॥

†'प्र नूनम्' इति ॥

स्तौति—

॥ ‡बृहस्पतिपुरोहिता वै देवा अजयन् स्वर्गं लोकम् ॥

---

* 'द्वयोर्ऋचोः समूहः प्रगाथः। तथाचाश्वलायन आह—' युजाः प्रतिपदनुचरा युजाः प्रगाथाः' (५-१४-७) इति। 'ऋग्द्वयमेवानुष्ठानकाले त्र्यृचरूपेण प्रग्रथ्यते तस्मादयं प्रगाथ इत्युच्यते' इति सायणः. † ऋक्सं० १-३-२०-५. 'प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः' इति आ० श्रौ० सू० ५-१४-६. ‡ देवानां बृहस्पतिपुरोहितत्वं पौरोहित्यार्थं बृहस्पतेः सत्रानुष्ठानं च तैत्तिरीयसंहितायामाम्नातम्। यथा—'बृहस्पतिर्देवानां पुरोहित आसीत्', 'बृहस्पतिरकामयत श्रन्मे देवा दधीरन् गच्छेयं पुरोधामिति स एतं चतुर्विंशतिरात्रमपश्यत् तमाहरत् तेनायजत ततो वै तस्मै श्रद्देवा अदधतागच्छत् पुरोधाम्' (६-४-१०, ७-४-१) इति.

बृहस्पतिः पुरोहितो येषां ते स्वर्गं वशीकृतवन्तः ॥

किञ्च,

॥ व्यस्मिन् लोकेऽजयन्त ॥

तत्र *विपराभ्यां जेः पृथिव्यां व्यजयन्त ते ॥

॥ †तथैवैतद्यजमानो बृहस्पतिपुरोहित एव जयति
स्वर्गं लोकं व्यस्मिन् लोके जयते ॥

एतदेतर्हि। इव एव ॥

वशीकुर्याद् दिवं यद्वा भूम्यां विजयते तथा ॥

अथ चोदयितुं स्थलमुपन्यस्यति‡—

॥ तौ वा एतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते।
तदाहुर्यन्न किञ्चनास्तुतं सत् पुनरादायं शस्यते ॥

किञ्चन किञ्चित् ॥

॥ अथ कस्मादेतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं
शस्येते इति ॥

§'एवमेतत्पृष्ठेष्वहःस्विन्द्रनिहवब्राह्मणस्पत्यान्' इति पुनरादानं हि सूत्र्यते। यथास्तुतं तथाहि शंसितव्यमिति भावः ॥

अथान्यचोदयितुं स्थलमाह¶—

॥ पवमानोक्थं वा एतद्यन्मरुत्वतीयम् ॥

---

* पा॰ सू॰ १-३-१९. † 'तथैवैतदि'ति व्याख्यानुसारी पाठः स्यात्. ‡ 'प्रकृतयोः प्रगाथयोः प्रगाथान्तरवैलक्षण्यं दर्शयितुमाह—एतौ न्विति' इति भट्टभास्करः. § आ॰ श्रौ॰ सू॰ ५-१५-१०. ¶ 'वैलक्षण्यं समर्थयितुमाह—पवमानोक्थं वा इत्यादि' इति भट्टभास्करः.

मरुत्वतीयशस्त्रार्थं हि माध्यंदिनपवमानः क्रियते ॥

किमतो यद्येवं,

॥ षट्सु वा अत्र गायत्रीषु स्तुवते ॥

उच्चातासु गायत्रामहीयवाभ्यां सामभ्यां सामगाः ॥

॥ षट्सु बृहतीषु ॥

स्तुवत इत्येव । पुनानःसोमासु रौरवयौधाजयाभ्याम् ॥

॥ तिसृषु त्रिष्टुप्सु ॥

स्तुवत इत्येव । प्रतुद्रवासु औशनेन साम्ना ॥

एवञ्च,

॥ स वा एष त्रिच्छन्दाः पञ्चदशो माध्यंदिनः पवमानः ॥

पञ्चदशसम्बन्धी पञ्चदशः*। छान्दसो डः। गायत्रीत्रिष्टुब्बृहतीच्छन्दस्त्रिकयुक्तः ॥

ततः किम्। अत्र होतारं प्रति,

॥ तदाहुः ॥

चोद्यस्वरूपमाह—

॥ कथं त एष त्रिच्छन्दाः पञ्चदशो माध्यंदिनः पवमानोऽनुशस्तो भवतीति ॥

हे होतः। ते त्वया† ॥

---

* 'पञ्चदश स्तोत्रियाः परिमाणमस्येति स्तोमे डविधिः' इति भट्टभास्करः. तस्य च स्तोमस्य प्रकारश्छन्दोगब्राह्मणे (ताण्ड्यब्रा० २-४) एवमाम्नायते—'पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः' इति। अस्यायमर्थः—त्र्यृचात्मकमेकं सूक्तं त्रिरावर्तनीयम्। तत्र प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासो विधेयः द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तौ चरमायाः। एवं प्रतिसाम सावृत्ताभिः पञ्चदशभिर्ऋग्भिः स्तोतव्यत्वात् पञ्चदश स्तोमाः' इति सायणः. † 'कथं पुनस्ते पक्षे' इति भट्टभास्करः.

इति चोद्यद्वयं कृत्वा चोद्यमाद्यं प्रसङ्गतः ।
नोत्स्यामीति मन्यमानो द्वितीयं तु निरस्यति—

॥ ये एव गायत्र्या उत्तरे प्रतिपदो यो गायत्रोऽनुचर-
स्ताभिरेवास्य गायत्र्योऽनुशस्ता भवन्ति ॥

आ त्वा रथादिप्रतिपदारूपतृचस्याद्याया अनुष्टुभ उत्तरे [*]'तुविशुष्म' [†]'यस्य त' इति ये द्वे गायत्र्यौ, यश्च [‡]'इदं वसो' इत्यनुचरतृचो गायत्रः ताभिः पञ्चभिरस्यानेन गायत्र्योऽनुशस्ताः स्युः[§] ॥

॥ एताभ्यामेवास्य प्रगाथाभ्यां बृहत्योऽनुशस्ता भवन्ति ॥

एताभ्यामिन्द्रनिहवब्राह्मणस्पत्याभ्यां बृहतीसतोबृहतीरूपद्व्यृचतृचाभ्याम् ॥

अत्राद्यचोद्यं प्रसङ्गात् कौशलेन निरस्यति—

॥ तासु वा एतासु बृहतीषु सामगा रौरवयौधाजयाभ्यां
पुनरादायं स्तुवते ॥

[¶]'रौरवयौधाजये बार्हते तृचे भवतः' इति सामगा आहुः । एतासु पुनानःसोमासु । रौरवमिति सामनाम यौधाजयवत् ॥

ततश्च,

॥ तस्मादेतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं
शस्येते तच्छस्त्रेण स्तोत्रमन्वैति ॥

---

* ऋक्सं० ६-५-१-२. † ऋक्सं० ६-५-१-३. ‡ ऋक्सं० ५-७-१७-१. § 'ताभिः पञ्चभिरेवास्य पवमानस्य षड् गायत्र्योऽनुशस्ता भवन्ति । छत्रिन्यायेन प्रतिपदोऽपि गायत्रीत्वात्' इति भट्टभास्करः. ¶ श्रुतिरियं ताण्ड्यब्राह्मणगतेति वाचस्पत्यबृहदभिधानम् । मुद्रितग्रन्थेषु तु नोपलभ्यते.

तस्मादेवञ्चेत्यर्थः । अनु आ एति स्तोत्रगतबृहतीषु पुनरादाय गीतिं शस्त्रगतबृहतीषु पुनरादाय शंसनं भिन्नदेशगतमप्यनुकरोत्येवेत्यर्थः ॥

प्रासङ्गिकं समाप्याथ प्रकृतं त्वनुवर्तते—

॥ ये एव त्रिष्टुभौ धाय्ये यत् त्रैष्टुभं निविद्धानं
ताभिरेवास्य त्रिष्टुभोऽनुशस्ता भवन्ति ॥

*'अग्निर्नेता' †'त्वं सोमे'ति त्रिष्टुभौ धाय्ये । जनिष्ठीयमेकादशर्चं त्रैष्टुभम् । ताभिस्त्रयोदशभिः ॥

॥ एवमुहास्यैष त्रिच्छन्दाः पञ्चदशो माध्यंदिनः
पवमानोऽनुशस्तो भवति ॥

अस्यानेन होत्रा ॥

॥ य एवं वेद ॥

तेनापि ॥

षष्ठः खण्डः ।

---

‡अग्निस्त्वं सोम पिन्वती तिस्रो धाय्या ब्रवीत्यथ—

॥ §धाय्याः शंसति ॥

---

* ऋक्सं० ३-१-२०-४. † ऋक्सं० १-६-११-२. ‡ 'अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः' इति आ० श्रौ० सू० ५-१४-१७. § 'धाय्यानां धाय्याशब्दः पाय्यसान्नाय्यंत्यत्र समिधामाधानमन्त्रेषु सामिधेनीषु निपात्यते, तथाप्यत्रान्यासां काशांचिदृचां वाचको द्रष्टव्यः' इति भट्टभास्करः.

धाय्याशब्दं निराह—

॥ धाय्याभिर्वै प्रजापतिरिमाँल्लोकानधयत् ॥

*धेदत्र प्राप्त्यर्थः ॥

॥ यं यं काममकामयत ॥

तं तं चाधयदितीत्येव ॥

॥ तथैवैतद् यजमानो धाय्याभिरेवेमाँल्लोकान् धयति ॥

एतदेतर्हि। धयति प्राप्नोति ॥

किञ्च,

॥ यं यं कामं कामयते ॥

तं तं च धयति ॥

॥ य एवं वेद ॥

सोऽपि ॥

॥ यदेव धाय्याः३ः ॥

†प्लुतोऽभिपूजिते यद् यास्ता धाय्या अभिपूजिताः।
इति धेटो निरुक्तात्र ‡धाय्या युक् करणे ण्यति ॥

किञ्च,

॥ यत्र यत्र वै देवा यज्ञस्यच्छिद्रं निरजानंस्तद्
धाय्याभिरपिदधुस्तद् धाय्यानां धाय्यात्वम् ॥

---

* 'अधयत् अपिबत्, लोकशब्देन जलम्' इति सायणः. 'यद्यपि धयतिः पाने पठ्यते, तथापीह धानजन्या व्याप्तिः पानेन लक्ष्यते। इमान् लोकानभिव्याप्तवान्' इति भट्टभास्करः. † पा० सू० ८-२-१००. ‡ 'धयत्याभिरिति करणेऽर्थो यदिति यतं बाधित्वा छान्दसो ण्यत्। पाय्यसान्नाय्येति निपातनादेव वावगम्यते। अतोऽन्यत्रापि दृश्यते धाय्याः शंसतीति। आतो युक् चिण्कृतोरिति युक्। एवमग्निर्नेता त्वं सोम क्रतुभिरित्यादय ऋचो धाय्या उच्यन्ते न तु सामिधेन्यः' इति भट्टभास्करः.

छिद्रं सुषिरं निरजानन् निर्ज्ञातवन्तः । अपिदधुराच्छादयन् ॥

ततश्च,

॥ अच्छिद्रेण हास्य यज्ञेनेष्टं भवति य एवं वेद ॥

अस्यानेन वेदित्रा ।

इति धाञो निरुक्तात्र धाय्या[*] युक् करणे ण्यति ॥

॥ यद्वेव धाय्याः ॥

उ पुनः । यत् याः ॥

किञ्च,

॥ स्यूम हैतद् यज्ञस्य यद् धाय्याः[‡] ॥

[§]स्यूम तुन्दकरणम् । यत् याः ॥

स्पष्टयति—

॥ तद्यथा सूच्या वासः सन्दधदियादेवमेवैताभि॰
र्यज्ञस्यच्छिद्रं सन्दधदेति ॥

तत् तत्र संदधत् संधानं कुर्वन्नियात् निर्वहेत् । एताभिः धाय्याभिः एति निर्वहति होता ॥

॥ य एवं वेद ॥

सोऽपि ॥

---

* 'अत्रोपसर्गाणां धात्वर्थस्यैव द्योतकत्वादनुपसृष्टोऽपि दधातिरपिधाने वर्तते । तस्मात् पूर्ववत् करणे ण्यत्' इति भट्टभास्करः. † 'यद्वेत्यत्र योऽयमुकारः सोऽयं पूर्वेण फलेन समुच्चयार्थः । न केवलं पूर्वं फलं किन्त्विदमपीत्यर्थः' इति सायणः. ‡ 'अत्राप्यनुपसृष्टोऽपि दधातिः समुपसृष्टस्यार्थे वर्तते पूर्ववत् ण्यत्', § 'सीव्यते संधीयतेऽनेनेति स्यूम सूच्यादिकमुच्यते' इति भट्टभास्करः.

॥ यद्देव धाय्याः३ः ॥

उ पुनः । एव खलु ॥

॥ तान्यु वा एतान्युपसदामेवोक्थानि यद् धाय्याः ॥

यद् याः । उ खलु । उक्थानि शस्त्राणि ॥

कथम् ,

॥ *अग्निर्नेतेत्याग्नेयी प्रथमोपसत् तस्या एतदुक्थम् ॥

प्रथमा उपसत् । उपसदाहुतिराग्नेयी †'अग्निर्वृत्राणि' ‡'य उग्र' इति कार्या । तस्या अग्निर्नेतेत्युक्थं शस्त्रम् ॥

॥ §त्वं सोम क्रतुभिरिति सौम्या द्वितीयोपसत्
तस्या एतदुक्थम् ॥

॥'त्वं सोम' ¶'गयस्फान' इति कार्योपसदाहुतिर्द्वितीया सौमी । $सोमाट्ट्यण्ङाप् । तस्यास्त्वं सोमेति शस्त्रम् ॥

॥ ॥पिन्वन्त्यप इति वैष्णवी तृतीयोपसत्
तस्या एतदुक्थम् ॥

‡'इदं विष्णुः' ¥'त्रीणि पदा' इति कार्योपसदाहुतिस्तृतीया वैष्णवी । तस्याः पिन्वन्तीति शस्त्रम् ॥

वैष्णवीत्वं[1] ❡वक्ष्यतेऽस्या विनयन्तिपदान्वयात् ॥

---

१. 'वैष्णवीयं' ख. ङ. पाठः

---

* ऋक्सं० ३-१-२०-४. † ऋक्सं० ४-४-२७-४. ‡ ऋक्सं० ४-५-२८-४. § ऋक्सं० १-६-१९-२. ॥ ऋक्सं० १-६-१९-५. ¶ ऋक्सं० १-६-२१-२. $ पा० सू० ४-२-३०. ॥ ऋक्सं० १-५-७-१. ‡ ऋक्सं० १-२-७-२. ¥ ऋक्सं० १-२-७-३. ❡ page 479.

ततश्च,

॥ यावन्तं ह वै सौम्येनाध्वरेणेष्ट्वा लोकं जयति
तमत एकैकयोपसदा जयति य एवं वेद ॥

सौम्याध्वरः सोमयागः । अतः, दार्थे तसिल्, अनया[1] । सः वेदिता । तावन्तं लोकं वशीकरोति ॥

॥ यश्चैवं विद्वान् धाय्याः शंसति ॥

स च होता ॥

मतान्तरमाह—

॥ तद्धैक आहुस्तान्वो मह इति शंसेदेतां वाव
वयं भरतेषु शस्यमानामभिव्यजानीम इति वदन्तः ॥

पिन्वन्त्यपऋचः स्थाने शंसेत् *'तान् वो मह' इत्यृचम् ।

कुतः । †भरतेषु भरतदेशस्थहोतृषु एतां तान् व इति विशेषेणाभिजानीमः । लङ्थाद् छान्दसः । इति हेतुं वदन्त आहुः । तत् तत्र ॥

॥ तत् तन्नादृत्यम् । यदेतां शंसेदीश्वरः पर्जन्योऽवर्ष्टोः ॥

यत् यदि । ईश्वरे तोसुन् तुमर्थे‡ । इण् (?) । अवर्ष्टोः वर्षणमकर्तुमीश्वरः समर्थः स्यात् ॥

ततश्च,

॥ पिन्वन्त्यप इत्येव शंसेत् ॥

न तु तान्व इत्येवशब्दार्थः ॥

१. 'अनेन' क. ख. पाठः.

* ऋक्सं० २-७-२१-१. † 'बिभर्ति फलमिति भरो यज्ञः तं भरं तन्वन्तीति भरता ऋत्विजः, तेषु पूर्वकालीनेषु' इति सायणः. ‡ पा० सू० ३-४-१३.

अत्र च,

॥ वृष्टिवनि पदम् ॥

अप इत्यस्तीति शेषः । *वृष्टिवनि वृष्टेः प्रदातृ । वनु दाने । †'छन्दसि वनसन—' इति इन् ॥

॥ मरुत इति मारुतम् ॥

मरुद्देवत्यं मरुत इति चास्ति ॥

॥ अल्यं न मिहे विनयन्तीति विनीतवत् ॥

विपूर्वणीञ्धातुमत् ॥

ततः किं,

॥ यद्विनीतवत् तद्विक्रान्तवत् ॥

तत् तेन । विनयस्य शिक्षणस्य फलं[1] विक्रम इति ॥

ततोऽपि किं,

॥ यद्विक्रान्तवत् तद्वैष्णवम् ॥

विष्णोस्त्रिविक्रमयोगात् ॥

किञ्च,

॥ वाजिनमिति ॥

अस्ति ॥

---

१. 'बलं' च. छ. पाठः

---

* 'अत्र पिन्वन्त्यप इति पदं श्रूयते तत् सेचनार्थम् । पिवि सेचने इत्यस्माद्धातो-रुत्पन्नत्वात् । अत इदं पदं वृष्टिवनि वृष्टिसंभजनकारि' इति सायणः. 'वृष्टेः संभक्तृ वृष्टिकारणत्वेनापेक्षमाणं पदम् अप इत्येष शब्दोऽस्ति । अर्थस्य वृष्टिकारणत्वात् तद्वाचि पदमपि वृष्टिवनि इत्युच्यते' इति भट्टभास्करः. † पा० सू० ३-२-२७.

॥ इन्द्रो वै वाजी ॥

वाजो हवीरूपमन्नं, तद्वान् ॥

एवञ्च,

॥ तस्यां वा एतस्यां चत्वारि पदानि ॥

एतस्यां पिन्वन्तीति ॥

॥ वृष्टिवनि मारुतं वैष्णवमैन्द्रम् ॥

इति चत्वारि ॥

॥ सा वा एषा तृतीयसवनभाजना सती मध्यंदिने शस्यते ॥

भाजनं स्थानम् । जगतीत्वात् तृतीयसवनं शेषार्हेति ॥

अत्रापि भरतदेशसमाचारः प्रदर्श्यते—

॥ तस्माद्धेदं भरतानां पशवः सायंगोष्ठाः
सन्तो मध्यंदिने सङ्गविनीमायन्ति ॥

तस्मात् एवञ्च । इदमाचरणम् । *संगविनीं दोहशालामायन्ति आगच्छन्ति ॥

॥ सो जगती ॥

सा उ खलु ॥

॥ जागता हि पशवः ॥

†उक्तार्थम् ॥

॥ आत्मा यजमानस्य मध्यंदिनः ॥

आत्मा मध्यमः कायः ॥

---

* 'मध्याह्नकाले घर्मकालीनसन्तापनिवारणाय निर्मितां सङ्गवकालयोग्यां शालाम्' इति सायणः. † page 30.

ततः किं,

॥ तद् यजमाने पशून् दधाति ॥

तत् तेन। पिन्वन्तीति जगत्या मध्यंदिने शंसनेन।

अग्निस्त्वं सोम पिन्वन्ति धाय्यास्तिस्र इति स्थितम् ॥

सप्तमः खण्डः।

---

मरुत्वतीयं प्रगाथं बार्हतं विदधात्यथ—

॥ मरुत्वतीयं प्रगाथं शंसति ॥

*प्र व इन्द्रायेति त्र्यृचम् ॥

स्तौति—

॥ पशवो वै मरुतः ॥

मतुपो लुक्। पशुमन्तः।

वैश्यत्वात् कृषिगोरक्षवाणिज्यं मरुतां खलु।
†श्रुता वेदे हि वसवो ब्राह्मणाः क्षत्रियाः पुनः ॥
आदित्या मरुतो वैश्याः शूद्रौ चैवाश्विनाविति।
किञ्च वृष्टेः प्रेरकत्वात् पशूनां पोषका[1] इमे ॥

---

१. 'प्रेरकाः' क. पाठः 'प्रेषकाः' ग. पाठः.

---

* ऋक्सं० ६-६-१२-३. 'प्र व इन्द्राय बृहत इति मरुत्वतीयः प्रगाथः' इति आ० श्रौ० सू० ५-१४-१८. † शतपथब्राह्मणे बृहदारण्यकोपनिषदि च वस्वादित्य-मरुतां वैश्यत्वं पूषणश्च शूद्रत्वमाम्नायते. "आदित्याः क्षत्रियास्तेषां विशश्च मरुतस्तथा। अश्विनौ च स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ। स्मृतास्त्वाङ्गिरसा देवा ब्राह्मणा इति निश्चयः। इत्येतत् सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितम्" इति च महाभारते शान्तिपर्वणि अध्या० २०७, श्लो० २५-२६.

॥ पशवः प्रगाथः ॥

*पशुवद् बहुपादयोगात् प्रगाथस्य ॥

॥ पशूनामवरुध्यै ॥

तस्य शंसनं स्यात् ॥

॥ †जनिष्ठा उग्रः सहसे तुरायेति सूक्तं शंसति ॥

एकादशर्चम् ॥

स्तौति—

॥ तद्वा एतद् यजमानजननमेव सूक्तम् ॥

करणे ल्युट् ॥

व्याचष्टे—

॥ यजमानं ह वा एतेन यज्ञाद् देवयोन्यै प्रजनयति ॥

ङसेर्ङे, देवयोनेः‡ ॥

किञ्च,

॥ तत् संजयं भवति ॥

समित्युपलक्षणं वेरपि ॥

तदाह—

॥ सं च जयति वि च जयते ॥

---

* 'पशूनां प्रावरणराहित्येऽप्यरण्ये तुषारकाले वायवोऽनुगृह्य न तान् बाधन्ते। तत्संबन्धान्मरुतां पशुत्वम्। प्रगाथस्य च पशुप्राप्तिहेतुत्वात् पशुत्वम्' इति सायणः. 'मरुतां प्रगाथस्य च बहुपादद्वारेण पशुहेतुत्वात् तान्छब्द्यम्' इति भट्टभास्करः. † ऋक्सं० ८-३-३-१ ‡ 'देवयोन्यै देवलोकस्थानार्थम्' इति सायणः.

*विपराभ्यामिति तु तङ् शेषः सूक्तेन चेति ह।
विजयो युद्ध उत्कर्षः संजयस्तु वशीकृतिः† ॥

किञ्च,

॥ एतद् गौरिवीतम् ॥

‡तेन दृष्टम्। गौरिवीतेः तस्येदमण्§ ॥

स्पष्टयति—

॥ गौरिवीतिर्ह वै शाक्त्यो नेदिष्ठं स्वर्गस्य
लोकस्यागच्छत् ॥

शक्तेर्यत्र्। नेदिष्ठम् अन्तिकस्येष्ठनि नेदादेशः¶ वशीकृतोपनतस्वर्गोऽभूत् ॥

॥ स एतत् सूक्तमपश्यत् ॥

एतद् जनिष्ठीयम् ॥

॥ तेन स्वर्गं लोकमजयत् ॥

वशीकृतवान् ॥

॥ तथैवैतद् यजमान एतेन सूक्तेन स्वर्गं लोकं जयति। तस्यार्धाः शस्त्वार्धाः परिशिष्य मध्ये निविदं दधाति ॥

---

* पा० सू० १-३-१९.　† 'यस्मादेतेन सूक्तेन संयुज्यापि शत्रून् यजमानो जयति वियुज्यापि जयति तस्माद् सूक्तं संजयं समीचीनो जयो येन सूक्तेनेति समासः' इति सायणः. 'संजयति च सम्यक् शत्रूनभिभवति न विजयते न व्यापद्य च सर्वस्माद् जेता भवति' इति भट्टभास्करः.　‡ 'जनिष्ठा एकादश गौरिवीतिः' इति सर्वा० म० १० सू० ७३.　§ पा० सू० ४-३-१२०.　¶ पा० सू० ५-३-६३.

*एकभूयसीरिति शेषः । सूत्र्यते हि—†'जनिष्ठा उग्र इत्येकभूयसीः शस्त्वा मरुत्वतीयां निविदं दध्याद्' इति ।

आहूय निविदं दध्याद्धोता षष्ठ्या ऋचः परम् ।
इन्द्रो मरुत्वान् सोमस्य पिबत्वित्यादिकां शुभाम् ॥

स्तौति—

॥ स्वर्गस्य हैष लोकस्य रोहो यन्निवित् ॥

यत् या ।

सोपानमार्गो रोहः स्याद् रुहेर्घञ् करणे कृतः ॥

स्पष्टयति—

॥ स्वर्गस्य हैतल्लोकस्याक्रमणं यन्निवित् ॥

क्रमेः करणे ल्युट् । यत् या ॥

---

* 'नन्वेकादशर्चमिदं सूक्तं, तत्कथं सूक्तमध्ये निविद्धानमुपपद्यते । सत्यम् । सामर्थ्यादेकभूयसीरर्धा इति गम्यते । नह्यर्धर्चयोर्मध्ये निविदः शंसनं संभवति । किंचैकदेशवाच्येव खल्वर्धशब्दो विशेष्यलिङ्गो भवति समप्रविभागवाचिनो नपुंसकत्वात् । अयमर्थः—सूक्तैकदेशप्रमाणा ऋचः शंसित्वा इति । तत्र द्विप्रायैकदेशनिवृत्त्यर्थमर्धाः परिशिष्येत्युच्यते । तथाहि अत्र अर्धाः शस्त्वा निविद्धातव्या इत्येतावतैव वक्तव्ये यदर्धाः परिशिष्येत्युच्यते तस्यैतदेव प्रयोजनम् । तस्माच्छंसितव्यानां परिशेष्याणां चार्धानां समप्रमाणत्वस्योचितत्वात् पञ्च शंसित्वा पञ्च परिशिष्येति लभ्यते । इममेवार्थं द्रढयितुं मध्य इत्युक्तम् । तत्र सामर्थ्यादेकभूयसीरर्धा इत्यनुक्तोऽपि गम्यते । उक्तं च भगवताश्वलायनेन—एकभूयसीरर्धाः शंसित्वार्धाः परिशिष्येति । ननु एकभूयसीरर्धाः परिशिष्येति कस्मान्न विज्ञायते । अयमभिप्रायः—सर्वथा सूक्तस्य मध्ये निविद्धातव्या मध्ये निविदं दधातीति वचनात् । तत्र यावत्सूक्तमध्यमविचारेण गन्तव्यम् । तत्र च प्रदेशे ऋचोऽसमाप्तत्वात् तां कृत्स्नां शंसित्वैव तत्र निविन्निधातव्या । तस्मादेकभूयसीः परिशिष्येति वक्तुं न युज्यत इति' इति भट्टभास्करः. † आ॰ श्रौ॰ सू॰ ५-१४-१६, २०.

॥ तामाक्रममाण इव शंसेत् ॥

*आङ उद्गमने तङ् तु निविदं तां क्रमेण वै।
†उच्चैरुच्चैस्तरामुच्चैस्तमां ब्रूयात् पदे पदे ॥

॥ उपैव यजमानं निगृह्णीत योऽस्य प्रियः स्यात् ॥

‡यो यष्टा होतुरिष्टः स्यात् तं समीपं स चानयेत्।
ग्रहिरानयनार्थः ॥

॥ इति नु स्वर्गकामस्य ॥

होतुस्तु स्वर्गकामस्य प्रयोगोऽयमुदीरितः ॥

॥ अथाभिचरतः ॥

प्रयोगो वक्ष्यते हिंसाभिचरेरर्थ इष्यताम् ॥
कथं,

॥ यः कामयेत क्षत्रेण विशं हन्यामिति ॥

राजजात्या वैश्यजातिं पीडयेयमिति स्मरन् ॥

॥ त्रिस्तर्हि निविदा सूक्तं विशंसेत् ॥

तर्हि तदानीम्। वि नाना।

---

* गा० सू० १·३-४०. † 'यथा लोके सोपानारोहणे श्रमेण पुनः पुनः श्वासं करोति तदनुकारिणं स्वरं कृत्वा तथैव पठेत्' इति सायणः. 'आक्रममाण इव उपर्युपरि स्ववीर्येणाभिभवन्निव शंसेत्। यथा सोपानमाक्रममाणः प्रतिसोपानकर्म प्रयत्नातिरेकं करोत्येवमुपर्युपरि निवित्पदान्युच्चैस्तरां शंसेत्' इति भट्टभास्करः. ‡ 'अस्य यजमानस्य यः पुमान् प्रियः स्यात् स पुमानेतं यजमानमुपैव समीप एव निगृह्णीत स्वीकुर्यात्' इति सायणः.

सूक्तस्यान्तादिमध्येषु होता त्रिर्निविदं वदेत् ॥

॥ क्षत्रं वै निविद् विट् सूक्तम् । क्षत्रेणैव तद् विशं हन्ति ॥

तथा,

॥ यः कामयेत विशा क्षत्रं हन्यामिति । त्रिस्तर्हि सूक्तेन निविदं विशंसेत् ॥

निविदोऽन्तादिमध्येषु शंसेत् सूक्तं त्रिरेव हि ॥

॥ क्षत्रं वै निविद् विट् सूक्तम् । विशैव तत् क्षत्रं हन्ति ॥

तत् तत्र ॥

॥ य उ कामयेतोभयत एनं विशः पर्यवच्छिनदानीति ॥

उ पुनः । एनं यजमानम् । विशः बन्धून् । *उभयतः पूर्वान् परांश्च परि सर्वतः । अवच्छेदश्च्यावनम् ।

लोटः पित्त्वान्न †श्नसोरल्लोपो ‡मेर्निः श्नमाद् छिदः ॥

॥ उभयतस्तर्हि निविदं व्याह्वयीत ॥

---

* 'उभयतः पूर्वोत्तरभागयोः सम्बन्धिनीः विशः प्रजाः पर्यवच्छिनदानि परितो विच्छिन्नाः करवाणि स्वस्मात् पूर्वभाविन्यः पितृपितृव्यमातुलादयो याः प्रजाः स्वस्योत्तरभाविन्यः पुत्रजामात्रादयो याः प्रजाः तासां सर्वासामवच्छेदं करवाणीत्यर्थः । यद्वा उभयतो मातृपक्षे पितृपक्षे च विद्यमानानां प्रजानामवच्छेदं विरोधं करवाणि' इति सायणः. 'उभयतः प्राक् पश्चाच्चास्य यजमानस्य सम्बन्धिनीः पूर्वोत्पन्ना उत्पत्स्यमानाश्च विशः प्रजाः पर्यवच्छिनदानि पर्यवच्छिन्नाः संकुचिताः क्षीणभूयिष्ठाः करवाणि' इति भट्टभास्करः. † पा० सू० ६-४-१११. ‡ पा० सू० ३-४-८९.

सः । एत इत् । व्याह्वयेत् ।

आदावन्ते च निविदः शोंसावोमिति वै वदेत् ॥

॥ उभयत एवैनं तद् विशः पर्यवच्छिनत्ति ॥

तद् तत्र । च्यावयेत् ॥

॥ इति न्वभिचरतः ॥

प्रयोग उक्तः ॥

॥ इतरथा त्वेव स्वर्गकामस्य ॥

यथापूर्वमवोचाम ॥

॥ *वयः सुपर्णा उपसेदुरिन्द्रमित्युत्तमया परिदधाति ॥

सूक्तस्यैकादश्या ॥

॥ प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहीति ॥

ध्वान्तशब्दप्रदर्शनार्थः पाठः ॥

॥ येन तमसा प्रावृतो मन्येत तन्मनसा गच्छेत् ॥

ध्वान्तोक्तिकाले स्वकृतं पापं होता प्रचिन्तयेत्† ।
‡तमः पापं ध्वान्तमुक्तं प्रावृतश्छादितो ह्यम् ॥

॥ अप हैवास्मात् तल्लुप्यते ॥

---

* ऋक्सं० ८-३-४-६. † 'अञ्जिणी मृजानः परिदध्याद् ध्वान्तेन आत्मनः' इति आ० श्रौ० सू० ५-१४-२४. ‡ 'तमो हि बहुविधं दृष्टिनिरोधकमेकं, मोहरूपं द्वितीयम्, पापरूपं तृतीयम् । तेषां येन तमसा आवृतस्तत् तमः' इति सायणः.

तत् तमः । अपलुप्यते छिद्यते निवर्त्यते ॥

॥ पूर्धि चक्षुरिति ॥

अस्ति । एतच्च पदं त्रिष्वपि वचनेषु ॥

॥ चक्षुषी मरीमृज्येत ॥

मृजेर्यङ् रीङ् लिङ् ॥

॥ आजरसं ह चक्षुष्मान् भवति ॥

होता । जरसिति जरापर्यायः । जरामभिव्याप्य आ मरणादित्यर्थः ॥

॥ य एवं वेद ॥

सोऽपि ॥

॥ मुमुग्ध्यस्मान्निधयेव बद्धानिति ॥

व्याचष्टे—

॥ पाशा वै निधा मुमुग्ध्यस्मान् पाशादिव
बद्धानित्येव तदाह ॥

टार्थे ङसिः, पाशेन ।

मुमुग्धि मोचय णिचो लुग् द्वे श्लौ शस्य हेश्च धिः ॥

तत् तत्र ॥

अष्टमः खण्डः ।

———

मरुत्वतीयशस्त्रस्य याज्यां वक्तुं प्ररोचयन् ।
कथामाह यथेन्द्रस्य मरुद्भिः सख्यमीक्ष्यते—

॥ इन्द्रो वै वृत्रं हनिष्यन् सर्वा देवता अब्रवीत् ॥

*'ऋद्धनोः स्ये' इतीद्[1] ॥

कथम्,

॥ अनु मोपतिष्ठध्वमुप मा ह्वयध्वमिति ॥

†अनु सम्यक् मा माम् । उपतिष्ठध्वम् उपह्वयध्वं स्तुत च ॥

॥ तथेति तं हनिष्यन्त आद्रवन् ॥

तथेति निश्चित्य तं वृत्रम् । आद्रवो धावनम् ॥

एवं देवगणोपेत इन्द्रे सन्नद्ध एव च ।
वृत्रस्त्वतिबलः शूरः सर्वं विज्ञातवानिदम् ॥

इत्याह—

॥ सोऽवेत् ॥

स वृत्रः अवेत् ज्ञातवान् ॥

---

1. 'इतीद् । अनु' प. ङ. पाठः.

---

* पा० सू० ७-२-७०. † अत्र भट्टभास्करव्याख्या त्वेवं दृश्यते । तथाहि—'मामेवानुगम्योपतिष्ठध्वं सदा मयैव सहता वर्तध्वं सङ्गतकरण आत्मनेपदम् । कृत्येषु समुपस्थितेषु मामेव सहायत्वेनोपह्वयध्वमाह्वयत नित्यसमुपविभ्यो ह्व इत्यात्मनेपदम् । अथ ते देवास्तथेति कृताभ्यनुज्ञा युद्धाभिप्रायास्तमेवेन्द्रं हनिष्यन्तो हन्तुकामा आद्रवन् इन्द्रसकाशमागच्छन् । स चेन्द्रस्तेषामभिप्रायमोऽवेत् जानानात् इत्यमपश्यत् । कथमित्याह—मामेव खल्वेते देवा हन्तुकामा आद्रवन् अतोऽहमिमान् एवमसम्यग्व्यवस्यमानान् भीषयै भीतान् करवाणि इति । इत्येतदभिप्रायवेदने सूचने । अथ तान् देवानभिलक्ष्य प्राश्वसीत् प्रकर्षेण श्वासवायुं प्रावर्तयत येन प्रभुतास्ते विद्रुताः स्युः । तदेवाह—तस्य श्वसथादित्यादि । ईषमाणाः बिभ्यत इत्यर्थः । मरुतो हेत्यादि । मरुत एव खलु तदानीमेनमिन्द्रं नाजहुः' इति.

कथं,

॥ मां वै हनिष्यन्त आद्रवन्ति हन्तेमान् भीषया इति ॥

वै इत्यमर्षे । *हन्तेति स्वसत्त्वाभिमुखीकरणे(?) । भीषयै प्राप्तकाले लोट् । णिचि †"भियो हेतुभये षुक्" । भीतान् करवाणि ॥

इत्युक्त्वा,

॥ तानभि प्राश्वसीत् ॥

सेन्द्रान् देवान् प्रति महाश्वासं वृत्रोऽथ मुक्तवान् ॥

॥ तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन् ॥

श्वसेरथो भावे, श्वासात् । ईषमाणाः ईष गतौ यकः शप् । दीर्घश्छान्दसः । ‡प्रेर्यमाणाः । विश्वे सर्वे देवाः अद्रवन्[1] पलायन्त ॥

॥ मरुतो हैनं नाजहुः ॥

ह तदानीम् । एनमिन्द्रम् ॥

किञ्च,

॥ प्रहर भगवो जहि वीरयस्वेत्येवैनमेतां वाचं वदन्त उपातिष्ठन्त ॥

हे भगवः भगवन् । §"मतुवसो रु सम्बुद्धौ छन्दसि" ।

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥"

इति पुराणम्¶ ।

---

१. 'सर्वे अद्रवन्' क. ख. पाठः.

---

* 'हन्त सम्यग् ज्ञातम् । देवनिवारणोपायस्य प्रतिभातत्वात्' इति सायणः. † पा० सू० ७-३-४०. ‡ 'ईषमाणा विभ्युतः' इति सायणः. § पा० सू० ८-३-१. ¶ विष्णुपुराणे अंश० ६, अध्या० ५, श्लो० ७४.

" भगं योन्यां भगोऽर्केऽग्नौ[1] यशोवीर्यार्कभूतिषु ।
कान्तीच्छाज्ञानवैराग्यधनैश्वर्य[2]तपस्सु च ॥ "

इति निघण्टुः* ।

एवं भगाख्येन गुणराशिना परिपूरितः ।
प्रहर क्षिप वज्रं त्वं शत्रूणां शिरसि प्रभो ।
†हन्तेर्जौ हो जहि रिपून् वीरकर्माणि चाचर ॥
‡शुरादेर्वीर विक्रान्तौ शोणितश्चेति[§] तङ् तथा ।
§उपेति वार्तिकात् तङ् स्यः सङ्गतो ह्यो निसादिवत् ॥
इत्यादिकां वदन्तस्तु वाचं तं ते सिषेविरे ॥

॥ तदेतदृषिः पश्यन्नभ्यनूवाच ¶वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः । मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासीति ॥

अर्थस्तु—हे इन्द्र त्वा त्वां वृत्रस्य श्वसथात् श्वासेनेषमाणा विश्वे सर्वे अजहुः त्यक्तवन्तः । अतस्ते सख्यं मरुद्भिरेवास्तु, ये सखायः । अथ तथा सति, विश्वाः सर्वाः इमाः पृतनाः सेनाः जयासि जेष्यसि । लेट् इति ॥

॥ सोऽब्रवीत् ॥

स इन्द्रो ज्ञातवान् ॥

---

१. 'भगो यत्ने', २. 'धर्मैश्वर्य' इति मुद्रितपाठः.

---

* वैजयन्ती । वाक्षरकाण्डे नानालिङ्गाध्याये श्लो० ५८. † पा० सू० ६-४-३६. ‡ पा० सू० १-३-७४. § पा० सू० वा० १-३-२५. ¶ ऋक्सं० ६-६-३३-२.

कथम्,

॥ इमे वै किल मे सचिवा इमे माकामयन्त
हन्तेमानस्मिन्नुक्थ आभजा इति ॥

इमे मरुतः । किल अहो । सचि(व?)ः संश्लेषः । वो मत्वर्थीयः । मा माम् । अकामयन्त अस्माकमनेन भवितव्यमित्यैच्छन । हन्तेति हर्षे । अस्मिन्नुक्थे शस्त्रे आभजै आगतभागान् करवाणि । भजेर्लोट् ॥

अथ,

॥ तानेतस्मिन्नुक्थ आभजत् ॥

ननु पूर्वमेव मरुत्वतीये सन्ति मरुतः, नेत्याह—

॥ अथहैते तर्ह्युभे एव निष्केवल्ये उक्थे आसतुः ॥

अथह पुरा तर्हि तदानीम् । एते उभे उक्थे शस्त्रे मरुत्वतीयनिष्केवल्याख्ये निष्केवल्ये आसतुः केवलेन्द्रदेवत्ये बभूवतुः । छन्दस्त्वाभ्यासि(?) ।

इन्द्रो निष्केवलख्यातो निर्गतः केवलः शुभः ।
*भवार्थे यतीन्द्रशस्त्रं निष्केवल्यं निरूच्यते ॥

आभजनप्रकारमाह—

॥ मरुत्वतीयं ग्रहं गृह्णाति ॥

अध्वर्युः ॥

॥ मरुत्वतीयं प्रगाथं शंसति ॥

होता ॥

---

* पा० सू० ४-३-५४.

स एव,

॥ मरुत्वतीयं सूक्तं शंसति ॥

स एव,

॥ मरुत्वतीयां निविदं दधाति । मरुतां सा भक्तिः ॥

*भक्तिः प्रसादलाभः ॥

॥ मरुत्वतीयमुक्थं शस्त्वा मरुत्वतीयया यजति ॥

होता ॥

॥ यथाभागं तद्देवताः प्रीणाति ॥

तत् तत्र । देवता मरुत इन्द्रश्च ॥

†यजयाज्यामाह—

॥ ‡ये त्वाहिहत्ये मघवन्नवर्धन् ये शाम्बरे हरिवो ये गविष्टौ । ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमं सगणो मरुद्भिरिति ॥

अर्थस्तु—ये मरुतः त्वा त्वामहिहत्ये वृत्रवधे,

§हनस्त चेति हत्या स्त्री पुंस्त्वं व्यत्ययतस्त्विह ।

---

* 'भक्तिः भजनप्रकारः' इति भट्टभास्करः. 'भागः' इति सायणः.
† 'ये त्वाहिहत्ये मघवन्नवर्धन्निति याज्या' इति आ० श्रौ० सू० ५-१४-२६. ‡ ऋक्सं० ३-३-११-४. § पा० सू० ३-१-१०८.

हे मघवन् अवर्धन् । अन्तर्णीतण्यर्थः, अवर्धयन । ये च शाम्बरे *'यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत्' इति महायज्ञवति शम्बरसम्बन्धिनि युद्धे त्वामवर्धयन् । हे हरिवः । †'छन्दसीरः' इति वत्वम् । ‡'मतुवसो रु सम्बुद्धौ—', हरिमन् । ये च गविष्टौ बृहस्पतेर्गोषु बलेनापहृतासु देवशुन्या सरमयेन्द्रप्रेषितया बलपुरे दृष्टासु त्वया तदन्वेषणे क्रियमाणे त्वामवर्धयन्§ । ये च त्वा त्वां नूनं सदा अनुमदन्ति । श्यनः शप्, अनुमाद्यन्ति । विप्रा मेधाविनः । तैरेवं-भूतैर्मरुद्भिः सगणः सन् हे इन्द्र सोमं पिबेति मत्वा ॥

तात्पर्यतो व्याचष्टे—

॥ यत्र यत्रैवैभिर्व्यजयत यत्र यत्र वीर्यमकरोत् तदेवैतत् समनुवेद्येन्द्रेणैनान् स सोमपीथान् करोति ॥

एभिर्मरुद्भिः । विजयो वशीकरणम् । वीर्यं सामर्थ्यम् । तत् तत्र । सं सम्यक् । अनुवेदनं विज्ञापनम् । पीथः पानम् । एनान् मरुतः । ¶सः अनया यजन् होता करोति सम्पादयति ॥

नवमः खण्डः ।

---

* ऋक्सं० ३-६-६-१. † पा० सू० ८-२-१५. ‡ पा० सू० ८-३-१.
§ वृत्रवधादिकं च 'इन्द्रस्य नु वीर्याणि' (ऋक्सं० मं० १ सू० ३२) इत्यादिसूक्तेषु द्रष्टव्यम्. ¶ 'ससोमपीथान् समानसोमपानान्' इति भट्टभास्करः.

मरुत्वतीयमित्युक्तं निष्केवल्यमथोच्यते ।
किञ्चेन्द्रस्य महेन्द्रत्वसंपत्त्यै चोच्यते कथा—

॥ इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत् प्रजापतिम् ॥

*विजितीः विजेतव्याः सेनाः । विजित्य वशीकृत्य वृत्रं हत्वातिसमर्थः सन् प्रजापतेर्गृहमेत्य तमब्रवीत् ॥

कथम्,

॥ अहमेतदसानि यत् त्वम् ॥

यद्वस्तु त्वं महद् देव तदसानि भवान्यहम् ।

अस्तेर्लोट् †'मेर्निः' ।

कोऽर्थः । अत आह—

॥ अहं महानसानीति ॥

महान् भवानि त्वामिव प्रभोऽहं सर्वपूजितः ॥

अथ,

॥ स प्रजापतिरब्रवीदथ कोऽहमिति ॥

यदहं तत् त्वं यदि स्यास्तदा कोऽहं हि वृत्रहन् ॥
इति प्रजापतिप्रोक्तः सहासं त्विन्द्र आह ह—

॥ यदेवैतदवोच इत्यब्रवीत् ॥

---

* 'विजितीः विजयप्रकारान्' इति भट्टभास्करः. 'जेतव्या भूमीः' इति सायणः. † पा० सू० ३-४-८९.

यदवोचस्त्वं क इति तदेव त्वमभूः प्रभो ।
अस्मिन्नुक्ते[1] कोऽन्य इति प्रसिद्धेः को भवान् खलु ॥

॥ ततो वै को नाम प्रजापतिरभवत् ॥

प्रसिद्ध इति शेषः ॥

आदरात् पुनराह—

॥ को वै नाम प्रजापतिः* ॥

न चैतदप्रसिद्धमित्यर्थः ॥

॥ यन्महानिन्द्रोऽभवत् तन्महेन्द्रस्य महेन्द्रत्वम्† ॥

प्रजापतिसंवादात् ॥

॥ स महान् भूत्वा देवता अब्रवीदुद्धारं म उद्धरतेति ॥

इन्द्रः प्रजापतिगृहान्निर्गत्येत्यब्रवीत् सुरान् ।
उद्धारमुद्धरत मे पृथक्कृत्य प्रयच्छत ॥

उद्धारं कर्मणि घञ् । उद्धार्यं सारवस्तु‡ ॥

॥ यथाप्येतर्हीच्छति ॥

---

1. 'अस्मिन्नुक्ते' घ. ङ. पाठः.

---

* 'को ह वै नाम प्रजापतिः' इति तै० आ० २-८-१०. † 'इन्द्रो वृत्रमहन् तं देवा अब्रुवन् महान् वा अयमभूद् यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वम्' इति तै० सं० ६-५-५. ‡ 'सर्वेभ्यो भागेभ्यो य उद्ध्रियते ज्येष्ठाय दायं सोऽभ्यधिकोऽंश उद्धारो नाम' इति भट्टभास्करः. 'उत्कर्षं निमित्तीकृत्य यः पुंसा पूजाविशेषो ह्रियते सम्पाद्यते सोऽयं सत्कार उद्धारः' इति सायणः.

एतर्हि अस्मिन्नपि काले । कृतकार्यः । अपि किञ्चित् । सारवस्तु इच्छति प्रार्थयते । यथा तथा ॥

व्याचष्टे—

॥ यो वै भवति यः श्रेष्ठतामश्नुते स महान् भवति ॥

*यो वै भवतीति व्याचष्टे—यः श्रेष्ठतामश्नुत इति । स महान् कृतकार्यो भवति । सारवस्त्वर्थयते ॥

॥ तं देवा अब्रुवन् स्वयमेव ब्रूष्व यत् ते भविष्यतीति ॥

त्वदर्हं नैव जानीमस्तत् स्वयं ब्रूहि नः स्फुटम् ।

ब्रूत्वः कर्त्रभिप्राये तङ्[1] ॥

ततः,

॥ स एतं माहेन्द्रं ग्रहमब्रूत ॥

स इन्द्रः । उद्धारतया ।

निष्केवल्यशस्त्रयोगी माहेन्द्राख्यो ग्रहो मतः ॥

॥ माध्यंदिनं सवनानाम् ॥

सोऽब्रूतेत्येव । †'माध्यंदिनं सवनं केवलं ते' ‡'अथो इदं सवनं केवलं ते' इति मन्त्रलिङ्गं चास्ति ॥

---

1. 'तङ् । स एतम्' ब. ङ. पाठः.

---

* 'यः खलु भूष्णुत्वेनात्मधर्मेण युज्यते यश्च श्रेष्ठतां विद्यादिभिः प्रशस्ततामश्नुते स खलु महान् भवति' इति भट्टभास्करः. 'यो वै भवति यः पुमान् भवत्यैश्वर्यं प्राप्नोति यश्च श्रेष्ठतां विद्याचारादिप्रयुक्तवैशिष्ट्यमश्नुते स प्राप्तैश्वर्यो विशिष्टश्च सर्वेषां मध्ये महान् भवति' इति सायणः. † ऋक्सं० ३-७-६-२. ‡ ऋक्सं० ८-५-७-२.

॥ निष्केवल्यमुक्थानाम् ॥

पूर्ववत् । उक्थं शस्त्रम् ॥

॥ त्रिष्टुभं छन्दसाम् ॥

पूर्ववत् ॥

॥ पृष्ठं साम्नाम् ॥

पूर्ववत् ॥

ततस्ते देवाः,

॥ तमस्मा उद्धारमुदहरन्* ॥

अस्मै इन्द्राय सारवस्तु प्रायच्छन् ॥

॥ उदस्मा उद्धारं हरन्ति य एवं वेद ॥

अस्मै वेदित्रे । उद्धरन्ति पृथक्कृत्य दद्युः ॥

॥ तं देवा अब्रुवन् सर्वं वा अवोचथा अपि नोऽत्रास्त्विति ॥

सारवस्तु सर्वमुक्तवानसि । †'अस्यतिवक्ति—' इत्यङ् । ‡'वच उम्'। कर्त्रभिप्राये तङ् । अत्र त्वदुक्तेषु नोऽस्माकमपि किञ्चिदस्तु ॥

॥ स नेत्यब्रवीत् । कथं वोऽपि स्यादिति ॥

क्षेपे किम् । न कथञ्चित् ॥

---

* 'स एतं माहेन्द्रमुद्धारमुदहरत वृत्रं हत्वान्यासु देवतास्वधि यन्माहेन्द्रो गृह्यत उद्धारमेव तं यजमान उद्धरतेऽन्यासु प्रजास्वधि' इति तै० सं० ६-५-५.
† पा० सू० ३-१-५२. ‡ पा० सू० ७-४-२०.

॥ तमब्रुवन्नप्येव नोऽस्तु मघवन्निति ॥

अपीतित्वे(?) किञ्चित्त्वे च। हे मघवन् नोऽस्त्वेवेति ॥

अथ स इन्द्रः,

॥ तानीक्षतैव ॥

अडभावश्छान्दसः। ऐक्षतैव न किञ्चिदुक्तवान् ॥

दशमः खण्डः।

---

अथ यद्वावानधाय्यां वक्तुमाह कथां शुभाम्—

॥ ते देवा अब्रुवन्नियं वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नामास्यामेवेच्छामहा इति ॥

ते केवलेक्षणोत्पन्नलाभशङ्कान्विताः सुराः।
*वावाता तु द्वितीयोक्ता प्रियेष्टा प्रासहा पुनः ॥
प्रसह्यकारिणी स्नेहाज्जाया भार्येन्द्रसम्मता।
अस्यां कार्यस्य संवार्यां कार्यमिच्छाम शक्रतः ॥
लोटो मसो महिङ् आडेत ऐ† व्यत्ययादिह ॥

॥ तथेति तस्यामैच्छन्त ॥

तस्यां तत्समीपमेत्य ऐच्छन ॥

---

* 'वावाता भोग्या नतु व्यूढा' इति भट्टभास्करः. 'वावाता मध्यमजातीया। राज्ञां हि त्रिविधाः स्त्रियः। तत्रोत्तमजातेर्महिषीति नाम। मध्यमजातेर्वावातेति। अधम-जातेः परिवृक्तिरिति। अत एवाश्वमेधेऽश्वं प्रति राजस्त्रीणां कर्तव्यविशेष एतैर्नामभिराम्नातः—भूरिति महिषी भुव इति वावाता सुवरिति परिवृक्ती (तै० ब्रा० ३-९-४) इति' इति सायणः. † पा० सू० ३-४-९३.

॥ सैनानब्रवीत् प्रातर्वः प्रतिवक्तास्मीति ॥

इदानीं गच्छत सुरा निशायामागते प्रभौ ।
अहं विज्ञाप्य वः कार्यं प्रातर्वक्तास्मि खल्विति ॥

लुट् तास् मिप् ॥

युक्तमुक्तमित्याह —

॥ तस्मात् स्त्रियः पत्याविच्छन्ते ॥

*तस्मात् तथाहि पत्यौ भर्तरि ऐहिकमामुष्मिकं चेति सुखं स्त्रिय इच्छन्ति ।

द्रौपद्या सत्यभामा हि संप्रोक्तारण्यपर्वणि† —

"नैतादृशं दैवतमस्ति किञ्चित् सर्वेषु लोकेषु सदैवतेषु ।
यथा पतिस्तस्य हि सर्वकामा लभ्याः प्रसादे कुपितश्च हन्यात् ॥
तस्मादपत्यं विविधाश्च भोगाः शय्यासनान्यद्भुतदर्शनानि ।
वस्त्राणि माल्यानि तथैव गन्धाः स्वर्गश्च लोको विविधा च[1] कीर्त्तिः ॥"

किञ्च,

॥ तस्मादु स्त्र्यनुरात्रं पत्याविच्छते ॥

---

१. 'स्वर्गे लोके विविधा वा च' प. इ. पाठः.

---

* 'यस्मादेवं प्रासहा स्वयमेवेन्द्राभिप्रायं निवेदं शक्ता हि रात्रौ पत्युर्मुखादेव श्रुत्वा प्रातर्वः प्रतिवक्तास्मीत्यब्रवीत् ननु स्वयमेव तदभिप्रायमाविष्कृतवती तस्मादिदानीमपि सर्वाः स्त्रियः पत्याविच्छन्ते पतिमुखादेव तदभिप्रायं ज्ञातुमिच्छन्ति ज्ञातमप्यर्थं तमेव पृच्छन्ति' इति भट्टभास्करः. 'यस्मादेवं तस्माल्लोकेऽपि प्रियाः स्त्रियः सर्वमवगन्तव्यं वृत्तान्तं पत्यावगन्तुमिच्छन्ति' इति सायणः. † अध्या॰ २३५, श्लो॰ २, ३.

तस्मात् तथाहि। उ पुनः। अनुरात्रं, रात्रेरच् समासान्तश्छान्दसः। रात्रावेव। *इच्छति निर्वध्नाति। उक्तं हि—

†"दिवा कार्यव्याकुला वै पुमांसो रात्र्यां हि संभोगपरा भवन्ति।
तान् कामान्वान स्वेषु कार्येषु रामा निर्वध्नन्ति दुःशका तन्निवृत्तिः॥"

इति॥

एवं प्रासहयोक्तास्ते गत्वा स्वं स्वं गृहं पुनः,

॥ तां प्रातरुपायन् ॥

किमिन्द्रायेयमवददस्मान् किं वेन्द्र उक्तवान्।
इति ज्ञातुं सुराः प्रातः प्रासहां तां प्रपेदिरे॥

॥ सैतदेव प्रत्यपद्यत ॥

प्रतिपत्तिरुक्तिः। एतद् ऋग्रूपं वाक्यम्॥

॥ ‡यद्वावान पुरुतमं पुराषाळा वृत्रहेन्द्रो नामान्यप्राः।
अचेति प्रासहस्पतिस्तुविष्मानिति ॥

§इतिराद्यर्थः। अर्थस्तु—यत् सारभूतं वस्तु। ववान।
सांहितो ह्यभ्यासदीर्घः¶ प्रासहेति प्रदीर्घवत्।

स्वयमेवेन्द्रः संभक्तवान्। पुरुतममतिमहत्। ８पुराषाळ्। ‡'छन्दसि सहः' इति ण्विः। असुरपुराणामभिभविता। आ अप्रा इत्यन्वेति।

* 'यत्किञ्चिच्छने स्वामिनतानि आर्थयितुं यतते। एकाकिन्येव रात्रौ पत्या सह वसतीत्येकवचनम्' इति भट्टभास्करः. † पद्यमिदं मृग्यम्. ‡ ऋक्सं० ८-१-५-६. § 'इत्यभिप्रायमुक्तवती इत्यर्थः' इति भट्टभास्करः. ¶ ऋक्प्राति० ९-४, ३५. Benares Edition. ８ 'पुरातनानां पुरुषाणां मध्ये सहिष्णुः पुरुषः' इति सायणः. ‡ पा० सू० ३-२-६३.

वृत्रहा वृत्रं हतवानिति । तदर्थं *नामानि वसूनि अप्राः । प्रातिरुत्त्यर्थः । आ अप्राः सम्यगुक्तवान् । †'मन्त्रे घस—' इति लेर्लुक् । तिपस्सिप् । अचेति चितेः ज्ञानार्थात् कर्तरि चिण् । तद् ज्ञातवान् । ‡प्रासहस्पतिः प्रसहाया मम पतिः । अलुोपश्छान्दसः । §तुविष्मान् बहुबलः । यत् कार्यम् ईं खलु । उश्मसि कामयामहे । ¶'इदन्तो मसि' । $ग्रहिज्यादिसम्प्रसारणम् । कर्तवे कर्तुम् । करत् कृञ् संवादार्थः । ⁑'कृमृदृरुहि—' इति च्लेरङ्व्यण् न । समवादीत् ।

मया निर्बन्ध्य वः कार्यमुक्तं तच्चापि सोऽकरोत् ।

इत्यर्थः ॥

तृतीयपादं किञ्चिद्व्याचष्टे—

॥ इन्द्रो वै प्रासहस्पतिस्तुविष्मान् ॥

अत्रास्ति—

॥ यदीमुश्मसि कर्तवे करत्तदिति ॥

व्याचष्टे—

॥ यदेवैतदवोचामाकरत्तदित्येवैनांस्तदब्रवीत् ॥

तत् तदा ॥

---

* 'माहेन्द्रमहो माध्यंदिनमित्यादीनि स्वाभीष्टनामान्या समन्तात् पूरितवान्' इति सायणः. † पा० सू० २-४-८०. ‡ 'प्रकृष्टं सहो बलं येषां ते प्रासहाः तेषां पतिः', § 'तुविष्मान् बहुधनवान्' इति सायणः. ¶ पा० सू० ७-१-४६. $ पा० सू० ६-१-१६. ⁑ पा० सू० ३-१-५९.

अथ लब्धकामाः,

॥ ते देवा अब्रुवन्नप्यस्या इहास्तु या नोऽस्मिन्न वै कमविददिति ॥

नः अस्माकं मध्ये कमपि कञ्चन (न) यावित् । शवलुगगुणवच्छान्दसः। *न ज्ञातवती। तस्या अस्या इह शस्त्रे किञ्चिदस्त्विति ॥

॥ तथेति तस्या अप्यत्राकुर्वन् ॥

निखिल्यास्यै भागं दत्तवन्तः ॥

॥ तस्मादेषात्रापि शस्यते †यद्वावान पुरुतमं पुराषाळिति ॥

अत्र शस्त्रे। एषापि ॥

अथ प्रसङ्गान्मध्ये तु पुरुषार्थं ब्रवीति ह—

॥ सेना वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम को नाम प्रजापतिः श्वशुरः ॥

‡परसेनायां प्रासहादृष्टिः कार्या। के श्वशुरदृष्टिः। इति दृष्टिविधिरयम् ॥

ततः किं,

॥ तद्यास्य कामे सेना जयेत्तस्या अर्धात्तिष्ठंस्तृणमुभयतः परिच्छिद्येतरां सेनामभ्यस्येत् प्रासहे कस्त्वा पश्यतीति ॥

---

* 'नाविदन्नैव लब्धवती' इति सायणः। † ऋक्सं० ८-३-५-६.

‡ 'प्रासहा नामेति नैवमुक्ता सेवे लोकव्यवहारे सेना वै युद्धार्थोद्यतसेनाकारेण वर्तते इन्द्रजायायाः सेनाभिमानित्वात्। तत्र शाखान्तरे समाम्नातम्—'इन्द्राणी वै सेनायै देवता' (तै० सं० २-२-८) इति। प्रजापतिस्तस्या इन्द्रजायायाः श्वशुरः प्रजापतेरिन्द्रोत्पादकत्वात्। तथाचान्यत्र श्रूयते—प्रजापतिरिन्द्रमसृजतानुजावरं देवानाम् (तै० ब्रा० २-२-१०) इति' इति सायणः.

तत् तत्र सो(ऽभि)कामः । या सेना जयेदित्यस्य काम इच्छा तस्या अर्धात् मध्यं प्राप्य स अस्येत्युक्तः उभयतः आदावन्ते च । तृणं छित्त्वा छिन्नोभयशिरस्कं तृणमादाय इतरां शत्रुसेनामभि प्रति अस्येत् क्षिपेत् । *प्रासहे परसेने कस्त्वा पश्यति श्वशुरः त्वा' पश्यति ततोऽन्तर्धत्स्वेति वदता मन्त्रेण ॥

॥ तद्यथैवादः स्नुषा श्वशुराल्लज्जमाना निलीयमानैत्येव-मेव सा सेना भज्यमाना निलीयमानैति । यत्रैवं विद्वांस्तृण-मुभयतः परिच्छिद्येतरां सेनामभ्यस्यति प्रासहे कस्त्वा पश्यतीति ॥

तत् तत्र । †अदः प्रसिद्धम् । निलीयमाना भयेन लीनाङ्गा लज्जमाना व्रीळान्विता पति पलायते । ‡भज्यमाना ताड्यमाना ॥

प्रासङ्गिकं समापय्य प्रकृतं त्वनुवर्तते—

॥ तानिन्द्र उवाचापि वोऽत्रास्त्विति ॥

तान् देवान् ॥

॥ ते देवा अब्रुवन् ॥

ते प्रासहोक्तेन्द्रवाक्यविपाकदर्शितया हृष्टाः ॥

कथं,

॥ विराड्याज्यास्तु निष्केवल्यस्य या त्रयस्त्रिंशदक्षरा ॥

---

१ 'कः श्वशुरस्त्वा' क. ख. पाठः.

---

* 'प्रासहे प्रासहाख्य इन्द्रजाले' इति सायणः. † 'अदः अमुना' इति भट्टभास्करः. 'अदः निदर्शनम्' इति सायणः. ‡ 'भज्यमाना भग्नपरिकरा' इति भट्टभास्करः.

दशाक्षरा विंशतिका त्रिंशद्वर्णा तु या विराट् ।
चत्वारिंशत्कापि तुल्या त्रयस्त्रिंशद्विशेषणात् ॥

कस्मादेवं,

॥ त्रयस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च । देवता अक्षरभाजः करोति । अक्षरमक्षरमेव तद् देवता अनुप्रपिबन्ति । देवपात्रेणैव तद् देवतास्तृप्यन्ति ॥

*उक्तार्थानि ॥

यं कामयेतानायतनवान् स्यादित्यविराजास्य यजेत् ॥

होता यदीच्छेद् यष्टारमप्रतिष्ठो भवेदिति ।
अविराजा यजेदस्य यष्टुः स्थाननिवृत्तये ॥

स्पष्टयति—

॥ गायत्र्या वा त्रिष्टुभा वान्येन वाच्छन्दसा †वषट्कुर्यादनायतनवन्तमेवैनं तत् करोति ॥

तत् तत्र । एनं यष्टारम् ॥

॥ यं कामयेतायतनवान् स्यादिति विराजास्य यजेत् ‡पिबा सोममिन्द्र मन्दतु त्वेत्येतयायतनवन्तमेवैनं तत् करोति ॥

---

* pages 68 & 69. † 'वषट्कुर्याद् यजेदित्यर्थः । याज्यास्थानीयतां क्वापि विद्धं यजेदिति नोक्तम् । विराड्व्यतिरिक्तेन केनचिच्छन्दसा वषट्कारमात्रमिव कुर्यादित्यर्थः' इति भट्टभास्करः. 'गायत्र्यादिच्छन्दोयुक्तां याज्यां पठित्वा तदन्ते वषट्कुर्याद्' इति सायणः. ‡ ऋक्सं० ५-३-५-१ 'पिबा सोममिन्द्र मन्दतु त्वेति याज्या' इति आ० श्रौ० सू० ५-१५-२२.

तद् तत्र । अस्य वक्तुः आयतनं प्रतिष्ठा ।

त्रयस्त्रिंशदक्षरत्वं *व्यूहेनास्य भवेदिह ॥

एकादशः खण्डः ।

---

निष्केवल्यं पञ्चभक्ति वक्तुं दृष्टान्तसिद्धये ।

तृचे गीतस्य साम्नस्तु पञ्चभक्तित्वमुच्यते—

॥ ऋक् च वा इदमग्रे साम चास्ताम् ॥

इदं इमे । अग्रे प्रथमम् ॥

अथ सामेत्येकपद ऋक्सामास्तित्वमुच्यते—

॥ सैव नाम ऋगासीत् ॥

†नाम शब्दः। ‡'ऋत्यकः' ॥

॥ अमो नाम साम। सा वा ऋक् सामोपावदत् ॥

वै पुरा । साम कर्मभूतम् । §उपवादः सान्त्ववादः ॥

कथम्,

॥ मिथुनं संभवाव प्रजात्या इति ॥

मिथुनं स्त्रीपुंसकर्म । संभवः कृतिः, करवाव । ¶प्रजातिः समृद्धिः तदर्थम् ॥

---

* 'यद्यप्यस्या वाच्यायास्त्रयस्त्रिंशदक्षराणि साक्षान्न दृश्यन्ते तथापि संयोगाक्षरादिविभागेन संख्या पूरणीया' इति सायणः. † 'सैव नाम ऋगेव खलु' इति भट्टभास्करः. ‡ पा० सू० ६-१-१२८. § 'उपावदत् उपेत्याब्रवीत्' इति भट्टभास्करः. 'अमो गानस्योपकर्ता' इति सायणः. ¶ 'प्रजात्यै प्रजानां प्रजननाय' इति भट्टभास्करः.

॥ नेत्यब्रवीत् साम ॥

कर्तृ ॥

केन भावेन,

॥ ज्यायान् वा अतो मम महिमेति ॥

अतः ऋचः मम महिमा महत्त्वं वै ज्यायान् प्रवृद्धतरः ॥

ततः,

॥ ते द्वे भूत्वोपावदताम् ॥

ते ऋचौ। साम प्रति मिथुनं संभवाव प्रजात्या इत्युपवादः ॥

॥ ते न प्रति चन समवदत ॥

ते ऋचौ चन अपि न समवदत। *'आसन—' इत्युपमन्त्रणे तङ्। द्वे अपि प्रति साम नेत्यवोचदित्यर्थः ॥

॥ तास्तिस्रो भूत्वोपावदन् ॥

ता ऋचः ॥

॥ तत् तिसृभिः समभवत् ॥

तत् साम कर्तृ तिसृभिर्ऋग्भिः सङ्गमयन्नभूत् ॥

॥ यत् तिसृभिः समभवत् तस्मात् तिसृभिः स्तुवन्ति ॥

* पा० सू० १-३-४७.

व्याचष्टे—

॥ *तिसृभिरुद्गायन्ति ॥

उपपादयति—

॥ तिसृभिर्हि साम संमितम् ॥

संमानं संश्लेषः† ॥

॥ तस्मादेकस्य बह्व्यो जाया भवन्ति । नैकस्यै बहवः ‡सह पतयः ॥

तस्मात् तथाहि ।

एकस्य भर्तुर्भार्याः स्युर्बह्व्य एकत्र जन्मनि ।
नैकस्याः स्युश्च भर्तारो बहवस्त्वेकजन्मनि ॥

एकस्यै एकस्याः ।

एकजन्मनि यत् काचिदृषीन् भेजे प्रचेतसः§ ।
भर्तॄन् दश तथा यच्च द्रौपदी पञ्च पाण्डवान् ॥

---

* 'तिसृभिरुद्गायन्तीति । औद्गात्रं कर्म कुर्वन्तीत्यर्थः । अत एव शाखान्तरे श्रूयते— 'एकं साम तृचे क्रियते स्तोत्रियम्' इति । यद्यपि छन्दःसामनामके ग्रन्थे एकस्यामृचि सामोत्पन्नं तथाप्युत्तराख्ये ग्रन्थे आम्नातेषु तृचेषु प्रयोगकाले साम गातव्यम् । तत्र प्रथमायामृचि योनिरूपायां यत् सामोत्पन्नं छन्दःसामग्रन्थे समाम्नातं तदवलोक्य तत्स्वरादस्थेन द्वितीयतृतीययो-र्ऋचोर्गानं समूहनीयम् । एतदपि शाखान्तरे विहितं—'यद् योन्यां तदुत्तरयोर्गायति' इति । तस्माद् औद्गात्रं कर्म तिसृभिर्ऋग्भिर्निष्पद्यते' इति सायणः. † 'संमितं निर्वर्तितम्' इति भट्टभास्करः. 'तिसृभिः ऋग्भिः साम संमितं साम्न एकस्य महिमा तुल्यः संवृत्तः' इति सायणः. ‡ 'सह पतय इत्यत्र सहग्रहणं किमर्थमुच्यते । पर्यायेण बहवः पतयो यथा स्युरिति । तथाहि—'दत्तामपि हरेत् कन्यां श्रेयांश्चेद्वर आव्रजेत्' इति श्रेयसोऽन्यस्य वरस्य लाभे वाग्दत्ताया अक्षतयोन्याश्च पूर्वपतित्यागेनान्यं पतिमिच्छन्ति । तथा प्राजापत्यं वचनं— 'नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते' इति । तस्मात् सह बहवः पतयो न स्युरिति प्रतिपादनार्थं सहग्रहणम् .... .... एवं स्थिते 'तस्मान्नैका द्वौ पती विन्दते' इति या श्रुतिः, 'न द्वितीयो हि साध्वीनां क्वचिद् भर्तोपदिश्यते' इति या च स्मृतिः, तत् सर्वं सहाभिप्रायं वेदितव्यम्' इति भट्टभास्करः. 'एकस्य पुरुषस्य सामस्थानीयस्य बह्व्यो जाया ऋक्स्थानीया भवन्ति न तु विपर्ययेणैकस्याः स्त्रिया बहवः पतयः, परस्परैकमत्येन वर्तमाना दृश्यन्ते' इति सायणः. § भागवते (४ स्क० ३० अ०) द्रष्टव्या.

युक्तं तदेहभेदेन शंभोश्च वरदानतः* ।
"तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥
तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवर" इत्यपि ।
†स्मर्यते तदिह प्रोक्तमविशङ्क्यं विदुर्बुधाः ॥

॥ यद्वै तत् सा चामश्च समभवतां तत् सामाभवत् तत् साम्नः सामत्वम् ॥

सामशब्दप्रवृत्तेर्हि निमित्तमिदमिष्यताम् ॥

॥ सामन् भवति य एवं वेद ॥

‡'तत्र साधुः' इति यतो लुक् । सामन्यः§ ॥

स्पष्टयति—

॥ यो वै भवति यः श्रेष्ठतामश्नुते स सामन् भवति ॥

¶यो वै भवतीति व्याचष्टे—श्रेष्ठतामिति । सामन् सामन्यः पूज्यः ॥

किं खलु भोः सामन्यशब्दः पूज्यवाची । ओमित्याह—

॥ असामन्य इति हि निन्दन्ति ॥

---

* महाभारते आदिपर्वणि २११ अध्याये (Edited by T. R. Krishnacharya, Kumbakonam) द्रष्टव्या. † आपस्तम्बधर्मसूत्रं प्र० २ प० ६ सू० ९, १०. ‡ पा० सू० ४-४-९८. § 'य एवं साम्नः सामत्वं वेद होता वा यजमानो वान्यो वा स सामन् साम्नि साधुर्निपुणतरो भवति' इति भट्टभास्करः. 'ऋक्सामयोरेकत्ववेदिता यः स सर्वैरभ्यर्हितैः सहितो भवति' इति सायणः. ¶ यो वै........भवति । भूष्णुत्वलक्षणात्मधर्मवान् भवति यश्च श्रेष्ठतां वंशविद्याचारैः प्रशस्ततमतामश्नुते स एव खलु साम्नि साधुर्भवति । तस्मात् सर्वोऽयं गुणगणो वेदितुर्भवति......यो पुनःगुणरहितो निन्द्यः पुरुषः तं खलु विद्वांसोऽसामन्योऽयमिति निन्दन्ति गर्हन्ते । साम्नि साधुः सामन्यः तत्र साधुरिति यत् । अत एव श्रावते सामन् भवति इत्यत्रापि सामविषयं साधुत्वमेवाभिप्रेतमिति' इति भट्टभास्करः 'यः पुमान् भूतिमैश्वर्यं प्राप्नोति यश्च विद्यावृत्ताभ्यां श्रेष्ठत्वं प्राप्नोति स सर्वोऽपि सामन् भवति । सर्वेषु स्वकीयत्वबुद्ध्या समदृष्टिर्भवति । अन्यथा सर्वेऽपि जनास्तमसामन्यः पक्षपातीति निन्दन्ति' इति सायणः.

असामन्येति निन्दोक्तेः सामन्यः पूज्य इष्यताम् ॥

॥ ते वै पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वाकल्पेताम् ॥

ते ऋक् च साम च । *अकल्पेताम् कल्पिः संश्लेषः ॥

पञ्चताभूत् कथमृचां साम्नां वा पञ्चतोच्यते—

॥ आहावश्च हिंकारश्च प्रस्तावश्च प्रथमा च ऋगुद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधनं च वषट्कारश्च ॥

†'ऋत्यकः' । अन्यत् अन्या एका ।

आहावः प्रथमा चैव मध्यमा चोत्तमा तथा ।
वषट्कारश्च विज्ञेया ऋचां वै पञ्च भक्तयः ॥
‡हिंकार आदौ प्रस्ताव उद्गीथप्रतिहारकौ ।
निधनं चेति विज्ञेयाः पञ्च साम्नां तु भक्तयः ॥

इति ॥

ऋक्सामपञ्चसंख्याभ्यां पशुयज्ञौ स्तुवन्ति च ।

इत्याह—

॥ ते यत् पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वाकल्पेतां तस्मादाहुः पाङ्क्तो यज्ञः पाङ्क्ताः पशव इति ॥

लभ्यन्त इति शेषः । ते ऋक्सामे । §अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति यज्ञः पञ्चविधः ।

पशुः पञ्चविधः पादाश्चत्वारो मुखमित्यपि ॥

---

* 'अकल्पेतां कार्यविशेषकरणाय समर्थे अभवताम्' इति भट्टभास्करः. † पा॰ सू॰ ६-१-१२८. ‡ उद्गात्रा साम्न आदौ पठितव्यो हिमित्येवंशब्दो हिङ्कारः । प्रस्तोत्रा गातव्यः सामावयवः प्रस्तावः । उद्गात्रा गातव्य उद्गीथः । प्रतिहर्त्रा गातव्यः प्रतिहारः । अन्ते सर्वैर्गातव्यो भागो निधनम्. § 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः' इति ऐ॰ आ॰ २-३-३.

पुनः स्तौति—

॥ यद्दु विराजं दशिनीमभि समपद्येतां तस्माहाहु-
र्विराजि यज्ञो दशिन्यां प्रतिष्ठित इति ॥

एते ऋक्सामगतपञ्चसंख्ये *दशिनीं दशसंख्यां । †व्रीह्यादीनेर्ङीप् । च खलु । अपद्येतां प्राप्तवत्यौ । यद्विराजि दशसंख्यायां यज्ञः प्रतिष्ठित इति ततो हि वदति ‡'दशाक्षरा विराट्' इति श्रुतेर्दशिनी विराट् ॥

एवं पञ्चविधे यद्वदृक्सामे तद्वदेव तु ।
निष्केवल्यं पञ्चभक्तियुक्तमित्याह रोचयन्—

॥ आत्मा वै स्तोत्रियः ॥

यजमानस्यात्मा देहः ॥

॥ प्रजानुरूपः पत्नी धाय्या पशवः प्रगाथः ॥

सामप्रगाथैकदेशः प्रगाथ इति कीर्तितः ॥

॥ गृहाः सूक्तम् । स वा अस्मिंश्च लोकेऽमुष्मिंश्च
प्रजया च पशुभिश्च गृहेषु वसति य एवं वेद ॥

सः वेदिता ॥

फलं ज्ञातृगतं कर्तुर्दण्डापूपिकया भवेत् ।
निष्केवल्ये पाञ्चविध्यमिति सम्यक् प्रवर्णितम् ॥

द्वादशः खण्डः ।

---

* 'दशपरिमाणवतीम् । दश परिमाणमस्या इति शन्शतोर्डिनिः इति डिनिः' इति भट्टभास्करः. 'दशानामक्षराणां समूहो दशिनी' इति सायणः. † पा० सू० ५-२-११६. ‡ तै० सं० ५-२-३.

*स्तोत्रियादिपञ्चकस्य स्वरांस्तु विदधात्यथ—

॥ स्तोत्रियं शंसति ॥

पृष्ठे रथन्तरे†ऽभित्वा ‡त्वामिद्धीति बृहत्यसौ ॥

॥ आत्मा वै स्तोत्रियः । तं मध्यमया वाचा§ शंसति ॥

तत् स्तोत्रियम् ॥

॥ आत्मानमेव तत् संस्कुरुते ॥

तत् तत्र संस्कुरुते भूषयति ॥

॥ अनुरूपं शंसति ॥

पृष्ठे रथन्तरे¶ऽभित्वा पू ‖त्वं ह्येहि बृहत्यसौ ॥

॥ प्रजा वा अनुरूपः ॥

पितुरनुरूपः सदृशो हि पुत्रः ॥

॥ स उच्चैस्तरामिवानुरूपः शंस्तव्यः ॥

सः अनुरूपः । इव एव । शंसितव्यः ॥

॥ प्रजामेव तच्छ्रेयसीमात्मनः कुरुते ॥

श्रेष्ठतामात्मनः सर्वः प्रजाया अभिकाङ्क्षते ।
नत्वन्यस्य कश्चिदपि तेनोच्चैस्त्वं प्रजार्हति ॥

---

* यस्मिंस्तृचे छन्दोगाः स्तुवते स तृचः शस्त्रादिः स्तोत्रियः । स्तोत्रियतृचसमान-च्छन्दःप्रमाणलिङ्गदेवतापरस्तृचोऽनुरूपः. † ऋक्सं० ५-३-२१-२. ‡ ऋक्सं० ४-७-२७-१. ¶ 'निष्केवल्यस्य अभित्वा शूर नोनुमोऽभित्वा पूर्वपीतय इति प्रगाथौ स्तोत्रियानुरूपौ यदि रथन्तरं पृष्ठं यद्युवै बृहत् त्वामिद्धि हवामहे त्वं ह्येहि चेरव ' इति आ० श्रौ० सू० ५-१५-१, १, २. § 'या दीक्षितनियमितदेशस्था एव शृण्वन्ति सा मध्यमा वाक्' इति भट्टभास्करः. ¶ ऋक्सं० ५-७-२६-२. ‖ ऋक्सं० ६-४-३७-२.

॥ धाय्यां शंसति ॥

यद्वावानेत्येताम्[*] ॥

॥ पत्नी वै धाय्या ॥

धीयतेऽस्यां गर्भ इति धाञोऽधिकरणे ण्यति ॥

॥ सा नीचैस्तरामिव धाय्या शंस्तव्या ॥

[†]नीचैस्तराम् उपांशु । इव एव । शंसितव्या ॥

॥ अप्रतिवादिनी ह्यस्य गृहेषु पत्नी भवति यत्रैवं विद्वान् नीचैस्तरां धाय्यां शंसति ॥

अस्य विदुषो होतुः । प्रतिवदनं प्रतिकूलभाषणम् ॥

॥ प्रगाथं शंसति ॥

सामप्रगाथम् ।

[‡]रथंतरं चेत् [‡]पिबा सु वृहच्चेदुभयं भृणु[§] ॥

॥ स स्वरवत्या वाचा शंस्तव्यः ॥

स्वरो महाध्वनिः[¶] ॥

॥ पशवो वै स्वरः ॥

[‡]ध्वनिकारित्वात् ॥

---

* ऋक्सं० ८-३-५-६. 'यद्वावानेति धाय्या' इति आ० श्रौ० सू० ५-१५-२१.
† 'यां दीक्षितविमितस्थानस्था अपि न शृण्वन्ति सा नीचतरा वाक्' इति भट्टभास्करः.
‡ ऋक्सं० ५-७-२५-१. 'पिबा सुतस्य रसिन इति सामप्रगाथः' इति आ० श्रौ० सू० ५-१५-२१. § ऋक्सं० ६-४-३६-१. ¶ 'प्रैस्वर्यवती वाक् स्वरवती' इति भट्टभास्करः. 'स्वरवत्या स्वरयुक्तया' इति सायणः. ‡ 'स्वरस्य पशुत्वं संख्यासाम्यात् चत्वारः स्वराः पशवोऽपि चतुष्पदाः' इति सायणः.

॥ पशवः प्रगाथः पशूनामवरुध्यै ॥

तत् स्वरवत्त्वं स्यात् ॥

॥ *इन्द्रस्य नु वीर्याणि प्रवोचमिति सूक्तं शंसति ॥

पञ्चदशर्चं निविद्धानम्† । अत्राष्टौ शस्त्वा निवित् ॥

॥ तद्वा एतत् प्रियमिन्द्रस्य सूक्तं निष्केवल्यं हैरण्यस्तूपम् ॥

हिरण्यस्तूपाधिकारे 'इन्द्रस्य पञ्चोना' इति हि सर्वानुक्रमणी‡ ॥

व्याचष्टे—

॥ एतेन वै सूक्तेन हिरण्यस्तूप आङ्गिरस इन्द्रस्य प्रियं धामोपागच्छत ॥

धाम स्थानम् ॥

किञ्च,

॥ स परमं लोकमजयत् ॥

सः हिरण्यस्तूपः । जयो वशीकरणम् ॥

॥ उपेन्द्रस्य प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद ॥

स वेदितोपगच्छति जयति च ॥

॥ गृह्या वै प्रतिष्ठा सूक्तम् ॥

---

* ऋक्सं० १-२-३६-१. † 'इन्द्रस्य नु वीर्याणीत्येतस्मिन्नैन्द्रं निविदं दध्यात्' इति आ० श्रौ० सू० ५-१५.२२. ‡ मं० १. सू० ३२.

गृहस्य सम्यक् प्रतिष्ठारूपत्वात् । *'मोदमानौ स्वे गृहे' इति हि लिङ्गम् ॥

॥ तत् प्रतिष्ठिततमया वाचा शंस्तव्यम् ॥

तत् सूक्तं शंसितव्यम् ।

प्रतिष्ठिततमा वाक् स्यादुत्तमस्वरसंयुता† ॥

॥ तस्माद् यद्यपि दूर इव पशून् लभते गृहानेवैनानाजिगमिषति ॥

तस्मात् प्रतिष्ठारूपत्वादेव । इव एव । एनान् पशून् । णीअर्थो गमिः आनिनीषति ॥

स्पष्टयति—

॥ गृहा हि पशूनां प्रतिष्ठा प्रतिष्ठा ॥

प्रवृत्तिर्भूमिः प्रतिष्ठा द्विरुक्त्यर्थः समापनम् ॥

त्रयोदशः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ सुखप्रदायां द्वादशोऽध्यायः[1] ॥

---

1. 'इति ब्राह्मणवृत्तौ द्वादशोऽध्यायः' ख. ङ. पाठः.

---

* ऋक्सं० ८-३-२८-२. † 'प्रतिष्ठिततमा अव्यग्रतमा रमणीया वाक्' इति भट्टभास्करः. 'प्रतिष्ठिततमया द्रुतविलम्बितत्वादिदोषरहितया श्राव्येण ध्वनिनोपेतया' इति सायणः.

## अथ त्रयोदशोऽध्यायः ।

गायत्र्याः सवनव्याप्तिं वक्तुं सोमक्रयोच्यते—

॥ सोमो वै राजामुष्मिन् लोक आसीत् ॥

अमुष्मिन् स्वर्गे ॥

॥ तं देवाश्च ऋषयश्चाभ्यध्यायन् कथमयमस्मान् सोमो राजागच्छेदिति ॥

*उक्तार्थम् ॥

॥ तेऽब्रुवन् छन्दांसि ॥

गायत्र्यादीनि ॥

कथं,

॥ यूयं न इमं सोमं राजानमाहरतेति ॥

नः अस्मदर्थम्[1] आहरत आनयत ॥

॥ तथेति ते सुपर्णा भूत्वोदपतन् ॥

त इति पुंस्त्वं सुपर्णापेक्षम् । तानि छन्दांसि तथेति निश्चित्य सुपर्णाः श्येना† भूत्वोत्पतनमकुर्वन् ॥

---

१. 'नः अस्माकं' ख. ग. पाठः.

---

* page 168. † 'सुपर्णाः सुपर्णीकद्रूपक्षिविशेषाः श्येनास्तद्रूपाः वा' इति भट्टभास्करः. 'ते लोकप्रसिद्धाः पक्षिणः' इति सायणः.

॥ ते यत् सुपर्णी भूत्वोदपतंस्तदेतत्
सौपर्णमित्याख्यानविद आचक्षते ॥

एतदेतर्हि । आख्यानमितिहासपुराणम् ॥

॥ छन्दांसि वै तत् सोमं राजानमच्छाचरन् ॥

तत् तदानीं सोममच्छ प्राप्तुमचरन् अगच्छन् ॥

॥ तानि ह तर्हि चतुरक्षराणि चतुरक्षराण्येव छन्दांस्यासन् ॥

ह पुरा तर्हि तदानीम् ।

चत्वार्येवाक्षराण्यासन् सर्वेषां छन्दसामिह ॥

तत्र,

॥ सा जगती चतुरक्षरा प्रथमोदपतत् । सा पतित्वा-
र्धमध्वनो गत्वाश्राम्यत् ॥

सा जगत्यध्वनोऽर्धं तु गत्वा श्रान्ता बभूव ह ॥

॥ सा परास्य त्रीण्यक्षराण्येकाक्षरा भूत्वा दीक्षां
च तपश्च हरन्ती पुनरभ्यवापतत् ॥

तत्रस्थे *दीक्षातपसी गृहीत्वा सा न्यवर्तत ॥

॥ तस्मात् तस्य वित्ता दीक्षा वित्तं तपो यस्य
पशवः सन्ति ॥

तस्मात् तथाहि । तस्य तेन । वित्तं लब्धम् ।

---

* 'दीक्षां दीक्षणीयेष्ट्यादिरूपां क्षीरपानादिकं तपश्च' इति सायणः.

दीक्षां तपश्चैव[1] कर्तुं पशुमन्तः क्षितौ क्षमाः ॥

॥ जागता हि पशवः ॥

कुतः,

॥ जगती हि तानाहरत्* ॥

तान् पशून् ॥

॥ अथ त्रिष्टुबुदपतत् ॥

अथोत्पपात वेगेन त्रिष्टुप् सोमजिघृक्षया ॥

॥ सा पतित्वा भूयोऽर्धादध्वनो गत्वाश्राम्यत् ॥

†किञ्चिदर्धाधिकं गत्वा पथि श्रान्ता बभूव सा ॥

॥ सा परास्यैकमक्षरं त्र्यक्षरा भूत्वा दक्षिणा हरन्ती पुनरभ्यवापतत् ॥

गवाद्या दक्षिणाः ॥

॥ तस्मान्मध्यंदिने दक्षिणा नीयन्ते त्रिष्टुभो लोके ॥

लोकं स्थानम् ॥

---

१. 'तपश्च वै' क. ख. पाठः.

---

* 'जगत्युदपतत् चतुर्दशाक्षरा सती साप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेतां सा पशुभिश्च दीक्षया चागच्छत् तस्माज्जगती छन्दसां पशव्यतमा तस्माद् पशुमन्तं दीक्षोपनमति' इति तै० सं० ६-१-६. † 'भूयो भूयः पतित्वापि मार्गस्यार्धादेवाश्राम्यत्' इति सायणः. 'अध्वनोऽर्धाद् भूयो बहुतरमभ्यधिकमगत्वा गन्तुमशक्ता जगतीवाध्वमध्येऽश्राम्यत्' इति महाभास्करः.

कुतः,

॥ त्रिष्टुब्भि ता आहरत्* ॥

ता दक्षिणाः। †'त्रयो द्वोऽन्यतरस्याम्' ॥

प्रथमः खण्डः।

---

एवं त्रिष्टुभ्यशक्तायां जगत्या सह वै खलु,

॥ ते देवा अब्रुवन् गायत्रीम् ॥

कथं,

॥ त्वं न इमं सोमं राजानमाहरेति ॥

प्रार्थनायां लोट् ॥

॥ सा तथेत्यब्रवीत्। तां वै मा सर्वेण स्वस्त्ययनेनानुमन्त्रयध्वमिति ॥

तां युष्मदुक्तकारिणीम्‡। सर्वस्वस्त्ययनसंज्ञेन मन्त्रेण। अनुमन्त्रयध्वम् अनुगृह्णीत ॥

॥ तथेति सोदपतत्। तां देवाः सर्वेण स्वस्त्ययनेनान्वमन्त्रयन्त प्रेति चेति चेति। एतद्वै सर्वं स्वस्त्ययनं यत् प्रेति चेति चेति ॥

---

* 'त्रिष्टुबुदपतत् त्रयोदशाक्षरा सती साप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेतां सा दक्षिणाभिश्च तपसा चागच्छत् तस्मात् त्रिष्टुभो लोके माध्यंदिने सवने दक्षिणा नीयन्ते' इति तै० सं० ६-१-६. † पा० सू० ८-४-६२. ‡ 'सर्वेण सर्वप्रकारोपद्रवशमनेन स्वस्त्ययनेन कल्याणप्रापणेन मन्त्रेण' इति भट्टभास्करः. 'क्षेमप्रचरणं स्वस्त्ययनं, तदर्थमाशीर्वादरूपेण मन्त्रेण' इति सायणः.

प्रेति चेति चेति मन्त्रः सर्वस्वस्त्ययनात्मकः ॥

मध्ये पुरुषार्थमाह—

॥ तद् योऽस्य प्रियः स्यात् तमेतेनानुमन्त्रयेत प्रेति चेति चेति ॥

तत् तत्र ॥

अस्यैतन्मन्त्रमाहात्म्यविदः स त्वनुमन्त्रितः,

॥ स्वस्त्येव गच्छति स्वस्ति पुनरागच्छति ॥

स्वस्तीत्यविनाशिनाम । फलतो मन्त्रो व्याख्यातः* । प्र एति आ एति पररूपं छान्दसम्† ॥

॥ सा पतित्वा सोमपालान् भीषयित्वा पद्भ्यां च मुखेन च सोमं राजानं समगृभ्णात्‡ ॥

§'हृग्रहोर्भः' । ¶'भियो हेतुभये षुक्' ।

देवैरनुगृहीता सा प्राप्य सोमस्य रक्षकान्‡ ।
भीतान् कृत्वाथ पादाभ्यां मुखेनाप्यग्रहीत्तु तम् ॥

---

* 'अस्यार्थः—प्रेति च साध्यमर्थं प्रक्षतिक्षेन गच्छति च । ततः कृतकार्यः समेति च स्वदेशं प्रति निर्बाधमागच्छति कार्यार्थं गन्ता जनः' इति भट्टभास्करः. 'प्रशब्द एको मन्त्रः आशब्दो द्वितीयो मन्त्रः तदुभयप्रदर्शनार्थमितिशब्दद्वयम् । उभयसमुच्चयार्थं चकारद्वयम् । क्षेमेण सोमं प्राप्नुहि पुनरपि क्षेमेणागच्छेत्ययमाशीर्वादमन्त्रद्वयस्यार्थः' इति सायणः. † 'अत्र एत्येधत्यूठ्सु इत्येतद् बाधित्वा स्वरूपेण एङि पररूपम् इत्येतद् प्रवर्तते । एति इत्यस्य नैकादेशस्य पूर्वं प्रत्यन्तवद्भावेन आङ्ग्रहणेन ग्रहणात् । तस्मिन् परतश्च शब्दाकारस्य ओमाङोश्चेति पररूपत्वम्' इति भट्टभास्करः. ‡ 'गायत्र्युदपतच्चतुरक्षरा सत्यजया ज्योतिषा तमसा अजाम्यरुन्ध तदजाया अजत्वं सा सोमं चाहरच्चत्वारि चाक्षराणि साष्टाक्षरा समपद्यत', 'पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकम्' इति तै० सं० ६-१-६. § पा० सू० वा० ८-२-३२. ¶ पा० सू० ७-३-४०. ‡ 'सोमपालाश्च स्वानभ्राजादयः । तथा च तै० सं० १-२-७ 'स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान् रक्षध्वम्' इति, 'स्वानभ्राजेत्याह एते वा अमुष्मिन् लोके सोममरक्षन् तेभ्योऽधि सोममाहरन्' इति च (६-१-१०).

किञ्च,

॥ यानि चेतरे छन्दसी अक्षराण्यजहितां तानि चोपसमगृभ्णात्* ॥

अजहिताम् । लङि †'जहातेश्च' इतीत्वम् । त्रीणि जगती त्यक्तवती एकं त्रिष्टुबिति । तानि चत्वारि । 'हृग्रहोर्भः'‡ ॥

॥ तस्या अनुविसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिदत् ॥

अनुविसृजिरनुधावनार्थः§ । पदः पादस्य । अच्छिदत् ¶इरित्वादङ् । छिन्नवान् शरेण ।

कृशानोः सोमरक्षित्वं श्रीमद्रामायणे श्रुतम्—
$''गुप्तं कुशिकपुत्रेण ज्वलनेनामृतं यथा ।'' इति ।
'ज्वलन्तमग्निं त........मभिप्रक्राम्य' इति च भारते‡‡ ॥

॥ तच्छल्यकोऽभवत् ॥

---

* 'साध्या वै नाम देवा आसंस्ते सर्वेण यज्ञेन सह स्वर्गं लोकमायंस्ते देवाश्छन्दांस्यब्रुवन् सोममाहरतेति ते जगतीं प्राहिण्वन् सा त्रीण्यक्षराणि हित्वैकाक्षरा भूत्वागच्छत् त्रिष्टुभं प्राहिण्वन् सैकमक्षरं हित्वा त्र्यक्षरा भूत्वागच्छत् गायत्रीं प्राहिण्वन् चतुरक्षराणि वै तर्हि छन्दांस्यासन् सा तानि चाक्षराणि हरन्त्यागच्छदष्टाक्षरा भूत्वा त्रीणि च सवनानि हस्ताभ्यां द्वे सवने दन्तैर्दष्ट्वा तृतीयसवनं तस्माद् द्वे अंशुमती सवने' इति ताण्ड्यब्रा० ८-४. † पा० सू० ६-४-११६. ‡ पा० सू० वा० ८-२-३२. § 'अनुविसृज्य ताम् अनुगम्य विसृज्य काण्डमिषुं तयाच्छिदत् । कुत एतदवगम्यते । सो वा तथैवुरनवदित्युपसंहारे तस्याः श्रुतत्वात्' इति भट्टभास्करः. ¶ पा० सू० ३-१-५७. $ बालकाण्डे स० २१ श्लो० ९. ‡‡ आदिपर्वणि अ० ३२ श्लो० २५ (Edited by T. R. Krishnacharya, Kumbakonam).

तत् छिन्ननखम् । शल्यकः सूचीवराहः* ॥

॥ तस्मात् स नखमिव ॥

तस्मात् तथाहि । स शल्यकः [1]नखमिव नखवर्णिरोमभि†श्चितत्वात् ॥

॥ यद्दशमस्रवत् सा वशाभवत् ॥

व्रणात् स्रुतं वशं मेदो वशा वन्ध्याय गौरभूत् ॥

॥ तस्मात् सा हविरिव ॥

तस्मात् तथाहि । मांसबहुलत्वात् सा वशा हविरिव‡ ॥

॥ अथ यः शल्यो यदनीकमासीत् स सर्पो निर्दश्यभवत् ॥

अथेति चार्थे ।

शरस्यास्यमनीकं स्याच्छल्यः कार्ष्णायसं मतम् ।
निर्दंशिसर्पो मूढश्री दंशनाक्षमदन्तकः§ ॥

---

1. 'वर्णिसूचिरोमभिः' क. पाठः.

---

* 'शल्यको मर्कटशरीरपरिमितः शलल्याख्यो मृग आसीत् । यस्य मृगस्य पुच्छसमीपे बहवो रोमविशेषाः प्रादेशपरिमितास्तीक्ष्णाग्रा लोहमया उत्पद्यन्ते स शल्यकः', † 'नखमिव तीक्ष्णाग्ररोमोपेतः' इति सायणः. 'तस्मान्नखपरिणामित्वात् स शल्यको नखमिवामेध्योऽभवत् । यद्वा नखमिव शुक्लवर्णोऽभवत् शुक्लवर्णैर्नखवत्तीक्ष्णै रोमभिराचितशरीरो भवति । यद्वा नखसमष्टिरिव भवति । यद्वा इवशब्दोऽवधारणे नखमेव भवति । तस्य शरीरे रोमाणि न सन्त्येव नखान्येव सर्वाङ्गीणानि रोमस्थानीयानि प्ररोहन्ति तस्मान्नखमय एव भवति' इति भट्टभास्करः. ‡ 'तस्माद् गावकशा उत्पन्नत्वात् सा वशा हविरिव देवतायोग्यं हविरेवासीत् । तस्या हविष्ट्वं शाखान्तरे श्रूयते—'एतामेव वशामादित्येभ्यः कामायालभेत' इति' इति सायणः. § 'अथ विसृष्टाया इषोर्यः कार्ष्णायसो भाग आसीत् यच्चानीकं मुखमासीत् । उभयोः सहोपादानं तत्परिणामयोः सर्पयोः सहोत्पत्तिख्यापनार्थम् । निर्दंशी नाम सर्पविशेषः नितरां दंशनशीलः स्वजो नामोभयतश्शिराः सर्पः । तावेकस्मात् दण्डात् सह जायेते । अनेनाभिप्रायेण सहग्रहणं करोति । एतदुक्तं भवति—यः शल्यः स निर्दंशी नाम सर्पोऽभवत् । यदनीकं स स्वजो नाम सर्पोऽभवत् । (आर्येण?) सर्पेण सहैव यः आर्येण सर्पेण सहोत्पत्तिक इत्यर्थः' इति भट्टभास्करः.

॥ *सहसः स्वजः ॥

अभवदित्येव। सहः वेगः। हसिः। स्वज इत्युभयशिरःस्थूलसर्पाख्या ॥

॥ यानि पर्णानि ते मन्थावलाः ॥

†महावाग्गुदा अभवन् ॥

॥ यानि स्नावानि ते गण्डूपदाः ॥

स्नावानि पत्रचित्रपट्टबन्धनानि। अवस्करदेशजाः सर्पा गण्डूपदाः‡ ॥

॥ यत् तेजनं सोऽन्धाहिः ॥

§तेजनमिति यष्टिनाम। सा उ अपि ¶अन्धाहिर्निर्नेत्रसर्पजातिः ॥

एवं,

॥ सो सा तथेषुरभवत् ॥

सा उ च सा।

||इषेः किलेत्युरत्रेषुशब्दः स्त्रीपुंसलिङ्गकः।
सा सा जातिरभूत् सेषुर्या वै क्षिप्ता कृशानुना ॥

द्वितीयः खण्डः।

---

* सह सः स्वज इति भट्टभास्करव्याख्यानुसारी पदच्छेदः। तथाख्या न पूर्वस्मिन् पृष्ठे (५२२) दर्शिता. † 'मन्थावला नाम महावाग्गुदा जन्तुविशेषाः। सर्पविशेषा एवेत्येके' इति भट्टभास्करः. ‡ 'अवस्करादिस्थानेषु ये सर्पाजायन्ते ते गण्डूपदाः' इति सायणः. § 'तेजनं ज्यानिधानस्थानम्। मुसलैशिल्यमित्येके', ¶ 'अर्घाहिर्नाम महासर्पः' इति भट्टभास्करः. || उणादिसू० १-१३.

पद्भ्यां मुखेन चागृह्णात् सा सोममिति वर्णितम् ॥

तत्र,

॥ सा यद् दक्षिणेन पदा समगृभ्णात् तत् प्रातस्सवनमभवत् ॥

पदा पादेन । *'हृग्रहोर्भः' ॥

॥ तद् गायत्री स्वमायतनमकुरुत ॥

तत् प्रातस्सवनम् । स्वमात्मीयम् ॥

॥ तस्मात् तत् समृद्धतमं मन्यन्ते सर्वेषां सवनानाम् ॥

स्वयं गायत्र्या गृहीतत्वात् । तस्मात् तथाहि । मध्ये ॥

॥ अग्र्यो मुख्यो भवति श्रेष्ठतामश्नुते य एवं वेद ॥

सः । †अग्र्य इति व्याचष्टे— मुख्य इति ॥

॥ अथ यत् सव्येन पदा समगृभ्णात् तन्माध्यंदिनं सवनमभवत् ॥

*'हृग्रहोर्भः' ॥

॥ तद्विस्रंसत ॥

लङ्यण् न । तन्माध्यंदिनं सवनं विस्रस्तमभवत् ॥

---

* पा० सू० वा० ८-२-३२. † 'अग्र्यः अग्रगण्यः, मुख्यः प्रधानभूतः, श्रेष्ठः प्रशस्यतमः' इति भट्टभास्करः

॥ तद्धिरूस्तं नान्वाप्नोत् पूर्वं सवनम् ॥

*अन्वाप्तिः समत्वम् ।

प्रातस्सवनेन नाभूत्तुल्यं माध्यंदिनं त्विह ॥

॥ ते देवाः प्राजिज्ञासन्त ॥

प्रातस्सवनतुल्यत्वमैच्छन् माध्यंदिनस्य ते ॥

तदर्थं,

॥ तस्मिंस्त्रिष्टुभं छन्दसामदधुः ॥

तस्मिन् माध्यंदिने सवने । मध्ये ॥

किञ्च,

॥ इन्द्रं देवतानाम् ॥

मध्ये अदधुरित्येव ॥

॥ तेन तत् समावद्वीर्यमभवत् पूर्वेण सवनेन ॥

तेन त्रिष्टुबिन्द्रस्थापनेन ॥

ततश्च,

॥ उभाभ्यां सवनाभ्यां समावद्वीर्याभ्यां समावज्जामीभ्यां राध्नोति य एवं वेद ॥

†जामिः स्निग्धस्वसा पूर्वनिपातश्छान्दसस्त्विह ।

तुल्यवीर्यस्निग्धसुहृत्समाभ्यामश्नुते सुखम्(?) ॥

---

* 'अनुगमनाय शक्तं नाभूत्' इति सायणः. † 'जामीशब्दो ज्ञातिवचनः' इति सायणभट्टभास्करौ.

॥ अथ यन्मुखेन समगृभ्णात् तत् तृतीयसवनमभवत् ।
तस्य पतन्ती रसमधयत्* ॥

तस्य तृतीयसवनांशभूतसोमस्य । पतन्ती गायत्री ॥

॥ तद्धीतरसं नान्वाप्नोत् पूर्वे सवने ॥

†'नपुंसकाच्च' इति शी । धीतः पीतो रसो यस्य तत् कर्तृ ।
नाभूत् तृतीयसवनं प्रातर्मध्यंदिनोपमम् ॥

अथ,

॥ ते देवाः प्राजिज्ञासन्त तत् पशुष्वपश्यन् ॥

तदर्थे सुप् । तत् निर्वहणम्‡ ॥

कथं,

॥ तद्यदाशिरमवनयन्त्याज्येन पशुना चरन्ति तेन तत्
समावद्वीर्यमभवत् पूर्वाभ्यां सवनाभ्याम्§ ॥

तत् तत्र । आशिरं पयः । अवनयन्ति सोमे प्रक्षिपन्ति पशुना पश्वङ्ग-हृदयादिना¶ ॥

---

* 'धीतं तृतीयसवनं दन्तैर्हि तद् दंष्ट्वा पयन्त्याहरत्' इति ताण्ड्यब्रा० ८-४.
† पा० सू० ४-१-१९. ‡ 'तत् साधनं पशुष्वपश्यन्' इति सायणभट्टभास्करौ.
§ तथाच तै० सं०—'ब्रह्मवादिनो वदन्ति कस्मात्सत्याद् गायत्री कनिष्ठा छन्दसां सती यज्ञमुखं परीयायेति यदेवादः सोममाहरत् तस्माद् यज्ञमुखं पर्यैत् तस्मात् तेजस्विनीतमा पद्भ्यां द्वे सवने समगृह्णात् मुखेनैकं यन्मुखेन समगृह्णात् तद्धयत् तस्माद् द्वे सवने शुक्रवती प्रातःसवनं च माध्यंदिनं च तस्मात् तृतीयसवन ऋजीषमभिषुण्वन्ति धीतमिव हि मन्यन्ते आशिरमवनयति सशुक्रत्वाय' इति ६-१-६. ¶ 'पूतभृतो बिल उदीचीनदशं पवित्रं वितत्य तस्मिन् यजमानः पुरस्तात् प्रत्यङ् तिष्ठन् सह पत्न्याशिरमवनयत्यस्मे देवासो वपुषे चिकित्सतेति चतसृभिः', 'हुतं हविः शमितरित्येवमादि पाशुकं कर्म प्रतिपद्यत एवात्रः' इति आ० श्रौ० सू० १३-१०-१०, १३-११-१.

॥ सर्वैः सवनैः समावद्वीर्यैः समावज्जामिभी राप्नोति य एवं वेद ॥

स्निग्धस्वसृसमैस्तुल्यवीर्यं राप्नोति वेदिता ।
फलं भ्रातृगतं कर्तुर्दण्डापूपिकया भवेत् ॥

तृतीयः खण्डः ।

---

प्रातस्सवनभागिन्या गायत्र्याः स्थितिरुच्यते ।
मरुत्वतीयशस्त्रे च वैश्वदेवे तथैव च—

॥ ते वा इमे इतरे छन्दसी गायत्रीमभ्यवदेताम् ॥

गायत्र्या सोम आनीते सवनत्रययोगिनि ।
तां प्रत्यवदतां त्रिष्टुब्जगत्यौ *भासनेति तद् ॥

कथं,

॥ वित्तं नावक्षराण्यनुपर्यागुरिति ॥

अगुर्गातिस्थेति† सिचो लुक्यात‡ इति झेर्जुसि ।
यान्यक्षराणि नौ मार्गे गलितानि पुराभवन् ॥
तानि त्वया गृहीतानि तद्धनं नौ न तत् तव ॥

॥ नेत्यब्रवीद् गायत्री यथावित्तमेव न इति ॥

---

* पा० सू० १-३-४७. † पा० सू० २-४-७७. ‡ पा० सू० ३-४-११०.

त्यक्तं युवाभ्यां दौर्बल्याद् गृहीतं तन्मया बलात् ।
चतुरक्षरकं तत्र युवयोः किं ममैव तत् ॥

॥ ते देवेषु प्रश्नमैताम् ॥

त्रिष्टुब्जगत्यौ ते रुष्टे गायत्र्यात्ताक्षरे उभे ।
देवेष्वगच्छतां न्यायं प्रष्टुं किन्वत्र साध्विति ॥

॥ ते देवा अब्रुवन् यथावित्तमेव व इति ॥

यद् गायत्र्या गृहीतं तत् तस्याः स्याद् युवयोर्न तत् ।
यद् येन लब्धं तत् तस्य नान्यस्येत्यवदन् सुराः ॥

॥ तस्माद्धाप्येतर्हि वित्त्यां व्याहुर्यथावित्तमेव न इति ॥

तस्मात् तथाहि । एतर्हि अस्मिन्नपि काले वित्त्यां लब्धौ सत्यामपि विचार्य यथावित्तं यथालब्धम् ॥

निराशे ते ततोऽभूतां जगती त्रिष्टुबेव च ॥

॥ ततो वा अष्टाक्षरा गायत्र्यभवत् ॥

स्वकीयचतुरक्षराधिकान्यचतुरक्षरनिरपवादत्वात् ॥

॥ त्र्यक्षरा त्रिष्टुप् ॥

त्यक्तैकाक्षरत्वात् ॥

॥ एकाक्षरा जगती ॥

त्यक्तत्र्यक्षरत्वात् ॥

॥ साष्टाक्षरा गायत्री प्रातस्सवनमुदयच्छत् ॥

उयमो निर्वाहः । लङ् । *'इषुगमि—' इति छः ॥

॥ नाशक्नोत् त्रिष्टुप् त्र्यक्षरा माध्यंदिनं सवनमुद्यन्तुम् ॥

निर्वोढुम् । †'शकधृष—' इति तुमुन् ॥

॥ तां गायत्र्यब्रवीदायान्यपि मेऽत्रास्त्विति ॥

आयानि लोट् । आगच्छानि । अत्र माध्यंदिने सवने ॥

॥ सा तथेत्यब्रवीत् त्रिष्टुप् तां वै मैतैरष्टाभिरक्षरैरुपसंधेहीति ॥

वै इति सान्त्वे । मा माम् । एतैस्त्वदीयैः । उपसंधेहीति सङ्गमय ॥

॥ तथेति तामुपसमदधात् ॥

तां त्रिष्टुभम् । अष्टाभिरक्षरैरित्येव । सेति च ॥

॥ एतद् वै तद् गायत्र्यै मध्यंदिने यन्मरुत्वतीयस्योत्तरे प्रतिपदो यश्चानुचरः ॥

तत् तत्र । ‡एतल्लब्धं स्थानम् । गायत्र्यै । ङसो ङे, गायत्र्याः । प्रतिपत्तृचस्य §'आ त्वा रथा'देः द्वे उत्तरे ¶'तुविशुष्म' $'यस्य त' इति । ‡'इदं वसो'ऽनुचरस्तृचः ॥

* पा० सू० ७-३-७७. † पा० सू० ३-४-६५. ‡ 'एतद् एतेन सहुप-सन्धानोपकारेण' इति भट्टभास्करः. § ऋक्सं० ६-५-१-१. ¶ ऋक्सं० ६-५-१-२. $ ऋक्सं० ६-५-१-३. ‡ ऋक्सं० ५-७-१७-१. 'आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति वैश्वदेवस्य प्रतिपदनुचरौ' इति आ० श्रौ० सू० ५-१४-४.

॥ सैकादशाक्षरा भूत्वा माध्यंदिनं सवनमुदयच्छत् ॥

आत्मीयत्र्यक्षरगायत्रीदत्ताष्टाक्षरयोगात् ॥

किञ्च,

॥ नाशक्नोज्जगत्येकाक्षरा तृतीयसवनमुद्यन्तुम् । तां गायत्र्यब्रवीदायान्यपि मेऽत्रास्त्विति । सा तथेत्यब्रवीज्जगती तां वै मैतैरेकादशभिरक्षरैरुपसंधेहीति ॥

एतैः त्रिष्टुभि त्वया संपादितैः ॥

॥ तथेति तामुपसमदधात् । एतद्वै तद् गायत्र्यै तृतीयसवने यद् वैश्वदेवस्योत्तरे प्रतिपदो यश्चानुचरः ॥

प्रतिपत्तृचस्य *'तत् सवितु'रादेरुत्तरे द्वे †'अस्य हि स्वयशस्तरं' ‡'सहि रत्नानि' इति । §'अबोध' इत्यनुचरतृचः ॥

सा द्वादशाक्षरा भूत्वा तृतीयसवनमुदयच्छत् । ततो वा अष्टाक्षरा गायत्र्यभवदेकादशाक्षरा त्रिष्टुप् ॥

अभवदित्येव ॥

॥ द्वादशाक्षरा जगती ॥

पूर्ववत् ॥

---

* ऋक्सं० ४-४-२५-१. † ऋक्सं० ४-४-२५-२. ‡ ऋक्सं० ४-४-२५-३. § ऋक्सं० ४-४-२५-४. 'तत् सवितुर्वृणीमहेऽद्यानो देवसवितरिति वैश्वदेवस्य प्रतिपदनुचरौ' इति आ० श्रौ० सू० ५-१८-५.

॥ सर्वैश्छन्दोभिः समावद्वीर्यैः समावज्जामिभी राभ्नोति
य एवं वेद ॥

*उक्तार्थप्रायम् ॥

॥ एकं वै सत् तत् त्रेधाभवत् ॥

वै एवम्। †'एधाच'।

गायत्र्याख्यं तु यच्छन्दस्तदेवं त्रिविधं बभूव ॥

॥ तस्मादाहुर्दातव्यमेवंविदुष इति ॥

गायत्रीवेदिने देयं समृद्ध्या इति वै विदुः ॥

॥ एकं ‡हि सत् तत् त्रेधाभवत् ॥

त्रिशब्दो बह्वर्थः[1]। अभवत् लिङो लङ्। भवेत् ॥

*गोभूतिलहिरण्यादि दत्तं बहुविधं भवेत्।
गायत्र्यादिवेदविद्याविदे स्मरति गौतमः—

§'समद्विगुणसाहस्रानन्त्यानि फलान्यब्राह्मणब्राह्मणश्रोत्रियवेदपारगेभ्यः' इति ॥

चतुर्थः खण्डः।

---

१. 'हेत्वर्थः' क. पाठः

* page 527. † पा० सू० ५-३-४६. ‡ 'इदानीं हेतौ हिशब्दः पूर्वत्र तु प्रसिद्धो वैशब्दः इति विवेकः' इति भट्टभास्करः. § धर्मसूत्रं प्र० १ अ० ५ सू० १८.

इत्थं सोमकथा प्रोक्ता सवनत्रयसङ्गतिः ।
गायत्र्याश्चोच्यतेऽथात्र तृतीयसवनं परम्—

॥ ते देवा अब्रुवन्नादित्यान् ॥

कथं,

॥ युष्माभिरिदं सवनमुद्यच्छामेति ॥

उद्यमः आरम्भः । लोट् । आरभामहे ॥

॥ तथेति ॥

तैश्चोक्तमिति शेषः ॥

॥ तस्मादादित्यारम्भणं तृतीयसवनम् ॥

भवति । आदित्येनारभ्यत इत्यादित्यारम्भणम्* । कर्मणि ल्युटि †'रभेरशब्लिटोः' इति नुम् ॥

कुत एतत्,

॥ आदित्यग्रहः पुरस्तात् तस्य‡ ॥

यस्मादिति शेषः । §तृतीयसवनस्यादावादित्य इज्यते ॥

कथं,

॥ यजत्यादित्यासो अदितिर्मादयन्तामिति¶ मद्वत्या रूपसमृद्धया ॥

* 'आदित्यारम्भणं तृतीयसवनम्' इति आप० श्रौ० सू० १३-१-१. † पा० सू० ७-१-६३. ‡ तस्येत्यस्योत्तरत्रान्वयो भट्टभास्करमते । तथाच तद्व्याख्या—'तस्य यजतीत्यादि । यजेश्च करण इति करणे तृतीया । तेन यजति होता आदित्यांश्च इत्यनयर्चा' इति. § 'अथ तृतीयसवनमुत्तमस्वरेण । आदित्यग्रहेण चरन्ति' इति आ० श्रौ० सू० ५-१७-१, २. ¶ ऋक्सं० ५-४-१८-२. 'आदित्यासो अदितिर्मादयन्तामिति नैतं ग्रहमीक्षेत हूयमानम्' इति आ० श्रौ० सू० ५-१७-३.

प्रशास्त्रा प्रेषितो होतानुवाक्याप्रैषवादिना।

मद्वती मद हर्षे इति धातुमती॥

॥ मद्वद्वै तृतीयसवनस्य रूपम्॥

*रूपमनुरूपं योग्यम्।

मध्यंदिने भुक्तवन्तस्ततो माद्यन्ति खल्विति॥

अत्र च,

॥ नानुवषट्करोति॥

'आदित्यग्रहसावित्री तान् स्म मानुवषट्क्रयाः'।

इति हि †सूत्रपठिता यज्ञगाथा॥

॥ न भक्षयति॥

कुतः,

॥ संस्था वा एषा यदनुवषट्कारः॥

यत् यः॥

॥ संस्था भक्षः॥

ततः किं,

॥ प्राणा आदित्या नेत् प्राणान्संस्थापनीयानीति॥

‡इत् एव। भावेन॥

---

* 'तृतीयसवनस्य स्वरूपमपि मद्वद् हर्षान्वितमेव तत्समाप्तौ देवतानां यजमानाना-मृत्विजां हर्षोत्पत्तेः' इति सायणः. 'ऋत्विग्यजमाना देवताश्चास्मिन् माद्यन्ति इति कृत्वा मद्वत् तृतीयसवनस्य रूपम्' इति भट्टभास्करः. † आ० श्रौ० सू० ५-५-२१. 'नानुवषट्करोति यदनुवषट्कुर्याद् रुद्रं प्रजा अन्ववसृजेत्' इति तै० सं० ६-१-६. 'सर्वत्रानुवषट्कारो द्विदेवत्यर्तुग्रहादित्यसावित्रपात्नीवतवर्जम्' इति आप० श्रौ० सू० १२-२४-२.

‡ 'नेदिति भयद्योतनार्थो निपातः' इति सायणः.

इत्यादित्यग्रहः प्रोक्तः सावित्रग्रह उच्यते—

॥ त आदित्या अब्रुवन् सवितारम् ॥

कथं,

॥ त्वयेदं सह सवनमुद्यच्छामेति । तथेति ॥

तेनाप्युक्तमिति शेषः ॥

॥ तस्मात् सावित्री प्रतिपद्भवति वैश्वदेवस्य ॥

शस्त्रस्य । *"तत्सवितुर्वृणीमहे" इति प्रतिपदृचः ॥

किञ्च,

॥ सावित्रग्रहः पुरस्तात् तस्य ॥

तस्य वैश्वदेवस्य पुरस्ताद्भवति ॥

कथं,

॥ यजति दमूना देवः सविता वरेण्य इति मद्वत्या रूपसमृद्धया ॥

प्रशास्त्रा प्रेषितो होतानुवाक्याप्रैषवादिना ।

†सूत्रपठिता चेयम् ॥

॥ मद्वद्वै तृतीयसवनस्य रूपम् । नानुवषट्करोति । न भक्षयति । संस्था वा एषा यदनुवषट्कारः संस्था भक्षः प्राणः सविता नेत् प्राणं संस्थापयानीति ॥

भावेन ॥

---

* ऋक्सं० ४-४-२५-१. † आ० श्रौ० सू० ५-१८-२.

सावित्रग्रह इत्युक्तो होतुः शस्त्रमथोच्यते।
वैश्वदेवं निविद्धानचतुस्सूक्तसमन्वितम्॥
पञ्चधाय्यान्वितं यावदाग्नेयी प्रथमेति वै।
तत्राभूद्देव*सावित्रे निविदं स्तोतुमाह ह—

॥ उभे वा एष एते सवने विपिबति यत् सविता प्रातस्सवनं च तृतीयसवनं च ॥

यत् यः। विशेषेण॥

कथं,

॥ तद्यत् पिबवत् सावित्र्यै निविदः पदं पुरस्ताद्भवति मद्वदुपरिष्टादुभयोरेवैनं तत्सवनयोराभजति प्रातस्सवने च तृतीयसवने च ॥

सावित्र्यै सावित्र्याः। 'सविता देवः सोमस्य पिबत्वि'ति पुरस्तात्-पदं पिबवत् पिबशब्दवत्। 'सविता देव इह श्रवदिह सोमस्य मत्स-दि'त्युपरिष्टात्पदं मद्वत् मदधातुमत्। तत् पदद्वयं कर्तृ। एनं सवितारम् आभजति सवनद्वयमनुभावयति। †'पीतवद्वै प्रातस्सवनं' ‡'समेव तृतीयसवने मादयन्ते' इति च वक्ष्यते॥

अथैकयेति खैलिक्या धाय्यायाः श्रैष्ठ्यमाह ह—

॥ बह्वृचः प्रातर्वायव्याः शस्यन्त एका तृतीयसवने ॥

---

* ऋक्सं० ३-८-५-१. 'सावित्रेण ग्रहेण चरन्त्यभूद् देवः सविता वन्द्यो नु नः' इति आ० श्रौ० सू० ५-१८-१, २. † ऐ० ब्रा० १६-४. ‡ ऐ० ब्रा० २८-३.

प्रउगे वायुरग्रेगा पुरोरुग्वायव्यास्तृचः ।
आभिश्चतसृभिस्तुल्या वायव्यात्रैकयेति वा ॥

अत्र दृष्टान्तमाह—

॥ तस्मादूर्ध्वाः पुरुषस्य भूयांसः प्राणा यच्चावाञ्चः ॥

तस्मादिति यथेत्यर्थो यचेति स्वल्पवाचकः ।
नाभेरूर्ध्वं नव प्राणा द्वौ स्तन्यौ सप्त मूर्धनि ॥
त्रयोऽवाञ्चस्तु रेतस्यः पुरीष्यो मूत्र्य एव च ।
नवभ्योऽपि हि देहस्य त्रयः खलु सुखप्रदाः ॥
सत्स्वेव नवसु त्वेषामभावे दुःखदर्शनात् ।
एवमेकापि वायव्या चतसृभ्योऽतिरिच्यते ॥

॥ द्यावापृथिवीयं शंसति ॥

*पञ्चर्चं दैर्घतमसं यत् †प्रद्यावा ऋता वृधा ॥

स्तौति—

॥ द्यावापृथिवी वै प्रतिष्ठे ॥

कथम्,

॥ इयमेवेह प्रतिष्ठा ॥

‡इह अस्मिन् लोके ॥

॥ असावमुत्र ॥

प्रतिष्ठेत्येव । असौ स्वर्गः । §अमुत्र परलोके ॥

---

* 'प्र द्यावा यज्ञैः पृथिवी नमोभिः' इति ऋ० म० १ सू० १५९. 'प्रद्यावेति दैर्घतमसम्' इति आ० श्रौ० सू० ५-१८-५. † ऋक्सं० २-३-२-१. ‡ 'इह मनुष्यजन्मनि', § 'अमुत्र जन्मान्तरे' इति सायणभट्टभास्करौ.

## ॥ तद्यद् द्यावापृथिवीयं शंसति प्रतिष्ठयोरेवैनं तत् प्रतिष्ठापयति ॥

तत् तत्र । एनं यजमानम् । शंसति यत् प्रतिष्ठापयति तत् ॥

पञ्चमः खण्डः ।

प्रथमे दशके खण्डाः संख्याता एकसप्ततिः ।
द्वितीय एकान्नत्रिंशदिति खण्डशतं गतम् ॥

---

## ॥ आर्भवं शंसति ॥

*तक्षन् रथेति पञ्चर्चं सूक्तमत्रर्भुदैवतम् ।
अत्रेतिहासं कथयन्ति विप्रा महात्मानस्त्वार्भवं वेदद्दष्टम्† ।
आसन् सुतास्त्वङ्गिरःपुत्रकस्य सुधन्वनो वाजविभ्वर्भुसंज्ञाः ॥
तपश्चेरुर्मानुषा वै सुरत्वं यज्ञे भागं चेप्सवो वर्षपूगान् ।
प्रजापतेर्वचनादग्निरेतानुवाचेष्टं क्रियतां देवशिल्पम् ॥
रथाद्ययो वो भविता समृद्धिरित्युक्तास्ते चक्रिरे देवशिल्पम् ।
सुदुष्करं चाद्भुतं चित्तयोज्याविन्द्रस्याश्वावश्विनोर्वै रथं च ॥
बृहस्पतेरमृतस्नाविणीं च शुक्लां धेनुं पितरौ स्वौ युवानौ ।
कृतं त्वष्ट्रा चमसं चैकमेव प्रचक्रिरे चतुरो विद्ययैव ॥
तदद्भुतं प्रेक्ष्य सुरास्तु हृष्टाः सुरानेतांश्चक्रिरे यज्ञियांश्च ।
प्रजापतिप्रमुखास्तेऽथ वेदे स्तुत्या आसन् बहुशो यज्ञभाजः ॥

---

* ऋक्सं० १-७-२२-१. † इतिहाससायणऋक्संहितायां (मं० ४. सू० ३५,३६) द्रष्टव्याः.

जरां मृत्युं मानुषत्वं च तीर्णाः प्रजापतेः सवितुश्चैकभक्ताः ।
ऋभुर्विभ्वा वाज एकेन चापि नाम्नोच्यन्ते साहचर्यात्तु सर्वे ॥
इत्यार्भवः सर्वसमृद्धिकारी प्रवर्णितश्चेतिहासो महार्थः ।
यस्य स्मृतेः श्रवणाच्छ्रावणाच्च भवेद्रूपमायुरारोग्ययुक्तम् ॥

अत्र विशेषमाह—

॥ ऋभवो वै देवेषु तपसा सोमपीथमभ्यजयन् ॥

वै पुरा। पीथः पानम्। अभिजयः प्राप्तिः। *नियमेषु तपश्शब्दः ॥

ततो देवाः,

॥ तेभ्यः प्रातस्सवनेऽवाचिकल्पयिषन् ॥

शसो भ्यस्, तान्। णिचः सनो लङ्। †अवक्लृप्तिरनुभवः। अव-कल्पयितुमैच्छन् ॥

॥ तानग्निर्वसुभिः प्रातस्सवनादनुदत ॥

तिपस्तः, अनुदत् निराकृतवान् ॥

॥ तेभ्यो माध्यंदिने सवनेऽवाचिकल्पयिषन्। तानिन्द्रो रुद्रैर्माध्यंदिनात् सवनादनुदत। तेभ्यस्तृतीयसवनेऽवाचि-कल्पयिषन्। तान् विश्वेदेवा अनोनुद्यन्त ॥

ऋभूनत्यर्थमनुदन् यङ् ‡गुणो यङ्लुकोर्लङ्द् ॥

---

* तथाचापस्तम्बधर्मसूत्रमपि—'नियमेषु तपश्शब्दः' (प्र० १ पट० २ सू० १) इति. † 'अवक्लृप्तिः सम्भावना' इति अमरसिंहः. ‡ पा० सू० ७-४-८२.

कथं,

॥ नेह पास्यन्ति नेहेति ॥

इह प्रदेशे पानं प्राप्तिः ॥

एवं तेषु द्राविते‍षु सवनत्रयतोऽपिच,

॥ स प्रजापतिरब्रवीत् सवितारम् ॥

स ऋभूणां बन्धुः ॥

कथं,

॥ तव वा इमेऽन्तेवासाः । त्वमेवैभिः संपिबस्वेति ॥

वै इव । एवं तावदित्यर्थः । एभिः सं सह पिबस्व । सर्वस्य बन्धो । अन्तेवासाः । *'शयवास—' इत्यलुक् ।

तव भक्तास्तपोयोगाच्छिष्यवत् संप्रियास्तव ।
अतो द्यावापृथिव्यात् तु परं स्थापय तानृभून् ॥

॥ स तथेत्यब्रवीत् सविता ॥

किन्तु,

॥ तान् वै त्वमुभयतः परिपिबेति ॥

सविताब्रवीदित्येव ॥

॥ तान् प्रजापतिरुभयतः पर्यपिबत् ॥

परिपानं संश्रयः ॥

---

* पा० सू० ६-३-१८।

कथं,

॥ ते एते धाय्ये अनिरुक्ते प्राजापत्ये शस्येते अभित आर्भवम् ॥

के ते,

॥ *सुरूपकृत्नुमूतये†ऽयं वेनश्चोदयत् पृश्निगर्भा इति ॥

‡नन्वैन्द्रीयं सुरूपाद्यायमाद्या वेनदेवता ।
सत्यमाद्यानुक्तदेवा द्वितीयास्पष्टदेवता ॥
'अनिरुक्तं प्राजापत्य'मित्यत्र खलु वक्ष्यते§ ।
धाय्यात्वं सूत्र्यते चात्र ¶'धाय्याश्चात्रैकपातिनीः' ॥

॥ प्रजापतिरेवैनांस्तदुभयतः परिपिबति ॥

तत् तेन प्रकारेण । सूत्र्यते हि§—'सुरूपकृत्नुमूतये तक्षन् रथमयं वेनश्चोदयत् पृश्निगर्भाः' इति ॥

॥ तस्मादु श्रेष्ठी पात्रे रोचयत्येव यं कामयते तम् ॥

तस्मात् तथाहि श्रेष्ठी तु प्रशस्यगुणसंयुतः ।
स्वसमीपस्थापनेन प्रकाशयति खलु तम् ॥
यं श्रद्दधाति पुनरु पात्रे पानादिकर्मणि ।
विदुषा पूजितं तं तु लोकोऽस्य बहुमन्यते‡ ॥

---

* ऋक्सं० १-१-७-१. † ऋक्सं० ८-७-७-१. ‡ तथाच सर्वानुक्रमणी—'सुरूपकृत्नुं दशैन्द्रम्', 'अयं वेनो वैन्यम्' इति म० १ सू० ४, १०-१२३. § ऐ० ब्रा० २९-४. ¶ आ० श्रौ० सू० ५-१८-११. § आ० श्रौ० सू० ५-१८-५. ‡ 'श्रेष्ठी कश्चिद् धनपतिर्यं स्वकीयं भृत्यमितरैरसत्कृतमपि सर्वेभ्यो रोचयितुं कामयते तं सत्यमाचारहीनं पात्रे प्रतिग्रहयोग्यस्थाने बलात् सर्वेभ्यो रोचयत्येव' इति सायणः.

॥ तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात् ॥

वै इति खेदे । एव पुनः । तेभ्यः । *'जुगुप्सा'विराम—' इत्यपादानम् । [1]मनुष्यगन्धाद्धेतोः अपाबीभत्सन्त †'मान्वध—' इति सनो लङ् ॥

॥ त एते धाय्ये अन्तरदधत ॥

मध्ये न्यदधुः ॥

के ते,

॥ येभ्यो मातैवा पित्र इति ॥

सूत्र्यते हि§—'येभ्यो माता मधुमत् पिन्वते पय एवा पित्रे विश्वदेवाय वृष्ण (आनो भद्राः क्रतवो यन्तु विश्वत ?)' इति ॥

षष्ठः खण्डः ।

---

॥ वैश्वदेवं शंसति ॥

¶आनो भद्रा दशर्चं सन्नवर्चं तु भवेदिह ।

‡'आनो दश वैश्वदेवम्' इति हि सर्वानुक्रमणी । ||'आनो भद्राः क्रतवो यन्तु विश्वत इति नव वैश्वदेवम्' इति च सूत्र्यते । अत्राहुः—

आनो भद्रा दशर्चं सन्नवर्चत्वेन खण्डितम् ।

---

1. 'तेभ्य इति जुगुप्सा' क. पाठः

---

* पा० सू० वा० १-४-२४. † 'मनुष्यगन्धाद् ईषन्मनुष्यत्वात् । गन्धशब्दोऽल्पवचनः' इति भट्टभास्करः. ‡ पा० सू० ३-१-६. § आ० श्रौ० सू० ५-१८-५. ¶ ऋक्सं० १-६-१५-१ ‡ म० १ सू० ८९. || आ० श्रौ० सू० ५-१८-५.

सूत्रे महित आहावाभूर्विवित्त्वाभिचारिकी ।
दशत्वेऽभित आहावादितिर्द्यौः प्राङ् निविद् भवेत् ॥
नवत्वे शतमिन्वस्याः प्रागाद्याहावयुङ् निवित् ।
आद्याहावादितिर्द्यौश्च वैश्वदेवान्तिमा सदा* ।
यं कामयते तं तेति पूर्वमत्राध्यगीष्महि†(?) ॥

अथ वैश्वदेवं शस्त्रं स्तौति—

॥ यथा वै प्रजा एवं वैश्वदेवम् ॥

राष्ट्रं प्रजाः ॥

॥ तद् यथान्तरं जनता एवं सूक्तानि ॥

तत् तत्र । अन्तरम् अं इत्यर्थे । अन्तरे मध्ये जनताः जनसमूहाः, एवं तथा ॥

॥ यथारण्यान्येवं धाय्याः ॥

अरण्यं वनम् ॥

॥ तदुभयतो धाय्यां पर्याह्वयते ॥

तत् तत्र । धाय्यामुभयतः ॥

॥ तस्मात् तान्यरण्यानि सन्त्यनरण्यानि मृगैश्च वयोभिश्चेतिहस्माह ॥

* 'अदितिर्द्यौरदितिरन्तरिक्षमिति परिदध्यात् सर्वत्र वैश्वदेवे' इति आ॰ श्रौ॰ सू॰ ५-१८-१२. † page 540.

तस्मात् तथाहि । सन्ति । शतुर्नसः श्रि तुम् । मृगैर्वराहादिभिः वयोभिः पक्षिभिरनरण्यानि त्यक्तग्राण्यगोचरस्थानि । इति कश्चिद् ब्रह्मवाद्याह स्म ॥

पुनः स्तौति—

॥ यथा वै पुरुष एवं वैश्वदेवम् ॥

कथं,

॥ तस्य यथा वान्तरमङ्गान्येवं सूक्तानि ॥

*वा खलु । अन्तरे मध्ये ॥

॥ यथा पर्वाण्येवं धाय्याः ॥

अङ्गुल्यादिगतः सन्धिः पर्व ॥

॥ तदुभयतो धाय्या पर्याह्वयते ॥

तत् तत्र ॥

॥ तस्मात् पुरुषस्य पर्वाणि शिथिराणि सन्ति दृह्ळानि ॥

तस्मात् तथाहि । दृढानि ॥

कुत एतत्,

॥ ब्रह्मणा हि तानि धृतानि ॥

†ब्रह्म वेदः ॥

सप्तसंस्थान्विते सोमे सर्वधाय्यास्तु विंशतिः ।
त्रयस्त्रिंशच्छस्त्रयाज्या सदासां तुल्यतोच्यते ॥

---

* 'अवान्तरमभ्यन्तरप्रवेशाद्वान्तवयवा यथा', † 'ब्रह्म वा आहाव इति श्रुतत्वादाहावरूपेण ब्रह्मणेत' इति सायणः.

॥ मूलं वा एतद् यज्ञस्य यद्धाय्याश्च याज्याश्च ॥

यत् याः ॥

॥ तद्यदन्या अन्या धाय्याश्च याज्याश्च कुर्युरुन्मूलमेव तद् यज्ञं कुर्युस्तस्मात् ताः समान्य एव स्युः ॥

तत् तत्र । यत् यदि । उन्मूलमुद्धृतमूलम् । *'केवलमामक—' इति ङीष् ॥

पुनः स्तौति[1]—

॥ पाञ्चजन्यं वा एतदुक्थं यद् वैश्वदेवम् ॥

हितार्थे यत् पञ्चजनास्ततस्स्वार्थे कृतस्त्विह ॥

स्पष्टयति—

॥ सर्वेषां वा एतत् पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां च ॥

एको राशिस्तु गन्धर्वा अप्सरोभिः समन्विताः ॥

निगमयति—

॥ एतेषां वा एतत् †पञ्चजनानामुक्थम् ॥

---

१. 'पुनः शस्त्रं स्तौति' ग. ड. पाठः.

---

* पा० सू० ४-१-३०. † 'इदमर्थे तद्धित इति ख्यापनपरमिदं पुनर्वचनम् । तत्र तत्रैव पञ्चैव जनाः पञ्चजना इति दिक्संख्ये संज्ञायामिति समानाधिकरणसमासः । तत्र सर्वेषां प्रत्येकं पञ्चजना इति संज्ञा समर्पितम् । तत्र इदमर्थे छान्दसः ञ्यम्' इति भट्टभास्करः.

किञ्च,

॥ सर्वं एनं पञ्चजना विदुः ॥

एनं होतारम् ॥

॥ एनं पाञ्चिन्यै जनतायै हविनो गच्छन्ति ॥

पञ्चत्वं पञ्च मत्वर्थे *व्रीह्यादीनेंष्ठिलोपङीप् ।
†जनात् समूहे तल् ताभ्यां तादर्थ्ये ङे हवोऽध्वरः ॥
ये पञ्चजनसंप्रीत्यै कर्म यज्ञादि कुर्वते ।
त एनमागच्छेयुर्वै वैश्वदेवस्य शंसकम् ॥

॥ य एवं वेद ॥

तमपि ॥

दिग्ध्यानार्थमाह—

॥ सर्वदेवत्यो वा एष होता यो वैश्वदेवं शंसति ॥

तादर्थ्ये यत्‡ । सर्वदेवतानां स्तावकत्वात् ॥

ततश्च,

॥ सर्वा दिशो ध्यायेच्छंसिष्यन् ॥

होता ॥

॥ सर्वास्वेव तद् दिक्षु रसं दधाति ॥

---

* पा० सू० ५-२-११६. † पा० सू० ४-२-४३. ‡ पा० सू० ५-४-२४.

दिग्ध्यानेन तु तत् तेन रसं लाभं हि दिग्गतम् ॥
लभते कोणरहिता दिश ऐन्द्र्यादिका मताः ॥

॥ यस्यामस्य दिशि द्वेष्यः स्यान्न तां ध्यायेत्* ॥

अस्य होतुर्यष्टुर्वा । द्वेष्यः शत्रुः । तां दिशम् ॥

॥ अनुहायैवास्य तद्वीर्यमादत्ते ॥

अनुहानमभिभवः† । तत् तेन । अस्य शत्रोः ॥

॥ ‡अदितिर्द्यौरदितिरन्तरिक्षमित्युत्तमया परिदधाति§ ॥

व्याचष्टे—

॥ इयं वा अदितिरियं द्यौरियमन्तरिक्षम् ॥

¶अदितेः पृथिवीनामसु पाठात् । तदाश्रयत्वाच्च सर्वस्य ॥

॥ अदितिर्माता स पिता स पुत्र इति । इयं वै मातेयं पितेयं पुत्रः । विश्वेदेवा अदितिः पञ्चजना इति । अस्यां वै विश्वेदेवा अस्यां पञ्चजनाः ॥

पूर्वमुक्ताः पञ्चजना वर्णा वा सनिषादकाः ॥

---

* 'सर्वा दिशो ध्यायेच्छंसिष्यन् । यस्यां द्वेष्यो न तां' इति आ० श्रौ० सू० ५-१८-३. † 'अनुहायैव द्वेष्यस्य पृष्ठतो गत्वैव' इति सायणः. 'अनुहाय अनुक्रमेण स्थापयित्वैव । यद्वा अनुगम्यैव बन्धुभावमाचरन्नेव' इति भट्टभास्करः. ‡ ऋक्सं० १-६-१६-५. § 'अदितिर्द्यौरदितिरन्तरिक्षमिति परिदध्यात् सर्वत्र वैश्वदेवे' इति आ० श्रौ० सू० ५-१८-१२. ¶ या० निघ० १-१. 'अखण्डितत्वाददीनत्वाद्वा भूमिरेवादितिरित्युच्यते । सेयं भूमिरेव द्युलोकरूपान्तरिक्षरूपा च । अस्यां भूमौ कर्म कृत्वा तल्लोकप्राप्तेः समारोपयितुं शक्यत्वात्' इति सायणः.

॥ अदितिर्जातमदितिर्जनित्वमिति । इयं वै जातमियं जनित्वम् ॥

भविष्यति जनेरित्वो* जनित्वं यज्जनिष्यते ।
जातं वस्तु समुत्पन्नं तद् द्वयं चेयमेव हि ॥

तत्र,

॥ द्विः पच्छः परिदधाति ॥

ततः किं,

॥ चतुष्पादा वै पशवः ॥

अन्त्यालोपश्छान्दसः ॥

॥ पशूनामवरुध्यै ॥

तद् द्विःपच्छस्त्वं स्यात् ॥

॥ सकृदर्धर्चशः† ॥

परिदधातीत्येव ॥

तच,

॥ प्रतिष्ठाया एव ॥

स्यात् ॥

॥ द्विप्रतिष्ठो वै पुरुषः । चतुष्पादाः पशवः ।
यजमानमेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति ॥

‡उक्तार्थम् ॥

---

* उणादिसू० ४-१०६. † 'द्विः पच्छोऽर्धर्चशः सकृद् भूमिमुपस्पृशन्' इति आ० श्री० सू० ५-१८-१२. ‡ pages 298 & 299.

॥ सदैव पञ्चजनीयया परिदध्यात् ॥

प्रकृतौ विकृतौ चेयं वैश्वदेवेऽन्तिमा भवेत् ।
अदितिर्द्यौ*र्गहादिच्छाद्दापः पञ्चजनात्तु दा ॥

॥ तदुपस्पृशन् भूमिं परिदध्यात् ॥

तत् तया । लिङ्लटोर्व्यत्यासः[†] ।

तया परिदधच्छस्त्रं स्पृशेद् भूमिं तु पाणिना ॥

॥ तद्यस्यामेव यज्ञं संभरति तस्यामेवैनं तदन्ततः प्रतिष्ठापयति ॥

तत् तथा सति । सम्भरत्यारभते । तत् तेन भूमिस्पर्शनेन । अन्ततः अन्ते ॥

शस्त्रयाज्यामाह—

॥ [‡]विश्वेदेवाः शृणुतेमं हवं म इति वैश्वदेवमुक्थं शस्त्वा वैश्वदेव्या यजति[§] ॥

उक्थं शस्त्रम् ॥

॥ यथाभागं तद् देवताः प्रीणाति ॥

तत् तया याज्यया ॥

सप्तमः खण्डः ।

---

* पा० सू० ४-२-१३४. † 'भूमिं हस्तेनोपस्पृशन् परिदध्याद्' इति भट्टभास्करसायणौ. ‡ ऋक्सं० ४-८-१६-२. § 'विश्वेदेवाः शृणुतेमं हवं म इति याज्या' इति आ० श्रौ० सू० ५-१८-१३.

वैश्वदेवं शस्त्रमुक्तं चरुः सौम्योऽथ कथ्यते ।
पुरस्ताच्च परस्ताच्च चरोः सौम्यस्य खल्विमे ॥
घृतयाज्ये क्रमादग्निविष्णुदैवतसंयुते* ।
विधेते ते समाश्रित्य रोचयन् प्रब्रवीति ह—

॥ आग्नेयी प्रथमा घृतयाज्या ॥

'घृताहवन' इति सूत्रपठिता† अग्निदेवत्या पुरस्तात् सौम्यस्य भवति ॥

॥ सौमी सौम्ययाज्या ॥

‡'त्वं सोमे'ति सौमी सोमदेवत्या§ सध्ये ¶सोमाट्ट्यणो ङीप् । §'हलस्तद्धितस्य' ॥

॥ वैष्णवी घृतयाज्या ॥

'उरु विष्णो वी'ति सूत्रपठिता† उपरिष्टात् सौम्यस्य घृतयाज्या विष्णुदेवत्या ॥

तत्र,

॥ *त्वं सोम पितृभिः संविदान इति सौम्यस्य पितृमत्या यजति ॥

अमो ङस् । सौम्यस्य‡ ॥

---

* 'तं घृतयाज्याभ्यामुपांशुमनयतः परियजन्ति' इति आ० श्रौ० सू० ५-१९-२. 'आज्येनोपांशुमनतः सौम्यं परियजति । अन्यतरतो वा' इति आप० श्रौ० सू० ११-१३-२०. † आ० श्रौ० सू० ५-१९-३. ‡ ऋक्सं० ६-४-१३-३. § 'त्वं सोम पितृभिः संविदान इति सौम्यस्य याज्या' इति आ० श्रौ० सू० ५-१९-१. ¶ पा० सू० ४-२-३०. § पा० सू० ६-४-१५०. ‡ 'सौम्यस्य चरोर्यजति । गजेथ क्रश इति षष्ठी श्रोमेन चरुणा यजति' इति भट्टभास्करः.

पितृमत्त्वं स्तौति—

॥ घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति ॥

अभिषवं कुर्वन्तीति यत् सोमं घ्नन्त्येतत् ॥

ततः किं,

॥ तस्यैतामनुस्तरणीं कुर्वन्ति यत् सौम्यः ॥

यत् यः । तस्य मृतकल्पस्य ।

गौरनुस्तरणी ज्ञेया पितृमेधेषु कीर्तिता ।
मृतस्य यजमानस्य छाद्यतेऽङ्गं यदङ्गकैः ॥

सूत्र्यते हि सूत्रे—*"अनुस्तरण्या वपामुत्खिद्य—' इत्यादि ॥

कुत एतत्,

॥ पितृभ्यो वा अनुस्तरणी ॥

आमो भ्यस्, पितॄणाम् । प्रीतिकरीति शेषः ॥

निगमयति—

॥ तस्मात् सौम्यस्य पितृमत्या यजति ॥

किञ्च,

॥ अवधिषुर्वा एतत् सोमं यदभ्यसुषवुः ॥

श्नोः श्लुः । अभ्यषुण्वन् । यत् सोममवधिषुरेतत् ॥

ततः किं,

॥ तदेनं पुनः सम्भावयन्ति पुनराप्यायन्त्युपसदां रूपेण ॥

* आ० गृ० सू० ४-३-१५.

संभावनं सजीवत्वं वृद्धिराप्यायनं तथा।

तत् तैः अग्निसोमविष्णुदेवत्ययोगैः। रूपं प्रकारः॥

कथम्,

॥ उपसदां किल वैतद्रूपं यदेता देवता अग्निः
सोमो विष्णुरिति॥

सूत्र्यते हि—"'अग्निं सोमं विष्णुमित्यावाह्य—' इति॥

॥ प्रतिगृह्य सौम्यं होता पूर्वश्छन्दोगेभ्योऽवेक्षेत[†]॥

'यत्ते चक्षु'रिति सूत्रपठितेन[‡] घृतपूर्णे सौम्यचरावात्मच्छायां पश्येत्। अत्राहुः—

[§]"छन्दोगा बह्वृचाश्चैव यजुर्वेदविदस्तथा।
घृतपूर्णे सौम्यचरौ छायां पश्यन्ति शुद्धये॥
आरोग्यायायुषे चैव पुत्रयज्ञादिसिद्धये॥"

इति॥

॥ तं हैके पूर्वं छन्दोगेभ्यो हरन्ति तत् तथा न कुर्यात्[¶]॥

एके अध्वर्यवः। कुर्युः संवादनार्थः। न संवदेत्॥

कुतः,

॥ वषट्कर्ता प्रथमः सर्वभक्षान् भक्षयतीतिहस्माह
तेनैव रूपेण॥

---

* आ॰ श्रौ॰ सू॰ ४-८-६. † 'आहृतं सौम्यं पूर्वमुद्गातृभ्यो गृहीत्वावेक्षेत' इति, ‡ आ॰ श्रौ॰ सू॰ ५-१६-४. § वचनमिदं मृग्यम्. ¶ 'वषट्कृते हुत्वा प्रत्याक्रम्याज्येन चरुमभिपूर्य। उद्गातृभ्यो हरन्ति। तदुद्गातारोऽवेक्षन्ते सत्रो न एतद्धुत इहेति' इति आप॰ श्रौ॰ सू॰ १३-१३-२३, १३-१४-१, २.

*'वषट्कर्तुः प्रथमभक्ष' इति श्रुतेः सर्वत्र वषट्कर्ताग्रे भक्षयति । तेन रूपेण प्रकारेणात्रापि होतुः पूर्वत्वमिति कश्चिद् ब्रह्मवाद्याह स्मेत्यर्थः ।

भक्षणे यस्य पूर्वत्वं सर्वैरभ्युपगम्यते ।
दण्डापूपिकया सिद्धा दर्शने तस्य पूर्वता ॥

इति भावः ॥

निगमयति—

॥ तस्माद्वषट्कर्तैव पूर्वोऽवेक्षेताथैनं छन्दोगेभ्यो हरन्ति† ॥

एवं सौम्यम् ॥

अष्टमः खण्डः ।

---

इति सौम्यश्चरुः प्रोक्तोऽथाग्निमारुतमुच्यते ।

तत्र कथामाह—

॥ प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत् ॥

अत्यर्थं चकमे पुत्रीं संभोगाय प्रजापतिः ।
मन्त्रश्चास्ति ‡'पिता यत् स्वां' 'कामं कृण्वान' इत्यपि ॥
§दुहितृत्वात् स्वता सिद्धेत्येवं चेत् पृच्छ तां श्रुतिम् ।
बुध्यस्व प्रतिवक्तारो न कर्तारो वयं त्विति ॥

---

* 'होताग्रे भक्षयेदिति गौतमो भक्षस्य वषट्कारान्वयित्वात्' इति आ० श्रौ० सू० ५-६-२३. 'पात्रे समवेतानां वषट्कर्ता पूर्वो भक्षयति' इति आप० श्रौ० सू० १२-२४-६. † 'अङ्गुष्ठोपकनिष्ठिकाभ्यामाज्येनाक्षिणी अज्य छन्दोगेभ्यः प्रयच्छेत्' इति आ० श्रौ० सू० ५-१९-६. ‡ ऋक्सं० ८-१-२७२, ३. § 'दुहितृशब्दस्य सम्बन्धिशब्दत्वादेव स्वत्वसिद्धौ स्वग्रहणमौपचारिकव्युदासेन साक्षाद् दुहितृत्वप्रतिपत्त्यर्थम् । प्रजापतेः साक्षादेव सर्वपितृत्वात् । तत्र दोषातिशयत्वज्ञापनार्थम्' इति भट्टभास्करः

का नामेयं,

॥ दिवमित्यन्य आहुः ॥

दुहितरमित्येव ॥

॥ उषसमित्यन्ये ॥

अन्ये केचित् ॥

॥ तामृश्यो भूत्वा रोहितं भूतामभ्यैत् ॥

ऋश्यः कृष्णमृगो लोपस्त्वस्य रोहिन्मृगी तथा ।
भू मासौ सोऽभिगतवांस्तां मृगीत्वमुपागताम्* ॥

तदा च,

॥ तं देवा अपश्यन् ॥

तं दुहित्रा सङ्गच्छमानम् ॥

कथम्,

॥ अकृतं वै प्रजापतिः करोतीति ॥

अन्यैरकृतपूर्वं यत्तद्गुह्यं प्रकरोत्ययम् ॥

अथ,

॥ ते तमैच्छन् य एनमारिष्यत्† ॥

एनं प्रजापतिम् आ सम्यक् रिष्यत् । एकारस्याकारः । रिष्येत् हिंस्यात्‡ यस्तमैच्छन् ॥

---

* 'रोहितं लोहितं भूत्वा प्राप्ता । ऋतुमती जातेत्यर्थः' इति सायणः. रोहितं भूतां रोहिद्रूपेणावस्थितां प्राप्तार्तवां मृगीं रोहित् तद्रूपेणावस्थितां तां दुहितरं ऋश्यस्तरुणो मृगो भूत्वा' इति भट्टभास्करः. † आरिष्यत्येतम् इति सायणीयपाठः । तत्रास्य तद्व्याख्या—'आरिष्यति आर्तिं प्रापयितुं क्षमः' इति. ‡ 'आरिष्यत् आर्तिं प्रापयिष्यत् प्रापयेत् । अर्तेराङ्पूर्वादन्तर्णीतण्यर्थाल्लृङ् । यद्वा रिष्यतेस्ताच्छीलिके रूपम्' इति भट्टभास्करः.

*विदुषोऽतिक्रमे दण्डभूयस्त्वं स्मर्यते यतः ॥

॥ ते तमन्योन्यस्मिन्नाविन्दन् ॥

नालभन्तास्य हन्तारं तेऽन्योन्यं वै तदा सुराः ॥

॥ तेषां या एव घोरतमास्तन्व आसंस्ता एकधा समभरन् ॥

शिवघोरात्मिके तन्वौ देवानां भवतः खलु ।
†तस्यैते तनुवौ घोरान्या शिवेत्याद्यभीयते ॥
उग्राः संभृतवन्तस्ते स्वास्तनूस्तु सुरास्तदा ॥

॥ ताः संभृता एष देवोऽभवत् ॥

भवतिरधिष्ठानार्थः ।

‡एष देवोऽभ्यतिष्ठत् तां संभृतां तनुसंहतिम् ॥

॥ तदस्यैतद् भूतवन्नाम ॥

प्रथितं सर्वलोकेषु भूताधिपतिनाम यत् ।
तस्मात्तदस्य देवस्य नाम रुद्रस्य चाभवत् ॥
§यो भूतानामधिपती रुद्रस्तेत्यभिधीयते[1] ॥

---

१. 'रुद्रस्तस्याभिधीयते' ब. क. पाठः.

* तथाच सरस्वतीविलासव्यवहारकाण्डे साहसप्रकरणे—'विष्णुस्तु जातिप्रग्रहेणापि विशेषमाह—उक्तो दण्डः शूद्राद् वैश्यक्षत्रियब्राह्मणानां विदुषां स्तेये द्विगुणोत्तराणि किल्बिषाणि' इति. मनुरपि—'अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषम् । षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य च । ब्राह्मणस्य चतुष्षष्टिः पूर्णं वापि शतं भवेत् । द्विगुणा वा चतुष्षष्टिस्तद्दोषगुणविद्धि सः' ८-३३७, ३३८ इति. † तै० सं० ५-७-३. ‡ 'ननु कथमेष देव इति प्रागेव पुरः स्थितमिव देवं ब्रवीति? उच्यते। सदा पुरःस्थितत्वादेव । तथाहि श्रूयते—'अथोपभग इमं देवं त्र्यम्बकैरजयन्त प्रवेमहीति' (तै० ब्रा० १-४-१०) 'अस्य देवस्य मीढुषो वया' (ऋक्सं० ५-४-७-५) इत्यादि । स एव सर्वैः सर्वदानुभूयते श्रुतिस्मृतिशास्त्रेषु च प्रसिद्धदेवो देवनशीलः निरतिशयदीव्यत्स्वैश्वर्यषट्कसमन्वितो भगवान् रुद्रः स पूर्वोक्तसारसमष्टिशरीर आविरभूत्' इति भट्टभास्करः. § तै० ब्रा० ३-३-२.

॥ भवति वै स योऽस्यैतदेवं नाम वेद ॥

योऽस्यैवं नाम जानाति संपदं स समश्नुते ॥

॥ तं देवा अब्रुवन् ॥

कथम्,

॥ अयं वै प्रजापतिरकृतमकरिमं विध्येति ॥

अकः करोति। विध्य ताडय।

व्यधेः श्यनो लोड(तो) हे*ग्रहिज्यादिसंप्रसारणम्† ॥

॥ स तथेत्यब्रवीत्। स वै वो वरं वृणा इति ॥

स रुद्रः। सः युष्माभिः प्रार्थितः वः युष्मान् वरम् अभिमतं वृणै संभजानि ॥

॥ वृणीष्वेति ॥

तेऽब्रुवन्निति शेषः ॥

॥ स एतमेव वरमवृणीत ॥

किं तत्,

॥ पशूनामाधिपत्यम्। तदस्यैतत् पशुमन्नाम ॥

पशुशब्दयुतं नाम तस्माद्रुद्रस्य खल्वभूत्।
पशुमानिति तन्नाम यद्वा पशुपतिस्त्विति ॥

स्मर्यते हि—‡‘रुद्रः पशुमान् पशुपतिर्वा’ इति ॥

॥ पशुमान् भवति योऽस्यैतदेवं नाम वेद ॥

पशुयुक्तं नाम जानन् समृद्धः पशुभिर्भवेत् ॥

---

* पा० सू० ६-४-१०५. † पा० सू० ६-१-१६. ‡ आ० श्रौ० सू० ४-११-५.

॥ तमभ्यायत्याविध्यत ॥

तमभि तं लक्षीकृत्य ।

आयत्य धनुराकर्णपूर्णमाकृष्य विद्धवान् ।
शरेण *वा ल्यपि यमेर्मलोपे तुकि वै पदम् ॥

॥ स विद्ध ऊर्ध्व उदप्रपत[1] ॥

स विद्धस्तेनोर्ध्वमुखः प्रकर्षेणापतद्दिवि ।
पतेर्लङि तिपो लोप उत्पयोर्मध्यतोऽडभूत् ॥

॥ तमेतं मृग इत्याचक्षते ॥

रोहिण्यार्द्रोभयोर्मध्ये मृगशीर्षेति नाम भम्† ।
ज्योतिश्शास्त्रविदः प्राहुर्मृग इत्येकदेशतः ॥

॥ य उ एव मृगव्याधः स उ एव सः ॥

उ खलु । उ पुनः[2] ।

‡मृगव्याधो यस्तु देवः स एवार्द्रेति नाम भम् ।
§'यदार्द्रानक्षत्रं रुद्रो देवतेति' श्रूयते ॥

॥ या रोहित् सा रोहिणी ॥

प्रजापतिसुता रोहिद्रोहिणी नाम भं त्वभूत् ॥

---

१. 'उदप्रपतत्' इति मुद्रितपाठः. २. 'पुनः आदरात् मृग' क. पाठः.

---

* पा० सू० ६–४–३८. † 'मृगशीर्षं नक्षत्रमित्येके । हिताहितज्ञानरहिता मृगजातिरित्यन्ये', ‡ 'स एव खलु मृगव्याधोऽद्याप्याकाशे कदाचिद् दृश्यते स एव देवः स इत्याचक्षते । लोकप्रसिद्धा मृगव्याधजातिः स एव देवो बहुधा विभक्तात्मा वर्तते इत्यन्ये' इति भट्टभास्करः. § तै० सं० ४-४-१०.

॥ यो एवेषुस्त्रिकाण्डा सो एवेषुस्त्रिकाण्डा ॥

यासयोरुत्वा सह *'आद् गुणः'। काण्डं पर्व।

दृश्यन्त इषुरूपाणि यानि भानि नभस्तले।
त्रिपर्वकः शरः सोऽस्य देवस्येत्यवगम्यताम् ॥

॥ तद्वा इदं प्रजापते रेतः सिक्तमधावत् ॥

इदं जगत्तदा व्याप्नोत् सिक्तं रेतः प्रजापतेः ॥

॥ तत् सरोऽभवत् ॥

लुप्तोपमम्।

तत् प्रजापतिना सिक्तं रेतः सर इवाभवत् ॥

॥ ते देवा अब्रुवन् ॥

कथम्,

॥ मेदं प्रजापते रेतो दुषदिति ॥

†माङि लुङ् दुष वैकृत्ये ‡पुषाद्यङ् माङ्युतेष्व नाद्।
§मा स्म भूद्विकृतं दुष्टमिदं रेतः प्रजापतेः ॥

॥ यदब्रुवन् मेदं प्रजापते रेतो दुषदिति
तन्मादुषमभवत् तन्मादुषस्य मादुषत्वम् ॥

अयं मादुषशब्दस्य प्रवृत्तेर्हेतुरिष्यताम् ॥

---

* पा० सू० ६-१-८७. † पा० सू० ३-३-१७५. ‡ पा० सू० ३-१-५५.
§ 'मा दुष्टपरिणामं लोकगर्हितमभूत्' इति भट्टभास्करः. 'मा दुषद् दुष्टमस्पृश्यं मा भूत्' इति सायणः.

किमिदं मादुषं नाम,

॥ मादुषं हवै नामैतद्यन्मानुषम् ॥

मानुषं त्विति यल्लोके मादुषं तन्निदानतः ॥

कथं,

॥ तन्मादुषं सन्मानुषमित्याचक्षते परोक्षेण ॥

दकारस्य नकारेण पारोक्ष्यमिह साध्यते ॥

किमित्येवम्,

॥ परोक्षप्रिया इव हि देवाः ॥

*रूपनामजपारोक्ष्यं देवानां सुप्रियं किल ।
समामनन्ति ह्यन्ये तु प्रत्यक्षद्विष इत्यपि† ॥

नवमः खण्डः ।

---

प्रजापते रेतसि वै सरोवद्विपुले सति ।
तद्रक्षायै कृतं यत्तु देवैस्तत् संब्रवीत्यथ—

॥ तदग्निना पर्यादधुः ॥

---

* 'यस्माल्लोके देववत् पूज्या उत्तमाः पुरुषाः परोक्षप्रिया इव हि प्रत्यक्षे मातापितृनिर्मिते देवदत्तादिनाम्नि न प्रीतिं कुर्वन्ति किन्तूपाध्यायाचार्यस्वामीत्यादिके मातापित्रादीनामकल्पितत्वेन परोक्षे नाम्नि प्रीतिं कुर्वन्ति तस्मात् परोक्षत्वाय नकारप्रक्षेपो युज्यते' इति सायणः. 'अत्र सर्वमानुषकारणत्वादुपचारेण प्राजापत्यं रेतो मानुषमुच्यते इति वेदितव्यम्' इति भट्टभास्करः. † 'परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः' इति गो० ब्रा० पूर्वभागः १-१.

तत् रेतः परि सर्वतः अग्निना आदधुः। कोष्ठकीकृत्यादहन्* ॥

॥ तन्मरुतोऽधून्वन् ॥

तत् तदा मरुतोऽग्निमधून्वन्। रेतःशोषाय ॥

॥ तदग्निर्न प्राच्यावयत् ॥

च्युतिर्दाहः। नादहत् ॥

॥ तदग्निना वैश्वानरेण पर्यादधुः। तन्मरुतोऽधून्वन्
तदग्निर्वैश्वानरः प्राच्यावयत् ॥

प्रादहत् ॥

॥ तस्य यद्रेतसः प्रथममुददीप्यत तदसावादित्योऽभवत् ॥

वैश्वानराग्निदग्धस्य रेतसो यदभूत् पुरा।
सारवस्तु तत्तदाभूदसौ सूर्यो महाद्युतिः ॥

॥ यद् द्वितीयमासीत् तद् भृगुरभवत् ॥

रेतस इत्येव ॥

यत् सारवस्तु द्वितीयं तद् भृगुर्नाम वै मुनिः ॥

॥ तं वरुणो न्यगृह्णीत ॥

श्रद्धया मम पुत्रोऽयमिति तं वरुणोऽग्रहीत् ॥

॥ तस्मात् स भृगुर्वारुणिः ॥

---

* 'परिवेष्टितवन्तः' इति भट्टभास्करः. 'परितो वेष्टितवन्तः। सरोरूपेणावस्थितस्य रेतसो दाहेन द्रवाभावं निवारयितुं परितोऽग्निं प्रज्वलितवन्त इत्यर्थः' इति सायणः

तस्मात् तथाहि । यजुर्विदो हि समामनन्ति—*'भृगुर्वै वारुणिर्वरुणं पितरम्' इत्यादि ॥

॥ अथ यत् तृतीयमदीदेदिव त आदित्या अभवन् ॥

इव एव । अदीदेत् दीप्तिम(द)भूत् । †'अग्निर्नादीदेचित इद्ध' इति यथा। आदित्या द्वादश ॥

॥ येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन् ॥

येऽत्र चाङ्गारा अङ्गिरःसंज्ञकर्षयः ॥

॥ यदङ्गाराः पुनरवशान्ता उददीप्यन्त तद् बृहस्पतिरभवत् ॥

यत् ये । तत् ते ।

शान्तोद्रिक्ताङ्गारराशिर्बभूवाथ बृहस्पतिः ॥

॥ यानि परिक्षाणान्यासंस्ते कृष्णाः पशवोऽभवन् ॥

तत्र शान्तं कृष्णरूपं परिक्षाणं तु कथ्यते ।
कृष्णवर्णास्तु पशवो वराहमहिषादयः ॥

॥ या लोहिनी मृत्तिका ते रोहिताः ॥

पशवोऽभवन्नित्येव ।

अग्निदाहेन या भूमिर्लोहिनी रक्तवर्णयुक् ।
‡'वर्णादनुदात्तात्त—' इति ङीब्नकारौ । पश्वपेक्षं बहुत्वम् ।
रक्तवर्णास्तु पशवः सिंहशार्दूलकादयः ॥

---

* तै० आ० ५-१५. (Govt. Oriental Library Series, Mysore.)
† ऋक्सं० १-७-३६-२. ‡ पा० सू० ४-१-३९.

॥ अथ यद् भस्मासीत् तत् परुष्यं व्यसर्पद् गौरो गवय ऋश्य उष्ट्रो गर्दभ इति ये चैतेऽरुणाः पशवस्ते च ॥

*परुष्यं आम्रपारुष्यं यद्व्यसर्पत् समन्ततः ।
गौरादिरूपं तदभूद्रक्ताश्चैव वृकादयः ॥

॥ तान् वा एष देवोऽभ्यवदत ॥

सूर्याद्यरुणपश्वन्तान् प्रति देवोऽवदद्वचः ।
प्रजापतिमविध्यद् यो †भासनेति वदेस्तु तङ् ॥

कथम्,

॥ मम वा इदं मम वै वास्तुहमिति‡ ॥

§येन यद्वस्तु निहतं ततो जातं तु तस्य हि ।
चित्तवस्तुजमित्यर्थे(?) वास्तुहं निर्ब्रुवन्ति वै ॥
हीयते यद् वास्तुनि वै तद् वास्तुहमथापरे ।
सूर्याद्यरुणपश्वन्तं ममेदमिति सोऽब्रवीत् ॥

॥ तमेतयर्चा निरवादयन्त यैषा रौद्री शस्यते ॥

तस्मिन्निर्वादं तेऽकुर्वंस्तद् ¶णिचश्चेति णिज् वदेः ॥

एषेत्युक्तामाह—

॥ $आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य सन्दृशो युयोथाः ॥

इतीति शेषः ॥

---

* 'परुष्यं परुषवर्णं स्वार्थिको यत् । परुषे रूपे स्थितं वा' इति भट्टभास्करः. † पा० सू० १-३-४७. ‡ तथाच तै० सं०—'पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत् सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै मह्यमिमानित्यब्रवीत् नवै तस्य त ईशत इत्यब्रवीद् यद्यज्ञवास्तौ हीयते मम वै तदिति तस्माद्यज्ञवास्तु नाभ्यवेत्यं सोऽब्रवीद्यज्ञे माभजाथ ते पशून्नाभिमंस्य इति' (३-१-९) इति. § तथाच मनुः—'यो यच्चयति तस्य तत्' (७-५६) इति. ¶ पा० सू० १-३-७४. $ ऋक्सं० २-७-१६-१.

अर्थस्तु—

हे पितर्मरुतां सुम्नं सुखं तावकमद्वयम् ।
संविदेकरसं तन्मामाप्नुयान्मुक्तिलक्षणम् ॥

अपि च त्वं प्रसन्नः स्या मा नः सूर्यस्य संदृशः ।
सदृक् संदर्शनं तस्माद्यौतिरत्र पृथक्कृतौ ॥

*माङि लुङ् लुङ् सिचो द्वित्वं(?) गुणो निर्वचनं त्विदम् ।
युयोथा मा पृथक्कार्षीर्जीवेमात्रिकलेन्द्रियाः ॥

†अपि चार्वति युद्धादौ वीरोऽस्माकं सुतो रिपून् ।
अभिक्षमेताभिभवेज्जायेमहि च संततौ ॥

नन्वस्य सर्वतातस्य मरुतां पितृता कथम् ।
‡अत्रेतिहासं कथयन्ति विप्रा यथा रुद्रो मरुतां वै पितासीत् ॥

इन्द्रस्य शूरस्य वधाय युक्ता दितिस्तु गर्भं लभते स्म भर्तुः ।
शुश्रूषमाणः किल तामथेन्द्रो मायाविदामग्रणी रन्ध्रदर्शी ॥

प्रकीर्णकेशीं तु दितिं प्रसुप्तामालक्ष्य वज्री ह्यणुमात्ररूपः ।
प्रविश्य कुक्षिं प्रविभेद गर्भं मा रोद रोदेति वदन्नभीक्ष्णम् ॥

भित्त्वा गर्भं निर्गते वै महेन्द्रे प्रबुद्धा सा प्ररुरोदार्तरूपा ।
अत्रान्तरे त्वन्तरिक्षे तदाभूज्जगज्जनित्री ह्यखिलेशपत्नी ॥

वृषेन्द्रमारुह्य गिरीन्द्रपुत्री सुरेन्द्रवृन्दैरभिवन्द्यमाना ।
नन्याहृतैः पङ्कजकुण्डलाद्यैर्हारेण संभूषितसर्वदेहा ॥

संसारवृक्षस्य कुठारकेण शशाङ्कचूडामणिमण्डितेन ।
देवेन सार्धं सुरसिद्धसंघैः सखीगणैश्चाप्यभिवन्द्यमाना[1] ॥

१. 'सेव्यमाना' ब. ङ. पाठः.

* पा० सू० ३-३-१७५. † 'अर्वति पश्वादिवस्तुनि क्षमेथाः सहिष्णुर्भव अस्मदीयानि पश्वादिवस्तूनि मा विनाशयेत्यर्थः' इति सायणः. ‡ 'सर्वानुक्रमणीवृत्तौ वेदार्थदीपिकायामपि पद्यानीमानि दृश्यन्ते । मरुतां रुद्रपुत्रत्वं यद्यपि रामायणादौ न दृश्यतेऽथापि तेषां रुद्रानुगृहीतत्वं ब्रह्मपुराणे गौतमीमाहात्म्ये (अ० ५४) उपलभ्यते.

आर्तध्वनिं साथ दितेर्निशम्य सुराङ्गनानामवलोक्य वृन्दम् ।
दयानिधिः सा च हरं ययाचे मदर्थमेतत् क्रियतां महेश ॥

गर्भं भित्त्वा सप्तधैकैकशस्तु पुनः सप्तभेदतः खण्डराशौ ।
बहूनि खण्डानि तनूनि सन्ति ह्येकैकमेषां भवतां शरीरम् ॥

स्वलंकृतास्तव पुत्रा भवन्तु स्युश्चैव सर्वे तरुणाः सदैव ।
मारोदवादान्मृतियोगतो वा समाख्याता मरुतश्चेति शुभ्राः ॥

सख्यं च तैरस्तु सुरेश्वरस्य सुरैरतुल्यं नियतं महेश ।
न ज्येष्ठता नापि कनिष्ठतैषां वेषो वयश्चैव समानमेषाम् ॥

स्थानं चैषामन्तरिक्षे सदा स्याद्वर्षस्यैते दायका रक्षकाश्च ।
घृणाब्धित्वं व्यक्तमेवं ततः स्यान्मयि प्रीतिश्चातुला वै घृणाब्धे ॥

तथेति देवः प्रतिपन्नवाक्यो देव्या यथोक्तं प्रचकार सर्वम् ।
*अथापरे वर्णयन्तीतिहासं यथा रुद्रो मरुतां वै पितासीत् ॥

इमां हि गोरूपधरां तु पृश्निं वृषोऽथ भूत्वारमयन्महेशः ।
अजीजनन्मरुतः पृश्निपुत्रा रुद्रस्य पुत्रा अपि ते बभूवुः ॥

†रौद्रेषु मन्त्रेष्वथ मारुतेषु कथाद्वयं श्रूयते तत्र तत्र ।
इत्थं तु सिद्धं मरुतां पितृत्वं जगद्गुरोर्देवदेवस्य शम्भोः ॥

अथास्याः शंसने विशेषमाह—

॥ त्वं नो वीरो अर्वति क्षमेथा इति ब्रूयान्नाभि न इति ॥

अभेः स्थाने त्वंपदं स्यात् तस्य स्थाने च था इति ॥

अभिशब्दनिवृत्तेर्गुणमाह—

॥ अनभिमानुको हैष देवः प्रजा भवति ॥

---

* अयमितिहासो मृग्यः. † ऋक्संहितायां १-८-६-१; २-७-१६-१; ४-३-२१-१, २ द्रष्टव्याः.

मनोरुकत्वा हिंसको न प्रजाः प्रति भवेदयम्* ॥

किञ्च,

॥ प्रजायेमहि रुद्रिय प्रजाभिरिति ब्रूयान्न रुद्रेति ॥

किमित्येवमित्याह—

॥ एतस्यैव नाम्नः परिहृत्यै ॥

परिहृतिर्वर्जनम्† ।

न स्वरूपेण रुद्रेति नाम ब्रूयाज्जगद्गुरोः ।
आपस्तम्बः स्मरति हि गुरोर्नामादिवर्जनम्—

‡'व्युपतोदव्युपजापोदामन्त्रणं नामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेद्' इति ।

पारोक्ष्याय रुद्रियेति रुद्रात् स्वार्थे तु घं वदेत् ॥

---

१. 'जापव्यतिहासोदामन्त्रण' मुद्रितधर्मसूत्रपाठः.

---

* 'यदा ह्यभिशब्दः प्रयुज्यते तदाभिशब्दस्याभिमुख्यवृत्तित्वादाभिमुख्यस्य च मननरूपत्वादभि क्षमेत इति पदद्वयस्याभिमन्यमानः क्षमेत इत्यर्थः स्यात् । ततो देवोऽस्य प्रजा अभिमन्येत ममैताः सन्त्विति । ततश्चाभक्षिताः स्युः अस्य प्रजा अभिवृद्धिशीलाश्च । अभिशब्दाभावे तु शंसने नाभिमानुको भवति अभिमननशीलत्वात् न भवति प्रजासु';

† 'एतस्यैव नाम्नः परिहृत्या इति । रुद्रेत्येतस्य नाम्नः शंसनकालेऽनभिधानाय । कोऽस्यापराध इति चेद्, उच्यते । रोदयित्वापि प्रजा रुद्रो रुद्रः स च क्रूरो भवति । रुद्रो वै क्रूर इति च श्रुतिः । करोतीति क्रूरः । यः सति कारणे पितृराजचिकित्सकवद् विनयनं करोत्येव तस्य तादृशप्रवृत्तेर्देवस्येदं नामधेयम् । अत एव न प्रीतिमावहेत् । ततः प्रजा न वर्धेरन् । अतः किमनेनेदृग्व्यसनहेतुना नाम्ना इत्येतत् परिहर्तव्यं मन्यते । ननु रुद्रिय इत्यप्युच्यमाने समान एवायं दोष इति चेत्, अयमभिप्रायः— आ .... .... रुद्रार्थस्य तद्धितार्थं प्रत्युपसर्जनत्वात्र प्राधान्यं, तद्धितार्थस्य प्राधान्येन प्रतिपाद्यत्वात् । तत्र रुद्रभावार्थे त्वस्मिन्नर्थे छान्दसो घप्रत्ययः । यद्वा ये देवेन सृष्टाः सर्वे रुद्रास्तेषां पितृत्वेन भवः, तेषु वा साधुः, तेभ्यो वा हितो रुद्रियः भवाद्यर्थे छान्दसो घः । एतस्यां व्युत्पत्तौ विनेतुर्देवस्य वाचकं यद् रुद्रपदं तदेतस्मिन् पदे वर्जनतयापि न प्रयुज्यते इति तत्परिहारसिद्धिः' इति भट्टभास्करः. ‡ धर्मसूत्रं प्र० १ ख० ८ सू० १५.

दूषयति—

॥ तदु खलु ॥

तदातेपितरित्यस्या इद्रायुक्तं तु शंसनम् ।
[*]न कुर्यात् खलु नेत्यर्थ उत्रारुचिसूचकः ॥

किं तर्हि,

॥ [†]शं नः करतीत्येव शंसेत् ॥

एवेति नित्यार्थः । सूच्यते हि—[‡]'वैश्वानराय पृथुपाजसे शंनः करत्यर्वते प्रत्यक्षम' इति ॥

स्तौति—

॥ शमिति प्रतिपद्यते ॥

अस्यामृचि शमित्यारभते ॥

तच;

॥ सर्वस्मा एव शान्त्यै ॥

स्यात् ॥

॥ नृभ्यो नारिभ्यो गव इति ॥

एत ईत् (?) ॥

॥ पुमांसो वै नरः ॥

नृशब्दाज्जसि [§]'ऋतो ङि—' इति गुणः ॥

---

* 'तदु खलु तत्रैव' इति सायणः. 'तत्र खलु' इति भट्टभास्करः.
† ऋक्सं० १-३-२७-१. ‡ आ० श्रौ० सू० ५-२०-६. § पा० सू० ७-३-११०.

॥ स्त्रियो नार्यः ॥

'नृनरयोर्वृद्धिश्च' इति *शार्ङ्गरवादिङीन्[1] ॥

॥ सर्वस्मा एव शान्त्यै ॥

इयमृक् स्यात् । अर्थस्तु—

शन्नः करोतु गोमेषमेषीनारीनरस्य तु ।
अश्वस्य +सुगं भोगं पुष्टिं चैव महेश्वरः ॥

इति ॥

॥ सोऽनिरुक्ता रौद्री शान्ता ॥

सा तु पुनः । †अनिरुक्ता । न ‡'ओत्' इति प्रगृह्यत्वम् । अप्रकाशित-देवताभिधाना । रौद्री वस्तुतः । §'कद्रुद्राय नव रौद्रम्' इति सर्वानुक्रमणी । शान्ता सुखकरी ॥

सा च,

॥ सर्वायुः सर्वायुत्वाय सर्वमायुरेति य एवं वेद ॥

¶उक्तार्थानि ॥

---

१. 'शार्ङ्गरवायणो ङीन्' ग. ड. पाठः.

---

* पा० सू० ४-१-७३. + 'अत्र सा (उ) सो इति निपातानिपातयोरेकादेशस्य पूर्वं प्रग्र-न्तवद्भावेनानिपातत्वात् सोऽनिरुक्ता इत्यत्र एङः पदान्तादति इति पूर्वरूपत्वम् । कथमवगम्यते इयं रौद्रीति । अत एव वचनात् इति चेत् कस्मात् पुनः कारणादेवमृषिराह । अयमभिप्रायः— शङ्करोतीत्याभ्यां पदाभ्यां शङ्करोऽस्या देवतेति गम्यत एव । तेनैवाभिप्रायेण खल्वस्या ऋचो वैशिष्ट्यं प्रतिपादयितुं शमिति प्रतिपद्यत इति ब्रवीति । नहि शंशब्दमात्रवत्त्वमस्या वैशिष्ट्य-हेतुः शङ्करणशालिदेवोपक्रमत्वशीलत्वमेव । तादृशश्च देवो रुद्र एवेति रौद्रीयं भवत्यनिरुक्ता' इति भट्टभास्करः. ‡ पा० सू० १-१-१५. § म० १ सू० ४३. ¶ page 247.

॥ सो गायत्री ॥

*सा उ पुनः ॥

॥ ब्रह्म वै गायत्री ब्रह्मणैवैनं तन्नमस्यति ॥

तत् तया । एनं रुद्रम् । †'नमसः पूजायाम्' इति क्यच् ।

इत्यमातेपितररितिस्थाने शश्वःकरत्यभूत् ॥

दशमः खण्डः ।

---

॥ वैश्वानरीयेणाग्निमारुतं प्रतिपद्यते ॥

आग्निमारुतशस्त्रं तु सूक्तेनारभते खलु ।
‡वैश्वानराय पृथ्वेकादशर्चेन निविद्युजा ॥

स्तौति—

॥ वैश्वानरो वा एतद् रेतः सिक्तं प्राच्यावयत् ॥

अदहत् ॥

॥ तस्माद् वैश्वानरीयेणाग्निमारुतं प्रतिपद्यते ॥

वैश्वानराद् गहादिछः§ ॥

॥ अनवानं प्रथम ऋक् शंस्तव्या ॥

¶'ऋत्यकः' । सूच्यते हि—$'तस्यायां पच्छ ऋगावानं पच्छः शस्या चेत् । अर्धर्चश इतराम्' इति ॥

---

* 'उकारस्तुशब्दस्यार्थे' इति भट्टभास्करः. † पा० सू० वा० ३-१-१९. ‡ ऋक्सं० २-८-२०-१. § पा० सू० ४-२-१३८. ¶ पा० सू० ६-१-१२८. $ आ० श्रौ० सू० ५-२०-२; ४.

स्तौति—

॥ अग्नीन् वा एषोऽर्चीष्यशान्तान् प्रसीदन्नेति य आग्निमारुतं शंसति ॥

अर्चींषि ज्योतिर्भूतान् अशान्तान् प्रज्वलितान् प्रसीदन् प्रशमयन् एति निर्वहति ॥

॥ प्राणेनैव तदग्नींस्तरति ॥

तत् तेनानवान्येन प्राणेन प्रा(पण१णन)बलेन तरत्यतिक्रामति ॥

किञ्च,

॥ अधीयन्नुपहन्यादन्यं विवक्तारमिच्छेत् ॥

इहेच्छार्थयोरिति* शतृ लुङ् च सम्भावने हनः।

उपघातो भ्रेषः। अन्यं †वि सुष्ठु वक्तारं स्वाध्यायदक्षमिच्छेत्। भ्रेषशान्तये ॥

॥ तमेव तत् सेतुं कृत्वा तरति ॥

तत् तं सेतुं कृत्वाग्निमारुतार्णवं तरति ॥

॥ तस्मादाग्निमारुते न व्युच्यम् ॥

तस्मात् ङ्यर्थे ङसिः। तस्मिन्नाग्निमारुते शस्त्रे वि सुष्ठु वचनं न कार्यम्‡। वचेर्भावे क्यप् ॥

---

* पा० सू० ३-३-१३०. † 'विवक्तारं महते स्थापयितारं विद्वद्वादिनमिच्छेत्। न तु स्वयं विब्रूयात् उपहति न ख्यापयेत्' इति भट्टभास्करः. ‡ 'न व्युच्यं न पश्चाद् विवक्तव्यम्' इति सायणः.

निगमयति—

॥ एष्टव्यो विवक्ता ॥

एष्टव्यः श्रद्धेयः । वि सुष्ठु ॥

॥ मारुतं शंसति ॥

*प्रत्यक्षतो निविद्धानं शंसेत् षळृचमञ्जसा ॥

स्तौति—

॥ मरुतो हवा एतद् रेतः सिक्तं धून्वन्तः प्राच्यावयन् ॥

अदहन् ॥

॥ तस्मान्मारुतं शंसति ।

†यज्ञायज्ञा वो अग्नये ‡देवो

वो द्रविणोदा इति मध्ये योनिं चानुरूपं च शंसति ॥

यज्ञा योनिर्य्रृचतृचो देवादिरनुरूपकः ।

अयं त्र्यृचतृचो मध्ये शस्त्रस्यास्येति गृह्यताम् ॥

स्तौति—

॥ तद्यन्मध्ये योनिं चानुरूपं च शंसति तस्मान्मध्ये योनिर्धृता ॥

तत् तत्र । यत् यथा । तस्मात् तथाहि ।

स्त्रीदेहस्य यथा मध्ये धृता योनिस्तथा त्विह ।

योनिं चैवानुरूपं च शंसतीतीह गृह्यताम् ॥

---

* ऋक्सं० १-६-१३-१. † ऋक्सं० ४-८-१-१. ‡ ऋक्सं० ५-२-२२-५. 'यज्ञायज्ञा वो अग्नये देवो वो द्रविणोदा इति प्रगाथौ स्तोत्रियानुरूपौ' इति आ० श्रौ० सू० ५-२०-६.

तत्र च,

॥ यद् द्वे सूक्ते शस्त्वा शंसति प्रतिष्ठयोरेव तदुपरिष्टात् प्रजननं दधाति ॥

उ पुनः। प्रतिष्ठयोः पादयोः। शंसति यत् दधाति तत् ॥

॥ प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद ॥

*उक्तार्थम् ॥

एकादशः खण्डः।

---

॥ जातवेदस्यं शंसति ॥

शंसेत् सूक्तं निविद्धानमष्टर्चं तु †प्रतव्यसीम्।
‡भवे छन्दांसि यत् स्तुत्यो जातवेदा यतोऽत्र हि ॥
जातवेदःशब्दमथ निर्वक्तुं कथ्यते कथा—

॥ प्रजापतिः प्रजा असृजत ॥

असृजत् सृष्टवान् ॥

॥ ताः सृष्टाः पराच्य एवायन् ॥

पराच्यस्तु पराङ्मुख्यो जग्मुः सृष्टाः प्रजास्तु ताः[1] ॥

॥ न व्यावर्तन्त ॥

न च पुनरागताः ॥

---

१. 'प्रजास्तताः' ग. ङ. पाठः.

---

* page 13. † ऋक्सं० २-२-१२-१. ‡ पा० गृ० ४-४-११०.
'देवतार्थे छान्दसो यत्' इति भट्टभास्करः.

स तु,

॥ ता अग्निना पर्यगच्छत् ॥

सर्वतोऽभिभूतवान् ॥

॥ ता अग्निमुपावर्तन्त ॥

अग्नेस्ताश्चाभवन् ॥

॥ तमेवाद्याप्युपावृत्ताः ॥

शीतक्षुदुपघातार्थं सेवन्तेऽद्यापि तं प्रजाः ॥

॥ सोऽब्रवीज्जाता वै प्रजा अनेनाविदमिति ॥

सः प्रजापतिः। अनेनाग्निना। अविदं (तदीत्वङ्? लृदित्वादङ्) । लब्धवान् ॥

सः,

• ॥ यदब्रवीज्जाता वै प्रजा अनेनाविदमिति
तज्जातवेदस्यमभवत् । तज्जातवेदसो जातवेदस्त्वम् ॥

तत् ततः ।

शब्दप्रवृत्तेर्हेतुः स्यादेष वै जातवेदसः ॥

॥ ता अग्निना परिगता निरुद्धाः शोचन्त्यो
दीध्यत्योऽतिष्ठन् ॥

परिगता अभिभूताः । निरुद्धाः व्याहतस्वैरगतिकाः । शोचन्त्यः शोकं कुर्वन्त्यः *दीध्यन्त्यः विचेष्टमानाः । अग्नावाहितकी(ट)वदतिष्ठन् ॥

---

* 'दीध्यन्त्यः सर्वतो दीप्यमानाः' इति भट्टभास्करः

अथ सः,

॥ ता अद्भिरभ्यषिञ्चत् ॥

तासामुपरि जलं सिक्तवान् ॥

॥ तस्मादुपरिष्टाज्जातवेदस्यस्यापोहिष्ठीयं शंसति ॥

मतौ तृचे छश्छान्दसः* । तस्मात् तथाहि ॥

†आपोहिष्ठतृचं शंसेज्जातवेदस्यतः परम् ॥

॥ तस्मात् तच्छमयतेव शंस्तव्यम् ॥

शमयता शान्तिं कुर्वतेव । सूच्यते हि—‡'आपोहिष्ठेति तिस्रो वियतमप उपस्पृशन्' इति । वियतं विलम्बितमित्यर्थः ॥

अथ सः,

॥ ता अद्भिरभिषिच्य निजा स्यैवामन्यत ॥

स्या ताः । जसः सुः । थाः (?) । ताः,

शीतीकृत्य जले बैता आत्मीया इत्यमन्यत§ ।

एव अनन्तरम् ॥

॥ तासु वा अहिना बुध्न्येन परोक्षात् तेजोऽदधात् ॥

---

* 'मतौ छः सूक्तसाम्नोः छप्रत्ययः' इति भट्टभास्करः. † कृत्स्नं० ७-६-५-१. 'आपो हि ष्ठा मयोभुव इत्यभिक्रामापो विषिञ्चन् प्रतिगृह्णाति' इति आप० श्रौ० सू० १३-१५-१३. ‡ आ० श्रौ० सू० ५-२०-६. § 'निजास्य नितरां शाययित्वा हिंसित्वैव शैत्यातिशयेन पीडयित्वैवामन्यत पीडिता मयैताः प्रतीकारः सर्वथा कर्तव्य इत्यमन्यत। आत्मीयाः प्रजाः पीडयित्वा यथा मन्तव्यं तथामन्यत । स च प्रकारः प्रतीकारविधानकामनैवेति भावः । शसु ताडने, चौरादिकण्यन्ताल्ल्यप् । यद्वा ताः शीतार्ताः प्रजा अनुजिघृक्षया तां तां प्रजां प्रत्येकममन्यत । स्या एषा प्रजा निजा मदीयैव इयं च मदीयैव इति । तस्मादार्तैः प्रतीकारः कर्तव्यः इत्यमन्यत' इति भट्टभास्करः.

तासु प्रजासु। परोक्षात्। अमो ङसिः, अप्रत्यक्षम्। *'उत नोऽहिर्बुध्न्य' इत्यृचा। अहिना बुध्न्येन तेजः स्थापितवान् ॥

कोऽयमहिर्बुध्न्यो नाम,

॥ एष ह वा अहिर्बुध्न्यो यदग्निर्गार्हपत्यः ॥

यत् यः ॥

॥ अग्निनैवासु तद् गार्हपत्येन परोक्षात् तेजो दधाति ॥

आसु प्रजासु ॥

॥ तस्मादाहुर्जुह्वदेवाजुह्वतो वसीयानिति ॥

तथा ह्याहुर्महात्मानो मुख्यो जुह्वदजुह्वतः।

वसोरीयसुन्। †'नाभ्यस्ताच्छतुः'। ‡'हुश्नुवोः—' इति यण्।

अत्राग्निपरिचर्योक्ता तेजःसम्पत्तिकारिणी ॥

द्वादशः खण्डः।

---

॥ देवानां पत्नीः शंसति ॥

§देवानां पत्नीरुश आ इति शंसेदृचावथ ॥

अनूचीः(?)। ताश्च,

॥ अनूचीरग्निं गृहपतिम् ॥

अनूचीरनुगन्त्रीः। अग्निम् अग्नेः 'उत न' इत्यृगुक्तस्य। शंसतीत्येव ॥

---

* ऋक्सं० ४-८-१०-४. † पा० सू० ७-१-७८. ‡ पा० सू० ६-४-८७.
§ ऋक्सं० ४-२-२८-७, ८.

स्तौति—

॥ तस्मादनूची पत्नी गार्हपत्यमास्ते ॥

तस्मात् तथाहि ।

पश्चात्तु गार्हपत्यस्य पत्न्युपास्ते सदा खलु ।

गार्हपत्यमिति ङसोऽम् ॥

॥ तदाहू राकां पूर्वां शंसेज्जाम्यै वै पूर्वपेयमिति ॥

वदन्त इति शेषः ॥

देवपत्नीव्यृचात् पूर्वं केचिद्राकाव्यृचं विदुः ।
जाम्यै स्वस्रे पूर्वपानं खलु राका सुरस्वसा ॥
भर्तारं भोजयित्वाग्रे तत्स्वसारमथ स्वयम् ।
भुञ्जाना दृश्यते पत्नी तद्वदत्रेति तेऽवदन् ॥

॥ तत्तन्नादृत्यम् । देवानामेव पत्नीः पूर्वाः शंसेत् ॥

अमः शस् । पूर्वम् (?) ।

अहिर्बुध्न्यात् परं शंसेद्देवपत्नीव्यृचं पुनः ॥

कुतः,

॥ एष ह वा एतत् पत्नीषु रेतो दधाति यदग्निर्गार्हपत्यः ॥

यत् यः । एतत् एतर्हि ॥

॥ अग्निनैवासु तद् गार्हपत्येन पत्नीषु प्रत्यक्षाद्रेतो दधाति ॥

तत् तत्र । प्रत्यक्षात् प्रत्यक्षम् । आसु पत्नीषु ॥

॥ प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद ॥

सः ॥

उक्तस्य लोकाचारस्य प्रत्याचारं ब्रवीत्यथ—

॥ तस्मात् समानोदर्या स्वसान्योदर्यायै जायाया अनुजीविनी जीवति ॥

तस्मात् तथाहि । इत्सोऽर्द्वयम् । अन्योदर्या भ्रातृजाया । **समानोदर्या** भगिनी । अनुजीविनी अनुसृत्य भुञ्जाना जीवति वर्तते ।

स्वभ्रातृभार्यानुगुण्ये स्वसा भ्रातृगृहे वसेत् ॥

अथ,

॥ राकां शंसति ॥

*राकामहमृचं शंसेद् देवपत्नीऋचात् परम् ॥

स्तौति—

॥ राका ह वा एतां पुरुषस्य सेवनीं सीव्यति यैषा शिश्नेऽधि ॥

विततां सिरेति शेषः । अधि उपरि ।

सिरा सा सेवनी नाम गुदान्तवलयादिका ।
आ शिश्नाद्विततां ह्यन्तः प्रनाळी रेतसस्तु या ॥
राका देवी सिरां तां वै सम्यक् ‡धारयति स्फुटम् ॥

॥ पुमांसोऽस्य पुत्रा जायन्ते य एवं वेद ॥

अस्य वेदितुः ॥

॥ पावीरवीं शंसति ॥

राकामृचात् परं होता शंसेत् †पावीरवीत्यृचम् ॥

---

* ऋक्सं० २-८-१५-४. ‡ 'सीव्यति दृढबद्धां करोति' इति सायणः. 'सन्तनोति' इति भट्टभास्करः. † ऋक्सं० ४-८-६-२.

॥ वाग्वै सरस्वती पावीरवी । वाच्येव तद्वाचं दधाति ॥

तत् तया वाक्समृद्धिं तामुपर्युपरि कारयेत् ॥

॥ तदाहुर्यामीं पूर्वां शंसे३त् पित्र्या३मिति ॥

विचारे प्लुतद्वयम् ।

पावीरव्याः परं यामी किं पित्र्या वा भवेदिति ॥

सिद्धान्तयति—

॥ यामीमेव पूर्वां शंसेत् । *इमं यम प्रस्तरमाहि
सीदेति राज्ञो वै पूर्वपेयम् ॥

याम्याः शंसनमग्रे स्यात् पितॄणां हीश्वरो यमः† ।
राजा हि विषयस्थेभ्यः सर्वं तु लभतेऽग्रतः ॥
इमं यमेति याम्येषा यस्यामस्ति वहन्त्विति ॥

॥ तस्माद्यामीमेव पूर्वां शंसेत् ।
‡मातली कव्यैर्यमो अङ्गिरोभिरिति काव्यानामनूचीं शंसति ॥

अनूचीमनुगन्त्रीं तु काव्यानां प्रतिपादिकाम् ॥

के पुनः काव्या नामेत्याह—

॥ अवरेणैव वै देवान् काव्याः परेणैव पितॄन् ॥

§एनव्योगे द्वितीये द्वे अवरेण परेण च ।
पितृभ्योऽभ्यधिकाः ¶काव्या न्यूना देवेभ्य एव च ॥

* ऋक्सं० ७-६-१४-४. † तथाच तै० सं० 'यमः पितॄणां राजा' (२-६-६) इति. ‡ ऋक्सं० ७-६-१४-३. § पा० सू० २-३-३१. ¶ 'पितॄणां मध्ये श्रेष्ठभूताः काव्या नाम' इति भट्टभास्करः. 'काव्या देवानां स्तोतारः केचिदभ्यमातातिविशेषाः' इति सायणः.

॥ तस्मात् काव्यानामनूचीं शंसति ॥

पितृभ्यः पूर्वमिति शेषः ॥

अथ,

॥ *उदीरतामवर उत्परास इति पित्र्याः शंसति ॥

इतिराद्यर्थः ।

उदीरतामाहंपितॄनिदं तिस्रो वदेदृचः ॥

॥ उन्मध्यमाः पितरः सोम्यास इति ॥

अस्ति ॥

व्याचष्टे—

॥ ये चैवावमा ये च परमा ये च मध्यमास्तान्
सर्वाननन्तरायं प्रीणाति ॥

अवरोऽवमः प्रथमः । परः परमः श्रेष्ठः । मध्यलोकस्थो मध्यमः । अनन्तरायं निरवशेषम् ॥

॥ †आहं पितॄन् सुविदत्राँ अवित्सीति द्वितीयां शंसति ॥

अत्रास्ति—

॥ बर्हिषदो ये स्वधया सुतस्येति । एतद्ध वा एषां
प्रियं धाम यद्बर्हिषद इति ॥

---

* ऋक्सं० ७-६-१७-१. † ऋक्सं० ७-६-१७-२.

बर्हिपदपदे यद् बर्हिरिति तद्धाम स्थानं प्रियम् ॥

ततश्च,

॥ प्रियेणैवैनाँस्तद्धाम्ना समर्धयति ॥

तत् तेन बर्हिरुच्चारणेन एनान् पितॄन् समृद्धान् करोति ॥

॥ प्रियेण धाम्ना समृध्यते य एवं वेद ॥

तिपस्त । ओर्यङ्क । कब्रोति । स वेदिता ॥

॥ *इदं पितृभ्यः ॥

इति तृतीयां शंसेदिति शेषः ॥

अत्रास्ति—

॥ नमो अस्त्वद्येति ॥

ततश्च,

॥ नमस्कारवतीमन्ततः शंसति । तस्मादन्ततः पितृभ्यो नमस्क्रियते ॥

तस्मात् तथाहि । पिण्डपितृयज्ञादौ †'नमो वः पितर' इत्यादिभिः ॥

॥ तदाहुर्व्याहावं पित्र्याः शंसे३त् । अव्याहावा३मिति ॥

विचारे प्लुतौ । वि नाना ।

शोंसावोमिति चाहावास्तिसृणां त्रय आदितः ।
स्युर्वादौ तिसृणामेकः स्यादित्यत्र विचार्यते ॥

---

* ऋक्सं० ७-६-१७-२. † 'अथैनानुपतिष्ठेत नमो वः पितर इषे—' इति आ० श्रौ० सू० २-७-७. 'नमो वः पितरो रसायेति नमस्कारान् जपन्ति' इति आप० श्रौ० सू० १३-१२-१०.

सिद्धान्तयति—

॥ व्याहावमेव शंसेत् ॥

सूत्र्यते हि—*'प्रतिप्रतीकमाह्वानम्' इति ॥

कुतः,

॥ असंस्थितं वै पितृयज्ञस्य साधु ॥

भावे क्तः। असंस्थानं समाप्तिरहितत्वम्। साधु मङ्गलम्† ॥

स्पष्टयति—

॥ असंस्थितं वा एष पितृयज्ञं संस्थापयति यो व्याहावं शंसति ॥

अनेकाहावविवचनाद् बह्वारम्भत्वसूचनात्।
सं सम्यक् स्थापयति वै निदधात्येव[1] शंसकः ॥

निगमयति—

॥ तस्माद् व्याहावमेव शंस्तव्यम् ॥

त्रयोदशः खण्डः।

---

1. 'निदधात्येव' घ. पाठः.

---

* आ० श्रौ० सू० ५-२०-६. † 'पितृयज्ञस्य सम्बन्धि यदङ्गमसंस्थितमेव वर्ततेऽसमाप्तं तिष्ठति तदङ्गं साधु समाप्तं कर्तव्यम्' इति सायणः.

॥ *स्वादुष्किलायं मधुमाँ उतायमितीन्द्रस्यैन्द्रीरनुपानीयाः शंसति ॥

पानं परं भोजनाद् यदनुपानं तु यासु वै ।
इन्द्रस्य स्तूयते ताश्च चतस्रः स्वादुरादिकाः ।
शंसेदैन्द्रीरिन्द्रसोमसंश्लेषमद्वादिनीः ।
पिबतेः करणेऽनीयरिन्द्रात् तस्येदमण्[†] तु ङीप् ॥

सूत्र्यते हि—[‡]'स्वादुष्किलायमिति चतस्रः' इति ॥

स्पष्टयति—

॥ एताभिर्वा इन्द्रस्तृतीयसवनमन्वपिबत् तदनुपानीयानामनुपानीयात्वम् ॥

किञ्च,

॥ माद्यन्तीव वै तर्हि देवता यदेता होता शंसति ॥

यत् यदा । तर्हि तदानीम् । माद्यन्ति हृष्यन्ति ॥

॥ तस्मादेतासु मद्वत् प्रतिगीर्यम् ॥

मद्वत् मदिधातुमत् । सूत्र्यते हि—[‡]'मदामो दैव मोदामो दैवोमित्यासां प्रतिगरौ' इति । प्रतिगीर्यम् । गॄ शब्दे ण्यति आत ईत् ।

शंसितुः प्रोत्साहनं तु प्रोक्तं प्रतिगृणातिना ॥

---

* ऋक्सं० ४-५-३०-१. † पा० सू० ४-३-१२०. ‡ आ० श्रौ० सू० ५-२०-६. 'स्वादुष्किलायं मधुमाँ उतायमित्यभिज्ञायोभयतो मोदं प्रतिगृह्णाति मदा मोद इव मोदा मोद दैवेत्या आह्वावाद' इति आप० श्रौ० सू० १३-१५-१४.

॥ ययोरोजसा स्कभिता रजांसीति वैष्णुवारुणीमृचं शंसति ॥

छन्दस्त्वाम्नानक्त्राभूदर्णि वृद्धिः पदद्वये।
खैलिकी सूत्रपठिता* ययोरित्यृग् भवेदियम् ॥

स्तौति—

॥ विष्णुर्वै यज्ञस्य दुरिष्टं पाति वरुणः स्विष्टम् ॥

पाति रक्षति दुर्योगं विष्णुस्तं वरुणः शुभम् ॥

॥ तयोरुभयोरेव शान्त्यै ॥

शान्तिः प्रीतिः। तयोर्विष्णुवरुणयोः ॥

॥ †विष्णोर्नु कं वीर्याणि प्रवोचमिति वैष्णवीं शंसति ॥

स्तौति—

॥ यथा वै मत्यमेवं यज्ञस्य विष्णुः ॥

कृष्टभूमेः साम्यकरं मत्यं‡ कृषिविदां मतम्।
यथा क्षेत्रस्य तद् विष्णुस्तथा यज्ञस्य साधकः ॥

स्पष्टयति—

॥ तद्यथा दुष्कृष्टं दुर्मती कृतं सुकृष्टं सुमती कृतं कुर्वन्नियादेवमेवैतद्यज्ञस्य दुष्टुतं दुश्शस्तं सुष्टुतं सुशस्तं कुर्वन्नेति यदेतां होता शंसति ॥

---

* आ० श्रौ० सू० ५-२०-६. † ऋक्सं० २-२-२४-१. ‡ 'मतौ बुद्धौ सम्यक्त्वेन प्रतिभातं कार्यं मत्यम्। अयं दृष्टान्तः। विष्णुर्दार्ष्टान्तिकः। यथा मत्यं कार्यं लोके फलपर्यवसायि भवति तथा विष्णुरपि फलपर्यवसायीत्यर्थः' इति सायणः

टा पूर्वसवर्णः। दुर्मत्या, सुमत्या। कुर्वन्। दस्य नः। इयात् गच्छेत्। तत् मत्यम्। निर्वहेत्*। यत् यः एतत् एषः होता। अर्थस्तु—

विष्णोर्व्यापनशीलस्य नु क्षिप्रं कं सुखं यथा।
वीर्याणि वीरकर्माणि वोचं वक्ष्यामि यः पुरा॥
भूस्वर्द्युसंज्ञकान् लोकान् विशेषेण ममेऽकरोत्।
†लोका रजस्सुभं स्थानं पृथिवीं अणुसंश्रये॥
योऽस्थापयत् स्वर्गलोकं स्थापनार्थः स्कभिः परम्।
सह तिष्ठति यत्रेति सहस्य स्थे सधः‡ कृतः॥
उरुगायो महाकीर्त्तिः परिच्छिन्दंस्त्रिधा पदा।
अस्य विष्णोस्तु वीर्याणि प्रवक्ष्यामि सुखं त्विति॥

॥ §तन्तुं तन्वन् रजसो भानुमन्विहीति प्राजापत्यां शंसति॥

अत्र,

॥ प्रजा वै तन्तुः। प्रजामेवास्मा एतत् संतनोति॥

एतदेतया। अस्मै अस्य यष्टुः॥

॥ ज्योतिष्मतः पथो रक्ष धिया कृतानिति। देवयाना वै ज्योतिष्मन्तः पन्थानः। तानेवास्मा एतद्वितनोति॥

तान् पथः। एतदेतर्हि॥

---

* 'यथा लोके दुष्कृष्टं कर्षकैः समस्थाने दोषयुक्तं यथा भवति तथा कर्षणं कृतं, यत्किंचिद् राजकार्यममात्यैर्दुर्मतीकृतं दुष्टं मतमन्यथा चिन्तितं, पूर्वं तत्कार्यमदुर्मतं सद् पश्चाद् बुद्धिप्रमादाद् दुर्मतं संपादितं, तत्र कश्चिद् बुद्धिमान् कर्षकः कृष्टस्थाने दुष्टस्य तृणादेरपनयनेन सुकृष्टं कुर्वन्नियात् कर्षकस्य पृष्ठतो गच्छेद्, राजकार्यमपि दुर्बुद्धिनामात्येन दुर्मतीकृतं कश्चित् सुबुद्धिरमात्यः सुमतीकुर्वन् गच्छेत्। यथैतदुभयं लोके एवमेव' इति सायणः। † रजःशब्दो लोकवाची। तथाच यास्कः— 'लोका रजांस्युच्यन्ते' इति (निरु० ४-१९). ‡ पा० सू० ६-३-९६. § ऋक्सं० ८-१-१४-१.

॥ अतुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनमिति । एवैनं तन्मनोः प्रजया संतनोति ॥

म(नवः ?नोः) सम्बन्धिन्या प्रजया सन्तनोत्येव । एनं यजमानम् । होता ॥

॥ प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद ॥

सः ॥

॥ *एवा न इन्द्रो मघवा विरप्शीत्युत्तमया परिदधाति ॥

ऐन्द्रीमुपस्पर्शनाय भूम्यां योजयतीह तु ॥

॥ इयं वा इन्द्रो मघवा विरप्शी ॥

विविधं रपणं विरप् । मत्वर्थे शः । †अत इनिः । ‡विरप्शी स्तोत्रकार्युक्तः । इन्द्र ईश्वरः । मघवा अन्नवा(न्) ॥

॥ करत् सत्या चर्षणीधृदनर्वेतीयं वै सत्या चर्षणीधृदनर्वा ॥

चर्षणीनां मनुष्यजातीनां धारयित्री । अनर्वा अगन्त्री§ ॥

॥ त्वं राजा जनुषां धेह्यस्मे इति । इयं वै राजा जनुषाम् ॥

¶जनेरुसिः । जनुर्जातः । जातानाम् ॥

॥ अधि श्रवो माहिनं यज्जरित्र इति । इयं वै माहिनं यज्ञश्रवः ॥

---

* ऋक्सं० ३-५-२४-५. † पा० सू० ५-२-११५. ‡ 'विरप्शी रभ राभस्ये इत्यस्माद्धातोरुत्पन्नोऽयं शब्दः । विशेषेण राभस्यवान् सर्वदोयुक इत्यर्थः', § 'अनर्वा इयं परित्यज्य गागभूमावुपविष्टत्वादश्वरहितः' इति सायणः. ¶ उणादिसू० २-११५.

माहिनं महत्त्वम् । महिम्नो महदर्थात् स्वार्थेऽण् । *'इनण्यनपत्ये' । श्रवः कीर्त्तिः ॥

॥ यजमानो जरिता ॥

जीर्यतेः स्तुत्यर्थात् तृचि इट् ॥

॥ यजमानायैवैतामाशिषमाशास्ते ॥

आशास्त एव ॥

॥ तदुपस्पृशन् भूमिं परिदध्यात्† ॥

त्रिर्वदेत् ॥

॥ तद्यस्यामेव यज्ञं संभरति तस्यामेवैनं तदन्ततः प्रतिष्ठापयति ॥

‡उक्तार्थम् ॥

॥ §अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिरित्याग्निमारुतमुक्थं शस्त्वाग्निमारुत्या यजति ॥

आग्निमारुतशस्त्रान्ते यजेदग्ने मरुत्स्विति¶ ॥

॥ यथाभागं तद् देवताः प्रीणाति प्रीणाति ॥

‖उक्तार्थम् । द्विरुक्तिरुक्तार्था$ ॥

---

* पा० सू० ६-४-१६४. † 'एवा न इन्द्रो मघवा विरप्शीति परिदध्याद् भूमिमुपस्पृशन्' इति आ० श्रौ० सू० ५-२०-६. ‡ page 548. § ऋक्सं० ४-३-२५-८. ¶ 'अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिरिति याज्या' इति आ० श्रौ० सू० ५-२०-८. ‖ page 425. $ page 44.

इति त्रयोदशाध्यायैरग्निष्टोमाख्यसंस्थकः ।
ज्योतिष्टोमो वर्णितोऽत्र यस्यान्ते ह्याग्निमारुतम् ॥

चतुर्दशः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ
सुखप्रदायां त्रयोदशोऽध्यायः[1] ॥

---

## अथ चतुर्दशोऽध्यायः ।

अथ त्रयोदशाध्यायैर्यस्य रूपं प्रवर्णितम् ।
संस्तोतुमग्निष्टोमं तमितिहासं ब्रवीति ह—

॥ देवा वा असुरैर्युद्धमुपप्रायन् विजयाय ॥

सह कर्तुमिति शेषः । वै पुरा ॥

॥ तानग्निर्नान्वकामयतैतुम् ॥

तान् युयुत्सून् सुरानग्निर्नैच्छदन्वेतुमञ्जसा ॥

॥ तं देवा अब्रुवन् ॥

कथम्,

॥ अपि त्वमेह्यस्माकं वै त्वमेकोऽसीति ॥

---

१. 'इति ब्राह्मणवृत्तौ त्रयोदशोऽध्यायः' ख, ङ, पाठः.

त्वमप्यस्माकमेकोऽसि तदेहास्मत्समीपतः ॥

॥ स नास्तुतोऽन्वेष्यामीत्यब्रवीत् । स्तुत नु मेति ॥

सोऽब्रवीत् । स्तुत लोट् । नु क्षिप्रम् ।

अन्वेष्यामि नास्तुतोऽहं यदीच्छा स्तुत मां द्रुतम् ॥

॥ तथेति तं ते समुत्क्रम्योपनिवृत्यास्तुवन् ॥

उत्क्रम उत्थानम् । उपनिवृत्तिराभिमुख्यम् । तमग्निम् ॥

॥ तान् स्तुतोऽनुप्रैत् ॥

तान् देवान् । अनुप्रैदन्वगच्छत् ॥

कथं,

॥ स त्रिश्रेणिर्भूत्वा त्र्यनीकोऽसुरान् युद्धमुपप्रायद्विजयाय ॥

युद्धं योद्धुं तुमर्थे क्त आयदेल्लङ् शपो न लुक् ॥
त्रिश्रेणीति त्र्यनीकेति[1] व्याचष्टे द्वितयं स्वयम्—

॥ त्रिश्रेणिरिति च्छन्दांस्येव श्रेणीरकुरुत ॥

श्रेणीः व्यूहान् गायत्रीत्रिष्टुब्जगतीरूपान् ॥

॥ त्र्यनीक इति सवनान्येवानीकानि ॥

अकुरुतेत्येव । अनीकं मुखम् ॥

एवमग्निः,

॥ तानसम्भाव्यं पराभावयत् ॥

तानसुरान् ।

---

१. 'त्रिश्रेणिरित्र्यनीकेति' क. पाठः.

पुनः समृद्धिः *संभाव्यं यथा तद्रहितं तथा ।

पराभावयत् व्यनाशयत् ॥

॥ ततो वै देवा अभवन् परासुराः । भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥

† उक्तार्थम् ।

इत्यग्नेः स्तुतियोगेन त्वग्निष्टोमः क्रतुः स्मृतः ॥

किञ्च,

॥ सा वा एषा गायत्र्येव यदग्निष्टोमः ॥

यत् यः ॥

कथं,

॥ चतुर्विंशत्यक्षरा वै गायत्री चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि ॥

पादैरष्टाक्षरैर्युक्ता गायत्री त्रिभिरेव हि ।
स्तोत्राणि द्वादशोद्गातुः शस्त्रं होत्रादिगं तथा ॥
पवमानास्त्रयश्चत्वार्याज्यानि स्तुत्र पृष्ठवत् ।
यज्ञायज्ञीयमन्त्यं च स्तोत्रद्वादशकं त्विदम् ॥
आज्यं होतुः सप्रउगं होत्रकाणां त्रिकं ततः ।
होतुर्मरुत्वतीयं च निष्केवल्यं च वै ततः ॥
होत्रकाणां त्रिकं होतुर्वैश्वदेवाग्निमारुते ।
इति शस्त्रद्वादशकमग्निष्टोमे व्यवस्थितम् ॥

---

* 'असंभाव्यं पुनरुज्जीवनसम्भावनापि यथा न भवति तथा । यद्वा अन्यैरननुभूतपराक्रमम्' इति भट्टभास्करः, † page 281.

॥ तद्वै यदिदमाहुः सुधायां ह वै वाजी सुहितो दधातीति ॥

*सुधामृतं तद्युक्तायां दिवि वाजीव वेगवान् ।
देवो दधाति सुहितो यष्टॄन् हेः किपि तुक् असि ॥
इति सन्तस्तु यत् प्राहुस्तदिदं संभवत्यपि ॥

कथं,

॥ गायत्री वै तत् । न ह वै गायत्री क्षमा रमते ॥

क्विलुक् । क्षमायां भूम्याम् ॥

किं तर्हि,

॥ ऊर्ध्वा हवा एषा यजमानमादाय स्वरेतीति ॥

स्वः स्वर्गम् । इतिः समाप्त्यर्थः ॥

किञ्च,

॥ अग्निष्टोमो वै तत् । न ह वा अग्निष्टोमः क्षमा रमते । ऊर्ध्वो हवा एष यजमानमादाय स्वरेति ॥

ऊर्ध्वः उन्मुखः ॥

किञ्च,

॥ स वा एष संवत्सर एव यदग्निष्टोमः ॥

यत् यः ॥

---

* 'सुष्ठु धीयन्ते सुकृतिनोऽस्यां दिवि सा द्यौः सुधा । तस्यामेव वाजी वाजोऽन्नं सोमरूपं यस्मिन्नस्तीत्यग्निष्टोम उच्यते । स च सुहितः साङ्गत्वेनानुष्ठितो दधाति सुधाशब्दवाच्यायां दिवि यजमानं स्थापयति' इति सायणः. 'वाजी वेगवान् हविर्लक्षणेनान्नेन तद्वान् वा सुहितः हविर्भिः सुतृप्तः । अग्निर्वाव वाजी (तै० सं० ५-५-१०) इति च ब्राह्मणान्तरम् । अग्निः खल्वीदृशो भूत्वा यजमानं स्वर्गे स्थापयति इत्यनेन स्तुति-वचनेनोच्यते' इति भट्टभास्करः.

कथं,

॥ चतुर्विंशत्यर्धमासो वै संवत्सरः । चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि ॥

*व्याख्यातम् ॥

॥ तं यथा समुद्रं स्रोत्या एवं सर्वे यज्ञक्रतवोऽपियन्ति ॥

†'स्रोतसो विभाषा ड्यड्ड्यौ'। स्रोत्याः नद्यः । यज्ञक्रतवो यागाः । अपियन्ति उपगच्छन्ति ॥

प्रथमः खण्डः ।

---

उक्तमर्थं स्पष्टयति वदन्निदमिदं त्विति—

॥ दीक्षणीयेष्टिस्तायते ॥

कृञर्थे तनिः । कर्मणि लट् । यक् । ‡'तनोतेर्यकि' इत्यात् ।

प्रथमं दीक्षणीयेष्टिरग्निष्टोमे प्रयुज्यते ॥

ततः किं,

॥ तामेवानु याः काश्चेष्टयस्ताः सर्वा अग्निष्टोममपियन्ति ॥

तामनु लक्षीकृत्य । अत्रेष्टयो विकृतयः उत्तरत्र दर्शपूर्णमासयोरुक्तेः ॥

किञ्च तत्र,

॥ इळामुपह्वयते ॥

होता ॥

---

* page 587. † पा० सू० ४-४-११३. ‡ पा० सू० ६-४-४४.

॥ इळाविधा वै पाकयज्ञाः* ॥

इळाख्यं तत्प्रकारा हि पाकयज्ञास्तु सप्त वै ।
हुतः प्रहुत आहुतो बलेर्हरणमेव च ॥
प्रत्यवरोहोऽष्टका च तथा शूलगवोऽन्तिमः† ॥

॥ इळामेवानु ये के च पाकयज्ञास्ते सर्वेऽग्निष्टोममपियन्ति ॥

किञ्च,

॥ सायंप्रातरग्निहोत्रं जुह्वति ॥

अत्र च,

॥ सायंप्रातर्व्रतं प्रयच्छन्ति ॥

दीक्षिताय । ‡पयो व्रतं ब्राह्मणस्यैतादृशास्तितं (?) भक्ष्यं व्रतम् ॥

किञ्च,

॥ स्वाहाकारेणाग्निहोत्रं जुह्वति ॥

मन्त्रान्तेऽस्ति हि स्वाहाकारः§ ॥

॥ स्वाहाकारेण व्रतं प्रयच्छन्ति¶ ॥

---

* 'इळा खलु वै पाकयज्ञः' इति तै० सं० १-७-१. † 'सोऽयं सूत्रान्तरकारस्य पक्षः । आश्वलायनस्तु हुतादीन्नैव पाकयज्ञानाह' इति सायणः. ‡ तथाच तै० आ०—'पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्यामिक्षा वैश्यस्याथो सौम्येऽप्यध्वर एतद् व्रतं ब्रूयात्' इति (२-८-१). 'पयो दीक्षासु' इतिच आ० श्रौ० सू० १२-८-२९. § तथाच तै० ब्रा०—'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः' इति (२-१-१०). ¶ 'ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा' (तै० सं० १-२-३) इति दीक्षितो व्रतयति । तथाच आप० श्रौ० सू०—'ये देवा मनोजाता मनोयुज इति दक्षिणेनाहवनीयं परिश्रिते व्रतयति' इति (१०-१७-२).

ततश्च,

॥ स्वाहाकारमेवान्वग्निहोत्रमग्निष्टोममप्येति ॥

अग्निहोत्रं कर्तुं ॥

किञ्च,

॥ पञ्चदश प्रायणीये सामिधेनीरन्वाह पञ्चदश
दर्शपूर्णमासयोः ॥

सामिधेनीरन्वाहेत्येव ॥

ततश्च,

॥ प्रायणीयमेवानु दर्शपूर्णमासावग्निष्टोममपीतः ॥

प्रायणीयं यागम् । इतः उपगच्छतः ॥

॥ सोमं राजानं क्रीणन्ति ॥

सोमक्रयं कुर्वन्ति ॥

॥ औषधो वै सोमो राजा ॥

ओषधिरूपत्वादोषधीशत्वाच्च सोमस्य ॥

॥ ओषधिभिस्तं भिषज्यन्ति यं भिषज्यन्ति ॥

+ + + + + + + त्तं कर्तुमिच्छन्ति बन्धवः ।
तं भिषज्यन्त्योषधिभिर्भिषक् [1]कण्ड्वादियक् ङि लट् ॥

ततश्च,

॥ सोममेव राजानं क्रीयमाणमनु यानि कानि च
भेषजानि तानि सर्वाण्यग्निष्टोममपियन्ति ॥

क्रयः स्वीकारः । यानि कानि च सर्वाणि आयुर्वेदः सर्वरोग....गतः(?) ॥

---

[1] पा० सू० ३-१-२७.

॥ अग्निमातिथ्ये मन्थन्ति ॥

आतिथ्ये कर्मणि ॥

॥ अग्निं चातुर्मास्येषु ॥

मन्थन्तीत्येव । वैश्वदेवे पर्वणि ॥

॥ आतिथ्यमेवानु चातुर्मास्यान्यग्निष्टोममपियन्ति । पयसा प्रवर्ग्ये चरन्ति ॥

*पयो हि गव्यमाजं च महावीरे निधीयते ॥

॥ पयसा दाक्षायणयज्ञे ॥

चरन्तीत्येव† ।

‡मैत्रावरुण्यस्त्वामिक्षा तप्ते क्षीरे हि सा दधि ॥

॥ प्रवर्ग्यमेवानु दाक्षायणयज्ञोऽग्निष्टोममप्येति ॥

किञ्च,

॥ पशुरुपवसथे भवति ॥

पशुरौपवसथ्येऽहन्यस्त्यग्नीषोमदैवतः ॥

---

* 'इन्द्राश्विना मधुनः सारघस्येति महावीरे गोपय आनयति', 'मधु हविरसीत्यजापयः' इति आप० श्रौ० सू० १५-१०-१, ३. † 'ननु सर्वासामिष्टीनां प्रकृतिविकृतीनामग्निष्टोमेऽनुप्रवेश उक्त एव । तत् किमित्यस्य दाक्षायणयज्ञस्य पृथगन्तर्भावो विधीयते । उच्यते । नायं प्रकृतिर्नापि विकृतिः । किं तर्हि दर्शपूर्णमासयोरेव गुणफलाधिकारोऽयम् । द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत इति प्रयोगविशेषस्य दाक्षायणयज्ञ इति संज्ञा' इति भट्टभास्करः. 'दर्शपूर्णमासयोरेव गुणविकृतिरूपः कश्चिद् दाक्षायणाख्यो यज्ञः । तथाच शाखान्तरे दर्शपूर्णमाससन्निधौ श्रूयते—'दाक्षायणयज्ञेन स्वर्गकामो यजेत' (तै० सं० २-५-५) इति' इति सायणः. ‡ 'मैत्रावरुण्यामिक्षा द्वितीयोत्तरस्याम्' इति आप० श्रौ० सू० ३-१७-६. 'मैत्रावरुणममावास्यायाम्' इतिन आ० श्रौ० सू० २-१४-१०.

॥ तमेवानु ये के च पशुबन्धास्ते सर्वेऽग्निष्टोममपियन्ति ॥

ये के च सर्वे पशुबन्धाः पशुयागाः ॥

॥ इळादधो नाम यज्ञक्रतुः ॥

श्रूयते हि—*'प्राजापत्य इळादधः' इति ॥

॥ तं दध्ना चरन्ति ॥

तस्य हविर्दधीत्यर्थः ॥

अत्र च,

॥ दध्ना दधिघर्मे ॥

चरन्तीत्येव ॥

॥ दधिघर्ममेवान्विळादधोऽग्निष्टोममप्येति ॥

द्वितीयः खण्डः ।

---

॥ इति नु पुरस्तात् ॥

उक्तः प्राक्तनयज्ञानामग्निष्टोमे समागमः ॥

॥ अथोपरिष्टात् ॥

उक्थ्यादीनां परेषां तु सङ्गमोऽस्यात्र वक्ष्यते ॥

* आ० श्रौ० सू० २-१४-११.

तत्र,

॥ पञ्चदशोक्थ्यस्य स्तोत्राणि पञ्चदश शस्त्राणि ॥

उक्थ्यस्यैव[1] । अग्निष्टोमादूर्ध्वमुक्थ्यस्तोत्रिय....विषयम् (?) ॥

ततः किं,

॥ स मासः ॥

द्विपञ्चदशसंघातस्त्रिंशत्त्वान्मासवद् भवेत् ॥

॥ मासधा संवत्सरो विहितः ॥

*छान्दसो धा । विधा प्रकारः । विहितः क्लृप्तः ।

मासप्रकारेण पुरा क्लृप्तो देवैर्हि वत्सरः ॥

॥ संवत्सरोऽग्निर्वैश्वानरः ॥

वैश्वानराग्निरूपेण श्रुतौ संवत्सरः श्रुतः† ॥

॥ अग्निरग्निष्टोमः ॥

अग्निस्तुतिरूपत्वात् ॥

॥ संवत्सरमेवानूक्थ्योऽग्निष्टोममप्येति ॥

संवत्सररूपेऽन्तर्भावात् ॥

---

१. 'उक्थ्यस्यैवेति' क. ग. पाठः

---

* 'वीप्सायां छान्दसो धाप्रत्ययः, मासो मासः, अनेके मासाः सम्भूय संवत्सरो विहितः' इति भट्टभास्करः. † तथाच तै० सं० –'संवत्सरो वा अग्निर्वैश्वानरः' इति २–२–५.

तत्र च,

॥ उक्थ्यमपियन्तमनु वाजपेयोऽप्येति ॥

अग्निष्टोमेन साम्योक्त्या वाजपेयोऽनुयात्यपि ॥

कुतः,

॥ अत्युक्थ्यो हि स भवति ॥

उक्थ्यपरभूतषोळश्याश्रयत्वात् । सूच्यते हि—*‘षोळशी त्विह । तस्मादूर्ध्वम्—’ इत्यादि ॥

आह्नाथाग्निष्टोमयोगमप्तोर्यामातिरात्रयोः—

॥ द्वादश रात्रेः पर्यायाः[†] सर्वे पञ्चदशाः ॥

‡‘(स्तो)मे डविधिः पञ्चदशा(ध्यर्ध ?ऽर्थः’।) पञ्चदशावृत्तिकः ॥

तत्र च,

॥ ते द्वौ द्वौ सम्पद्य त्रिंशत् ॥

त्रिंशद्रूपास्तु संघाताः षडासन् द्वादशस्वपि ।

क्त्वार्थे ल्यप् । सम्पन्नाः ॥

॥ एकविंशं षोळशिसाम त्रिवृत्[§] सन्धिः । सा त्रिंशत् ॥

सम्पद्येत्येव ।

---

* आ० श्रौ० सू० ६-१-९, १०. † ‘अतिरात्रे च द्वादश रात्रेः पर्यायाः । ते चापस्तम्बेन स्पष्टीकृताः—‘अतिरात्रश्चेत् षोडशिनमनुशस्यैतयोदशभ्यश्चमसगणेभ्यो राजानमतिरेचयति । षोडशिना प्रचर्य रात्रिपर्यायैः प्रचरति । होतृचमसमुख्यः प्रथमो गणो मैत्रावरुणचमसमुख्यो द्वितीयो ब्राह्मणाच्छंसिचमसमुख्यस्तृतीयोऽच्छावाकचमसमुख्यश्चतुर्थः । प्रथमाभ्यां गणाभ्यामध्वर्युश्चरत्युत्तराभ्यां प्रतिप्रस्थाता । एष प्रथमः पर्यायः । एवं विहितो द्वितीयस्तृतीयश्च’ इति (१४-३-८, ९, १०, १४, १५, १६). ‡ पा० सू० वा० ५-१-५८. § त्रिरस्ताक्षलोऽवयवा यस्य स त्रिवृत् । नव स्तोत्रिया इत्यर्थः.

सन्धिषोर्ळशसंघातस्त्रिंशत्संख्योऽन्यतो[1]ऽभवत् ॥

॥ स मासः ॥

स संघातो मास इव त्रिंशत्संख्यान्वयादभूत् ॥

॥ त्रिंशन्मासस्य रात्रयो मासशः संवत्सरो विहितः संवत्सरोऽग्निर्वैश्वानरोऽग्निरग्निष्टोमः संवत्सरमेवान्वतिरात्रोऽग्निष्टोममप्येति ॥

किञ्च,

॥ अतिरात्रमपियन्तमन्वप्तोर्यामोऽप्येति ॥

कुतः,

॥ अत्यतिरात्रो हि स भवति ॥

अतिरात्राश्रयत्वादप्तोर्यामस्य । सूत्र्यते हि—*'अतिरात्रस्त्विह । अद्वैपदोवध्यश्चेद् वैषुवतं तृतीयसवनम् । ऊर्ध्वमाश्विनादतिरिक्तोक्थानि' इति ॥

निगमयति—

॥ एतद् वै ये च पुरस्ताद् ये चोपरिष्टाद् यज्ञक्रतवस्ते सर्वेऽग्निष्टोममपियन्ति ॥

ये यज्ञक्रतवः पूर्वे तेऽग्निष्टोमात् परे च ये ।
यज्ञक्रतव आयान्ति सर्वे+++वै खलु ॥

---

१. 'संख्यातस्त्रिंशत्संख्यान्वितो' क. पाठः

---

* आ० श्रौ० सू० ९-११-११, १२, १३.

पुनः स्तौति—

॥ तस्य संस्तुतस्य नवतिशतं स्तोत्रियाः ॥

स्तोत्राद् घः । "संख्याया अल्पीयस्याः"* इति नवतेः पूर्वनिपातः ।

कथं संख्यैवमिति चेच्छ्लोकौ शृणु पुरातनौ†—

"त्रिवृद् बहिष्पवमाने नव स्युश्चतुर्षु चाज्येषु हि षष्टिरेवम् ।
माध्यंदिने पवमाने दशाथ पञ्चाधिकाः स्तोत्रियाः स्युस्तथैव ॥

चतुर्षु पृष्ठेषु तथाष्टषष्टिः सप्तार्भवे पवमाने दशाथ ।
अग्निष्टोमं त्वेकविंशं वदन्तीत्येवं संख्या नवतिर्वै शतं च ॥"

इति । अर्थस्तु—बहिष्पवमाने स्तोत्रियास्त्रिवृन्नव । पञ्चदशाज्यानि चत्वारि इति षष्टिः । माध्यंदिने पवमाने पञ्चदश । सप्तदशानि पृष्ठानि चत्वारि इत्यष्टाषष्टिः । आर्भवे पवमाने सप्तदश । एकविंशं यज्ञायज्ञीयसामेति ॥

अथावयुत्य स्तौति—

॥ सा या नवतिस्ते दश त्रिवृतः ॥

शतात् पूर्वा तु नवतिर्नवका दश वै मताः ॥

॥ अथ या नवतिस्ते दश ॥

त्रिवृत इत्येव । अथ शतात् परा नवतिर्दश नवकाः ॥

॥ अथ या दश तासामेका स्तोत्रियोदेति त्रिवृत् परिशिष्यते ॥

---

* पा० सू० वा० २-२-३५ † श्लोकाविमौ मृग्यौ.

मध्ये नवत्योर्दश याः स्तोत्रियास्तासु चान्ततः ।
ए(का)तिरिच्यते ह्यन्यो नवकस्तिष्ठ(ति) त्रिवृत् ॥

॥ सोऽसावेकविंशोऽध्याहितस्तपति ॥

अधि इव । स शिष्टनवकसंघातः । आहितः स्थितः तपति दीप्यते । असौ सूर्य इव ॥

कथं,

॥ विषुवान् वा एष स्तोमानाम्[1] ॥

विषुः कालो मध्यवर्ती तद्योगी विषुवान् रविः ।

वै इव । वत्वं छान्दसम् ।

मध्यवर्तिसूर्य(नि)भा नवत्योर्मध्यगा त्रिवृत् ॥

उपपादयति—

॥ दश वा एतस्मादर्वाञ्चस्त्रिवृतः ॥

एतस्मान्मध्यनवकात् । अर्वाञ्चः पूर्वभूता-नवकदशकाः ॥

॥ दश पराञ्चः ॥

त्रिवृत इत्येव । परभूताः ॥

॥ मध्य एष एकविंश उभयतोऽध्याहितस्तपति ॥

अधि इव । *'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इत्युक्त एकविंशतेः पूरणः सूर्य इवैष नवक इत्यर्थः ॥

---

१. 'स्तोमानाम् । विषुवान्' घ. ङ. पाठः.

---

* page 198.

॥ तद्यासौ स्तोत्रियोदेति सैतस्मिन्नध्यूह्ळा ॥

उदेति अतिरिच्यते । एतस्मिन्नादित्यसमे नवके । साध्यूह्ळा । उपरि निहिता ॥

॥ स यजमानः ॥

(आ?) टापो लुक् । सा ॥

किञ्च,

॥ तद् दैवं क्षत्रं सहो बलम् ॥

यजमान इत्येव । आश्रित इति शेषः । तत् सूर्याख्यं ज्योतिर्दैवं सर्वदेवसम्बन्धि, क्षत्रं राजरूपम् । सहः अभिभवितृ, बलं बलवत् ॥

॥ अश्नुते ह वै दैवं क्षत्रं सहो बलम् ॥

यजमान इत्येव ॥

॥ एतस्य ह सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद ॥

सः ॥

तृतीयः खण्डः ।

---

त्रिवृदादिस्तोमयोगमग्निष्टोमे प्रतीत्य —

॥ देवा वा असुरैर्विजिग्याना ऊर्ध्वाः स्वर्गं लोकमायन् ॥

सह युद्ध इति शेषः । वै पुरा ऊर्ध्वाः ऊर्ध्वमुखाः ।

*सन्लिटोर्जेः †लिटः कानच् ‡विपराभ्यां तङेव च ।

---

* पा० सू० ७-३-५७. † पा० सू० ३-२-१०६. ‡ पा० सू० १-३-१९.

विजयं कृतवन्तः ॥

॥ सोऽग्निर्दिविस्पृगूर्ध्व उदश्रयत ॥

*'हृद्युभ्यां ङेः' इत्यलुक् । उत् प्रथमम् । सः प्रसिद्धः ॥

॥ स स्वर्गस्य लोकस्य द्वारमवृणोत् ॥

अग्निः प्रविश्य स्वर्गस्य प्रादाद् (?) द्वारं ततो ह्यदम् ॥
कथमस्य प्रवेशः प्रागत उत्तरमुच्यते—

॥ अग्निर्वै स्वर्गस्य लोकस्याधिपतिः ॥

आनीतं ह्यग्निना सर्वा हविरश्नन्ति देवताः ॥

॥ तं वसवः प्रथमा आगच्छन् ॥

वा सर्वनाम †प्रथमचरमेति जसो न शी ॥

आगत्य च,

॥ त एनमब्रुवन् ॥

ते अष्टौ वसवः ॥

कथम्,

॥ अति नोऽर्जस्याकाशं नः कुर्विति ॥

अर्जेः प्रवेशार्थाल्लोटो लट् । अत्यर्जः प्रवेशः । नः[1] अस्मान् ।

आकाशमवकाशं तु द्वारो(लो? द्वा)टनतः कुरु ॥

१. 'अत्यर्जनं प्रवेशनम्' घ. ङ. पाठः.

* पा० सू० वा० ६-३-९. † पा० सू० १-१-३३.

॥ स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत् । स्तुत नु मेति ॥

अतिसर्गः प्रवेशनम् ॥

॥ तथेति तं ते त्रिवृता* स्तोमेनास्तुवन् ॥

स च,

॥ तान्स्तुतोऽत्यार्जत ॥

प्रावेशयत् ॥

॥ ते यथालोकमगच्छन् ॥

लोकं स्थानम् ॥

॥ तं रुद्रा आगच्छन् ॥

एकादश ॥

॥ त एनमब्रुवन्नति नोऽर्जस्याकाशं नः कुर्विति । स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत् स्तुत नु मेति । तथेति तं ते पञ्चदशेन† स्तोमेनास्तुवन् । तान्स्तुतोऽत्यार्जत । ते यथा-लोकमगच्छन् ॥

॥ तमादित्या आगच्छन् ॥

द्वादश ॥

---

* 'तिसृभ्यो हिंकरोति स प्रथमया तिसृभ्यो हिंकरोति स मध्यमया तिसृभ्यो हिंकरोति स उत्तमयोदती त्रिवृतो विष्टुतिः' इति त्रिवृत्स्तोमविधायकं ताण्ड्यब्राह्मणम् (२-१). † पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः' इति पञ्चदशस्तोमविधायकं ताण्ड्यब्राह्मणम् (२-४.)

॥ त एनमब्रुवन्नति नोऽर्जस्याकाशं नः कुर्विति । स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत् स्तुत नु मेति । तथेति तं ते सप्तदशेन* स्तोमेनास्तुवन् । तान्थ्स्तुतोऽत्यार्जत । ते यथा-लोकमगच्छन् ॥

॥ तं विश्वेदेवा आगच्छन् ॥

दश ॥

॥ त एनमब्रुवन्नति नोऽर्जस्याकाशं नः कुर्विति स नास्तुतोऽतिस्रक्ष्य इत्यब्रवीत् स्तुत नु मेति । तथेति तं त एक-विंशेन† स्तोमेनास्तुवन् । तान्थ्स्तुतोऽत्यार्जत । ते यथालोक-मगच्छन् ॥

एवम्,

॥ एकैकेन वै तं देवाः स्तोमेनास्तुवन् । तान्थ्स्तुतो-ऽत्यार्जत । ते यथालोकमगच्छन् । अथहैनमेष एतैः सर्वैः स्तोमैः स्तौति यो यजते ॥

अथह एवंहि । यो यजते स एष सर्वैस्त्रिवृत्पञ्चदशसप्तदशैकविंशैः ॥

॥ यश्चैनमेवं वेद ॥

सोऽपि ॥

---

* 'पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकया पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया सप्तभ्यो हिंकरोति स एकया स तिसृभिः स तिसृभिः' इति सप्तदशस्तोमविधायकं ताण्ड्यब्राह्मणम् (२-७). † 'सप्तभ्यो हिंकरोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिंकरोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिंकरोति स तिसृभिः स एकया स तिसृभिः' इत्येकविंशस्तोमविधायकं ताण्ड्यब्राह्मणम् (२-१४).

॥ अती तु तमर्जाते ॥

तं यष्टारं वेदितारमपि[1] सोऽग्निः प्रवेशयेत् ।

अतेर्दीर्घश्छान्दसः। अर्जेर्लेट्[2]। *'आत ऐ'। †'वैतोऽन्यत्र'। अर्जेत दुःखमतिक्रमय्य सुखं प्रवेशयेत् ॥

स्पष्टयति—

॥ अति ह वा एनमर्जते स्वर्गं लोकमभि ॥

एनं यष्टारम्। स्वर्गमभि प्रति अर्जते प्रवेशयति ॥

॥ य एवं वेद[3] ॥

चतुर्थः खण्डः।

---

पुनः स्तौति—

॥ स वा एषोऽग्निरेव यदग्निष्टोमः ॥

यत् यः ॥

कथं,

॥ तं यदस्तुवंस्तस्मादग्निस्तोमस्तमग्निस्तोमं सन्तमग्निष्टोम इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः ॥

---

१. 'होतारमपि' क. पाठः. २. 'अर्जैर्लेट्' ङ. पाठः. ३. 'वेद। सोऽपि ॥' क. पाठः.

---

* पा० सू० ३-४-९५. † पा० सू० ३-४-९६.

*अग्नेः स्तुत्स्तोमसोमेति षत्वं नाम तिरोहितम् ।
अग्नेः स्तोमा अत्र सन्तीत्यग्निष्टोमः क्रतुर्मतः[1] ॥

॥ तं यच्चतुष्टया देवाश्चतुर्भिः स्तोमैरस्तुवंस्तस्माच्चतुस्तोमः ॥

†संख्याया इति सूत्रेण चतुरोऽवयवे तयप् ।
वा सर्वनाम ‡प्रथमचरमेति जसो न शी ॥

अग्नेः स्तोमास्तु चत्वारः सन्त्यत्रेति कर्तौ पदम् ॥

॥ तं चतुस्तोमं सन्तं चतुष्टोम इत्याचक्षते परोक्षेण
परोक्षप्रिया इव हि देवाः ॥

§सुषामादिषु चेत्येवं षत्वं नाम तिरोहितम् ॥

॥ अथ यदेनमूर्ध्वं सन्तं ज्योतिर्भूतमस्तुवंस्तस्माज्ज्योतिस्तोमस्तं ज्योतिस्तोमं सन्तं ज्योतिष्टोम इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः ॥

ज्योतिर्भूतमतिप्रकाशमानम् ।

¶ज्योतिरायुषः स्तोमेति षत्वं नाम तिरोहितम् ।
ज्योतिष्टोमो ज्योतिषोऽग्नेरिह स्तोमा इति क्रतुः ॥

१. 'अग्निष्टोमोऽग्निमतः' ब. इ. पाठः

* पा० सू० ८-३-८२. † पा० सू० ५-२-४२. ‡ पा० सू० १-१-३३.
§ पा० सू० ८-३-९८. ¶ पा० सू० ८-३-८३.

पुनः स्तौति—

॥ स वा एषोऽपूर्वोऽनपरो यज्ञक्रतुर्यथा
रथचक्रमनन्तमेवं यदग्निष्टोमः ॥

यत् यः[1] । अग्निष्टोमो नाम एष यज्ञः (पूर्व)पररहितः । यथा रथचक्रमनन्तमाद्यन्तरहितम् एवं तथा ॥

स्पष्टयति—

॥ तस्य यथैव प्रायणं तथोदयनम् ॥

प्रायणमारम्भः । उदयनं समाप्तिः ।

*यः प्रायणीयस्येत्यादि प्रागतं ह्यध्यगीष्महि ।

सूत्र्यते च†—'उदयनीयया—' ॥

॥ तदेषाभि यज्ञगाथा गीयते ॥

तत्‡ उक्तमर्थरूपम् । एषा वक्ष्यमाणा अभि प्रति । यज्ञगाथा यज्ञविषया गाथा । आत्मगपदरूपिता(?) । गीयतेऽधीयतेऽध्येतृभिः ॥

॥ यदस्य पूर्वमपरं तदस्य यद्वस्यापरं तद्वस्य पूर्वम् ।
अहेरिव सर्पणं शाकलस्य न विजानन्ति यतरत् परस्तादिति ॥

अर्थस्तु—अस्याग्निष्टोमस्य (यत्) पूर्वं प्रायणीयाख्यं तदेवास्यापरमुदयनीयाख्यम् । व्यत्यस्योक्तिरादरार्था । उ पुनः । उ खलु । अहेः सर्पस्य । ‡सर्पणम् । कृत्यर्थेऽम्, सर्पणे गमने ।

1. 'यः एष' ख, ङ. पाठः.

* page 73. † आ० श्रौ० सू० ६-१४-१. ‡ 'सर्पणं सर्पणशीलं शरीरमिव तथा शिरःपुच्छविवेकरहितं सर्पति तद्वत्' इति भट्टभास्करः.

सर्पः शाकलनामा तु वालं दष्ट्वा दृढं मुखे ।
चक्रवन्मण्डलीभूतः सर्पन् हि (प)रिदृश्यते ॥
दुर्ज्ञानमुखपुच्छाग्रमध्यो वलयसन्निभः ।
न विजानन्ति यतरत् परस्ताद्यच्च पुरस्तात् ॥

निगमयति—

॥ यथाह्येवास्य प्रायणमेवमुदयनम् ॥

उक्तं दूषयतीत्याह—

॥ *असदिति तदाहुः । यत् त्रिवृत् प्रायणमेकविंशमुदयनं केन ते समे इति ॥

यत् यदि ।

आदौ बहिष्पवमानस्त्रिवृत्स्तोमोऽन्तिमस्तथा ।
एकविंशोऽग्निष्टोमाख्यः कथ(मद्य ? माद्यन्त)तुल्यता ॥
अत आहुः + + + + + प्रोक्तमसदेव तत् ॥

परिहरति—

॥ यो वा एकविंशस्त्रिवृद्वै सः ॥

एकविंशे द्वे नवके विद्येते तिष्ठतु त्रिकम् ।
अवयुत्य त्रिपुत्रोऽपि द्विपुत्रत्वं न मुञ्चति ॥
नवकाख्यस्त्रिवृदिति केचिदन्येऽन्यथोचिरे[1] ।

---

१. 'अन्यथोचिरे । त्रिकानि च विद्यन्ते । अतश्च' क. पाठः.

---

* सायणभट्टभास्करौ तु असदित्यस्य पूर्ववाक्येनान्वयं कृत्वा यथाह्येवाग्निष्टोमस्य प्रायणीयमेवमेवोदयनीयमप्यसत् स्यादिति व्याचक्षाते.

अतश्च त्रिवृदाद्यन्तयोगादाद्यन्ततुल्यता ॥

॥ अथो यदुभौ तृचौ तृचिनाविति ब्रूयात् तेनेति ॥

अथो अपिच । उभौ बहिष्पवमानयज्ञायज्ञीयाख्यस्तोमौ । अर्धआद्यन्च । व्याचष्टे—तृचिनौ । तुल्यतेति ब्रूयादित्यर्थः ।

क्रतुरेषोऽपरिच्छिन्नो दुर्ज्ञानाद्यन्तको महान् ।

इति भावः ॥

पञ्चमः खण्डः ।

---

पुनः स्तौति—

॥ यो वा एष तपत्येषोऽग्निष्टोम एष साह्नः ॥

यः अग्निष्टोमः स एषः । यस्तपति दीप्यते साह्नश्च सूर्यः तद्वत् पूज्यः *। इषेः कर्मणि घञ् । श्रद्धेयः । अह्ना सह वर्तते साह्नः । *अह्नादेशश्छान्दसः ॥

ततश्च,

॥ तं सहैवाह्ना संस्थापयेयुः ॥

तमग्निष्टोमम् । ऋत्विजः ॥

॥ साह्नो वै नाम ॥

†साह्नेति नाम चास्यास्ति यः श्रुतौ‡ श्रूयते मुहुः ॥

---

* 'अह्नोऽह्न एतेभ्य इत्यह्नादेशः । वोपसर्जनस्येति सहस्य समासः'.

† 'एष खल्वग्निष्टोमः साह्नो भवति तस्मादह्नोऽतिक्रमं न सहते' इति भट्टभास्करः.

‡ 'तिस्र एव साह्नस्योपसदः' (तै० सं० ६–२–५) इत्यादौ.

॥ तेनासंत्वरमाणाश्चरेयुर्यथैव प्रातस्सवन एवं माध्यंदिन एवं तृतीयसवने ॥

अव्यग्राः कुर्युः ॥

॥ एवमु ह यजमानोऽप्रमायुको भवति ॥

एवमुह एवञ्च । अप्रमायुको दुष्कीर्त्तिरहितः आयुष्मान् वा ॥

द्रढयति—

॥ यद्धवा इदं पूर्वयोः सवनयोरसंत्वरमाणाश्चरन्ति तस्माद्धेदम्* ॥

इवेति शेषः । असंत्वरमाणाः अव्यग्राः चरन्ति यत् तस्माद् । (एतद्) अव्यग्रानुष्ठा(नम्) इदमिव भवति ॥

किं तत्,

॥ प्राच्यो ग्रामता बहुलाविष्टाः ॥

प्राच्यो ग्रामताः ग्रा(मस)मूहाः । †'ग्रामजन—' इति सत्र् । बहुलाविष्टाः निविष्टाः । प्राच्यः सह्यपर्वतात् प्राग्भूताः ॥

॥ अथ यद्धेदं तृतीयसवने संत्वरमाणाश्चरन्ति तस्माद्धेदम् ॥

इवेति शेषः । सन्त्वरमाणाः (अ?) व्यग्राः ॥

किं तत्,

॥ प्रत्यञ्चि दीर्घारण्यानि भवन्ति ॥

---

* 'असंत्वरमाणाः पूर्वाभ्यां सवनाभ्यां चरन्ति । संत्वरमाणास्तृतीयसवनेन' इति आप० श्रौ० सू० १२-२५-१२. † पा० सू० ४-२-४३.

सह्यपर्वतात् प्रत्यक्षि प्रत्यग्देशवर्तीनि दीर्घारण्यानि महान्ति दुष्प्रवेशनानि[1] वनानि । एतद् व्यग्रानुष्ठानमिदमिव स्यात् ॥

॥ तथा ह यजमानः प्रमायुको भवति ॥

निगमयति—

॥ तेनासंत्वरमाणाश्चरेयुर्यथैव प्रातस्सवन एवं माध्यंदिन एवं तृतीयसवन एवमु ह यजमानोऽप्रमायुको भवति ॥

एवं तृतीयसवने त्वरा स्याज्येति वर्णितम्[2] ॥

॥ स एतमेव शस्त्रेणानु पर्यावर्तेत ॥

अनुपर्यावृत्तिरनुसारः । एतम् आदित्यम् । सः शस्त्रं शंसन् ॥

कथं,

॥ यद्वा वा एष प्रातरुदेत्यथ मन्द्रं तपति । तस्मान्मन्द्रया वाचा प्रातस्सवने शंसेत् ॥

उदेति ऊर्ध्वं गच्छति । अथ तदा । तस्मात् । ऊर्ध्वे उंसिः । एवमुत्तरत्रापि । तस्मिन् प्रातस्सवने शंसेत् ॥

॥ अथ यदाभ्येत्यथ बलीयस्तपति तस्माद् बलीयस्या वाचा मध्यंदिने शंसेत् ॥

अभ्येव मध्यगमनम् । बलीयः दृढम् । बलीयसी म(ध्यम)स्वरवती च वाक् ॥

1. 'दुष्प्रवेशानि' ख, ङ, पाठः. 2. 'वर्णितम् । किंच स एतमेव' क, पाठः.

॥ अथ यदाभितरामेत्यथ बलिष्ठतमं तपति
तस्माद् बलिष्ठतमया वाचा तृतीयसवने शंसेत् ॥

बलिष्ठतमं तीव्रम् । बलिष्ठतमोत्तमस्वरवती वाक् । सूत्र्यते हि—[*]'परं मन्द्रेण प्रातस्सवनं च' 'मध्यमस्वरेणेदं सवनम्' 'उत्तमस्वरेण' इति च ।

एवमादित्यगमनं शस्त्रिणानुस्मृतं भवेत् ।

इति भावः ॥

पुनः स्तौति—

॥ एवं शंसेद्यदि वाच ईशीत ॥

[†]यदीच्छेद्वाच ईशः स्यामिति शंसेद्यथेरितम् ॥

॥ वाग्घि शस्त्रम् ॥

शस्त्रं शस्यं पूजनीयं वाग्घित्वं सर्वदा खलु ।
[‡]भद्रैषां लक्ष्मीर्निहिताधिवाचीत्यध्यगीष्महि ॥

किञ्च,

॥ यया तु वाचोत्तरोत्तरिण्योत्सहेत समापनाय
तया प्रतिपद्येत ॥

---

* आ॰ श्रौ॰ सू॰ ५-१-२, ४; ५-१२-८; ५-१७-१. † 'यदयं होता वाच ईशितेश्वरो भवेत् वशवाक् स्यात् श्लेष्मादिदोषेण ध्वनेर्मान्द्यं न प्राप्नुयात्' इति सायणः. 'यद्ययं वाचो विविधोच्चारणगुणस्य कृत्स्नस्य वाक्तत्त्वस्येशिता ईश्वरः स्यात् । यद्यस्य सर्वापि नानाविकल्पा वाग् विधेया भवेदिति यावत्' इति भट्टभास्करः. ‡ ऋक्सं॰ ८-२-२३-२.

आदौ मृदु ततस्तीव्रं व्यक्तं व्यक्ततरं ततः ।
ततो व्यक्ततमं चेति वाचैवं तु समीरयेत् ॥

समापनं सम्यक् प्राप्तिः ॥

॥ एतत् सुशस्ततममिव भवति ॥

इव एव । एतदेतया वाचा शंसने सुशस्ततममेव ॥

नन्वस्तं यश्चानुस्तत उत्तरोत्तरवादिना ।
अस्तं यतोऽस्ति क्षीणत्वमत उत्तरमुच्यते—

॥ स वा एष न कदाचनास्तमेति नोदेति । तं यदस्तमेतीति मन्यन्तेऽह्न एव तदन्तमित्वाथात्मानं विपर्यस्यते । रात्रीमेवावस्तात् कुरुतेऽहः परस्तात् ॥

यत् यदा तत् तदा । *"उपसर्गादस्यत्यूह्योर्वा" इति तङ् । आत्मानम् । मन्यन्ते रात्रिं पूर्वमहरुपरिष्टादिव । अह्नो दिनार्हत्रिंशन्नाडिकाख्यस्य कालस्यान्ते समाप्तौ । (इ? कि)त्त्वा(द)गुणः । इत्वा गत्वा ॥

॥ अथ यदेनं प्रातरुदेतीति मन्यन्ते रात्रेरेव तदन्तमित्वाथात्मानं विपर्यस्यतेऽहरेवावस्तात् कुरुते रात्रिं परस्तात् ॥

अहः पूर्वं रात्रिमुपरिष्टात् ॥

॥ स वा एष न कदाचन निम्रोचति ॥

निम्रोचनमस्तगमनम् ॥

---

* पा॰ सू॰ अ॰ १-३-२९.

॥ न ह वै कदाचन निम्रोचत्येतस्य ह सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद य एवं वेद ॥

सूर्यो विराजति सदेत्यर्थमार्यभटोऽब्रवीत्*—
"उदयो यो लङ्कायां सोऽस्तमयः सवितुरेव सिद्धपुरे ।
मध्याह्नो यवकोट्यां लोमकविषयेऽर्धरात्रं स्यात्† ॥"

इति । अर्थस्तु—यदा पुरुषो दक्षिणस्यां दिशि लङ्कास्थ उदेतीति मन्यते तदैवोदीच्यां सिद्धपुरसंज्ञके स्थितोऽस्तमेतीति, तदैव च प्राच्यां यवकोटिसंज्ञपुरीस्थो मध्यंदिन इति, तदैव च प्रतीच्यां लोमकराष्ट्रे स्थितोऽर्धरात्रमिति ।

अतः सूर्यो महादीप्तिः सदैव खलु वर्तते ।

द्विरुक्तिरुक्तार्था‡ ॥

षष्ठः खण्डः ।

इति षड्गुरुशिष्यविरचितायां सद्दिदासैतरेयब्राह्मणवृत्तौ सुखप्रदायां[1] चतुर्दशोऽध्यायः ॥

---

1. 'इति ब्राह्मणवृत्तौ सुखप्रदायां' प. क. पाठः.

---

* गोळपादे श्लो० १३. † सिद्धपुर्यादिनगरीव्यवस्थानं च सूर्यसिद्धान्ते स्पष्टं प्रदर्शितम् । यथा—"समन्तान्मेरुमध्यात् तु तुल्यभागेषु तोयधेः । द्वीपेषु दिक्षु पूर्वादिनगर्यो देवनिर्मिताः ॥ भूवृत्तपादे पूर्वस्यां यवकोटीति विश्रुता । भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा ॥ याम्यायां भारते वर्षे लङ्का तद्वन्महापुरी । पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्तिता ॥ उदक् सिद्धपुरी नाम कुरुवर्षे प्रकीर्तिता । तस्यां सिद्धा महात्मानो निवसन्ति गतव्यथाः ॥" इति भूगोलाध्याये श्लो० ३७-४०. ‡ page 44.

# अथ पञ्चदशोऽध्यायः ।

दीक्षणीयादिकेष्टीनां संस्था वक्तुं कथोच्यते—

॥ यज्ञो वै देवेभ्योऽन्नाद्यमुदक्रामत् ॥

यज्ञस्त्वन्नाद्यभूतः सन् देवेभ्योऽगात् पराङ्मुखः ।
आद्यं भक्ष्यं प्रधानत्वादन्नस्यात्र पृथग् ग्रहः ॥

॥ ते देवा अब्रुवन् ॥

कथं,

॥ यज्ञो वै नोऽन्नाद्यमुदक्रमीदन्विमं यज्ञमन्नमन्विच्छामेति ॥

नः अस्मत् उदक्रमीत् उत्क्रान्तवान् । इमं यज्ञम् अनु लक्षीकृत्यान्नमनु संततमिच्छाम* । प्राप्तकाले लोट् ॥

॥ तेऽब्रुवन् कथमन्विच्छामेति । ब्राह्मणेन च छन्दोभिश्चेत्यब्रुवन् । ते ब्राह्मणं छन्दोभिरदीक्षयन् ॥

ब्राह्मणोऽधिकारी[1] । क्षत्रियवैश्यावपि दीक्षितौ ब्राह्मणावेव । †'स ह दीक्षमाण एव ब्राह्मणतामभ्युपैति' इति वक्ष्यते । छन्दोभिर्गायत्र्यादिभिस्तद्युक्तमन्त्रैश्च । अदीक्षयन् दीक्षितमकुर्वन् ॥

॥ तस्यान्तं यज्ञमतन्वत ॥

---

१. 'ब्राह्मणोऽधिकारी' ब. पाठः.

---

* 'अन्विच्छाम अन्वेषणं करवाम' इति सायणः. † ऐ० ब्रा० ३४-५.

यज्ञं दीक्षणीयेष्टिम् । आन्तम् आ अन्तम् । आसमाप्ति अतन्वत अकुर्वन् ॥

एवञ्च,

॥ अपि पत्नीः समयाजयन् । तस्माद्धाप्येतर्हि दीक्षणीयायामिष्टावान्तमेव यज्ञं तन्वतेऽपि पत्नीः संयाजयन्ति* ॥

इदानींतनाः ॥

एवञ्च,

॥ तमनु न्यायमन्ववायन् ॥

छन्दो लङ् । तं न्यायं प्रकारमनुयन्ति† ॥

॥ ते प्रायणीयमतन्वत । तं प्रायणीयेन नेदीयोऽन्वागच्छन् ॥

नेदीयः प्रत्यासन्नतरम् ॥

॥ ते कर्मभिः समत्वरन्त ॥

सुपो भिस् । व्यापारेषु त्वरामकुर्वन् ॥

॥ तच्छंय्वन्तमकुर्वन् ॥

तत् प्रायणीयाख्यं कर्म ॥

॥ तस्माद्धाप्येतर्हि प्रायणीयं शंय्वन्तमेव भवति‡ । तमनु न्यायमन्ववायन् ।

---

* 'पत्नीसंयाजान्ता दीक्षणीया सन्तिष्ठते' इति आप० श्रौ० सू० १०-४-७.
† 'अन्ववायन् अवगतवन्तः, अनुष्ठितवन्तः' इति सायणः. ‡ 'शंय्वन्तेयम्' इति आ० श्रौ० सू० ४-३-२. 'शंय्वन्ता संस्थाप्या वा', 'पत्नीस्तु न संयाजयेद्' इति आप० श्रौ० सू० १०-२१-१३, १४.

त आतिथ्यमतन्वत। तमातिथ्येन नेदीयोऽन्वागच्छन्। ते कर्मभिः समत्वरन्त। तदिळान्तमकुर्वन्। तस्माद्धाप्येतर्ह्यातिथ्यमिळान्तमेव भवति*। तमनु न्यायमन्ववायन्।

त उपसदोऽतन्वत। तमुपसद्भिर्नेदीयोऽन्वागच्छन्। ते कर्मभिः समत्वरन्त। ते तिस्रः सामिधेनीरनूच्य तिस्रो देवता अयजन्। तस्माद्धाप्येतर्ह्युपसत्सु तिस्र एव सामिधेनीरनूच्य तिस्रो देवता यजन्ति॥

उपसद्यायेति तिस्रः सामिधेन्य इमामपि।
अग्निः सोमो विष्णुरिति देवतास्तिस्र एव च† ॥

॥ तमनु न्यायमन्ववायन्।
त उपवसथमतन्वत ॥

‡नाम्नोपवसथं तत् स्यात् प्राग्यागदिनादितम् ॥

॥ तमुपवसथ्येऽहन्याप्नुवन् ॥

तं यज्ञमुपवसथ्येऽहनि। स्वार्थे यः। सदोहविर्धानाग्नीषोमीयप्रणयनवसतीवरीपरिहारैः प्राप्नुवन्तः॥

॥ तमाप्त्वान्तं यज्ञमतन्वत ॥

---

* 'अथातिथ्येळान्ता' इति आ० श्रौ० सू० ४-५-१. 'इडान्ता संतिष्ठते' इति आप० श्रौ० सू० १०-३१-१५. † 'उपसद्याय मीढुष इति तिस्र एकैकां त्रिरन्वाहं ताः सामिधेन्यः', 'तासामुत्तमेन प्रणवेनाग्निं सोमं विष्णुमित्यावाह्य', 'इमां मे अग्ने समिधमिमामिति तु सामिधेन्यः' इति आ० श्रौ० सू० ४-८-५, ६, ११. ‡ 'उपवसथशब्देन सोमयागसमीपवासितत्वात् पूर्वस्मिन्नहन्यनुष्ठेयोऽग्नीषोमीयपशुर्विवक्षितः' इति सायणः.

एवञ्च,

॥ अपि पत्नीः समयाजयन् । तस्माद्धाप्येतर्ह्युपवसथ
आन्तमेव यज्ञं तन्वतेऽपि पत्नीः संयाजयन्ति ॥

तमनु न्यायमित्यत्र नास्ति ॥

॥ तस्मादेतेषु पूर्वेषु कर्मसु शनैस्तरां शनैस्तरामिवानुब्रूयात् ।
*अनूत्सारमिव हि ते तमायन् ॥

वने जिघृक्षुः शकुनिं यथा छन्नगतिर्भवेत् ।
एवं शनैस्तु गच्छन्तः सुरा यज्ञं प्रपेदिरे ॥
(उत्)सृ छन्नगतौ भावे घञ्यनोर्दीर्घ एव च ॥

॥ तस्मादुपवसथे यावत्या वाचा कामयीत तावत्यानुब्रूयात् ।
आप्तो हि स तर्हि भवतीति ॥

तर्हि तदानीम् । एत ईत्, कामयेत । वक्तुमिति शेषः । सूत्र्यते हि—
†'इदंप्रभृति कर्मणां शनैस्तराम्' इत्यादि ॥

॥ तमाप्त्वाब्रुवन् ॥

कथं,

॥ तिष्ठस्व नोऽन्नाद्यायेति ॥

‡प्रकाशने तङ् §श्लाघह्नुङ्स्थेति स्यात् सम्प्रदानता ।
+ + + + + + + + + नोऽन्नाद्यायेति वेऽब्रुवन् ॥

---

* 'उत्तरोत्तरभावी सार उत्सारस्तमनुसृत्यानुसृत्येति तस्यार्थः । दीक्षणीयेष्टेः सारभूता प्रायणीयेष्टिः । तदपेक्षया सोमयागस्य समीपवर्तित्वात् । एवमातिथ्यादिषु द्रष्टव्यम्' इति सायणः. † आ० श्रौ० सू० ४-१-२३. ‡ पा० सू० १-३-२३. § पा० सू० १-४-३४.

॥ स नेत्यब्रवीत् । कथं वस्तिष्ठेयेति तानीक्षतैव ॥

ऋज्याद् न ।

स नेत्युक्त्वाथ युष्मभ्यं तिष्ठेयाहं कथं न्विति ॥

॥ तमब्रुवन् ब्राह्मणेन च नश्छन्दोभिश्च सयुग् भूत्वान्नाद्याय तिष्ठस्वेति । तथेति ॥

यज्ञोऽब्रवीदिति शेषः ॥

॥ तस्माद्धाप्येतर्हि यज्ञः सयुग् भूत्वा देवेभ्यो हव्यं वहति ब्राह्मणेन च च्छन्दोभिश्च ॥

ब्राह्मणेन ऋत्विजा । छन्दोभिर्गायत्र्यादिभिर्देविकादेविभूतैः ॥

प्रथमः खण्डः ।

---

ब्राह्मणेनर्त्विजेत्युक्तं तत्र कांश्चित्तु निन्दति—

॥ त्रीणि ह वै यज्ञे क्रियन्ते जग्धं गीर्णं वान्तम् ॥

*जग्धमास्ये तु विक्षिप्तं गीर्णं स्याज्जठरं गतम् ।
उदरस्थं छर्दितेन निष्क्रान्तं वान्तमुच्यते ॥
जग्धगीर्णवान्तशब्दा इह लुप्तोपमा मताः ।
जग्धगीर्णवान्तनिभा व्रियन्ते कुत्सितर्त्विजः ॥

---

* 'जग्धं भक्षितावशिष्टं भोजनपात्रे स्थितम्' इति सायणः.

विविच्याह—

॥ तद्धैतदेव जग्धम् ॥

जग्धं तदेतदेव[1] ॥

किं तत्,

॥ यदाशंसमानमार्त्विज्यं कारयत उत वा मे दद्यादुत वा मा वृणीतेति ॥

आशंसमानं प्रार्थयमानम् । प्रार्थनाविषमाह—दक्षिणां मे दद्यात्, पश्यत्स्वन्येषु मां वृणीतेति । कारयते *'णिचश्च' इति तङ् ॥

॥ तद्ध तत् पराङेव यथा जग्धम् ॥

तत् तत्र । तदार्त्विज्यम् । पराङ्मुखः पराङ्, अशुभम्† ॥

॥ न हैव तद् यजमानं भुनक्ति ॥

‡'भुजोऽनवने' । हितं रक्षति ॥

॥ अथ हैतदेव गीर्णम् ॥

किं तत्,

॥ यद् बिभ्यदार्त्विज्यं कारयत उत वा मा न बाधेतोत वा मे न यज्ञवेशसं कुर्यादिति ॥

वेशसः भ्रेषः ॥

---

1. तदेतदेव । यदाशंसमानम्' घ. ङ. पाठः.

---

* पा० सू० १-३-७४ † 'निकृष्टम्' इति सायणः. ‡ पा० सू० १-३-६६.

॥ तद्ध तत् पराङेव यथा गीर्णम्। न हैव तद् यजमानं भुनक्ति ॥

॥ अथ हैतदेव वान्तं यदभिशस्यमानमार्त्विज्यं कारयते ॥

अभिशंसनमसतो दोषस्याध्यारोपः ॥

॥ यथा ह वा इदं वान्तान्मनुष्या बीभत्सन्त एवं तस्माद् देवाः ॥

तस्मादृत्विजो वान्तादिव । *'जुगुप्साविराम—' इत्यपादानत्वम्। बीभत्सन्ते अरुच्या वर्जयन्ति ॥

॥ तद्ध तत् पराङेव यथा वान्तम्। न हैव तद् यजमानं भुनक्ति। स एतेषां त्रयाणामाशां नेयात् ॥

एष्विच्छामपि नो गच्छेद् दण्डापूपिकया कृतिम् ॥

॥ तं यद्येतेषां त्रयाणामेकंचिदकाममभ्याभवेत् तस्यास्ति वामदेव्यस्य स्तोत्रे प्रायश्चित्तिः ॥

तमकामं त्रयाणामेकं कर्तृ अभि उपरि (आ)भवेत् पतेत्। वामदेव्यस्य स्तोत्रे †कयानस्तृचे गीयमाने प्रायश्चित्तिः समाधानमस्ति। वामदेवेन दृष्टं साम वामदेव्यम्। ‡'वामदेवाड्ड्यड्ड्यौ' ॥

अथ वामदेव्यं स्तौति—

॥ इदं वा इदं वामदेव्यम् ॥

---

* पा० सू० वा० १-४-२४. † ऋक्सं० ३-६-२४-१. ‡ पा० सू० ४-२-९.

वामदेव्यमिदं सर्वमात्मवित् स ऋषिः खलु ।
एवं ब्रह्मविदा दृष्टं वामदेव्यं हि पूजितम् ॥

किञ्च,

॥ यजमानलोकोऽमृतलोकः स्वर्गो लोकः ॥

यजमानामृतसुरस्थानत्वेन तृचस्तुतिः ॥

॥ तत् त्रिभिरक्षरैर्न्यूनम् ॥

तत् तत्र तृचे । *'अभीषुण' इति तृतीयमृग्वाच्यमक्षरैस्त्रिभिर्न्यूनम् । †त्रयः सप्तकाः पादनिचृत् । ‡'अभीषु पादनिचृत्' इति सर्वानुक्रमणी ॥

॥ तस्य स्तोत्र उपसृप्य त्रेधात्मानं विगृह्णीयात् पुरुष इति ॥

वि नियमेन गृह्णीयात् । अन्तर्णीतण्यर्थः, ग्राहयेत् । स्तावयेत् पुरुषाक्षराणि प्रतिपदम् । यथा अभीषुणः सखीनां पु, अविता जरितॄणां रु, शतं भवास्यूतिभिः ष इति ॥

॥ स एतेषु लोकेष्वात्मानं दधाति । अस्मिन्यजमान-
लोकेऽस्मिन्नमृतलोकेऽस्मिन् स्वर्गे लोके ॥

त्रिलोकरूपे तृचे आत्मानं स्थापयति ॥

किञ्च;

॥ स सर्वां दुरिष्टिमत्येति ॥

§दुरिष्टिं दुष्टत्विग्गानर्निमित्तं दोषम् । अत्येत्यतिक्रामति ॥

---

* ऋक्सं० ३-६-२४-३. † तथाच सर्वानुक्रमणी परि० ४-४. ‡ म० ४ सू० ३१. § 'दुरिष्टिं दोषोपेतं यज्ञम्' इति सायणः.

॥ अपि यदि समृद्धा इव ऋत्विजः स्युरितिहस्माहाथ हैतज्जपेदेवेति ॥

यद्यृत्विजः समृद्धाः स्युस्तदापि स्यादयं जपः ।
पुरुषेणान्वित इति *ब्रह्मवाद्याह कश्चन ॥

द्वितीयः खण्डः ।

---

छन्दस्ययुक्तयज्ञस्य कथामाह प्ररोचयन्—

॥ छन्दांसि वै देवेभ्यो हव्यमूढ्वा श्रान्तानि जघनार्धे यज्ञस्य तिष्ठन्ति यथाश्वो वाश्वतरो वोहिवांस्तिष्ठेदेवम् ॥

ऊढ्वोहिवानिति वहेः क्वसुस् सम्प्रसारणम् ।
ढत्वष्टुत्वढलोपेषु †वस्वेकाजाद्घसामिति ॥

अधोदेशे जघनदेशे ।

अश्वायां गर्दभाज्जातं वदन्त्यश्वतरं नराः ।
त्रिंशद्वरधृतौ दक्षं ‡वत्सोक्षर्षभजाश्वतः ॥

॥ तेभ्य एतं मैत्रावरुणं पशुपुरोळाशमनु देविकाहवींषि निर्वपेत् ॥

---

* 'ऐतरेयो मुनिराह स्म' इति सायणः. † पा० सू० ७-२-६७. ‡ पा० सू० ५-३-९१.

अवभृथादूर्ध्वमुदयनीयेष्ट्यन्ते । अनूबन्ध्याख्यपशोः पशुपुरोळाशस्यानन्तरं धातानुमतीराकासिनीवालीकुह्वाख्यदेवतापञ्चकस्य हवींषि निर्वपेत्* ॥

विविच्याह—

॥ धात्रे पुरोळाशं द्वादशकपालम् ॥

निर्वपेदित्येव ॥

॥ यो धाता स वषट्कारः ॥

सर्वच्छन्दोन्वयी ॥

॥ अनुमत्यै चरुम् ॥

निर्वपेत् ॥

॥ यानुमतिः सा गायत्री ॥

प्रातस्सवनभाक् ॥

॥ राकायै चरुम् ॥

निर्वपेत् ॥

॥ या राका सा त्रिष्टुप् ॥

सवनत्रयभाक् ॥

॥ सिनीवाल्यै चरुम् ॥

निर्वपेत् ॥

---

* 'यद्यनूबन्ध्ये पशुपुरोळाशमनु देविकाहवींषि निर्वपेयुर्धातानुमती राका सिनीवाली कुहूः' इति आ॰ श्रौ॰ सू॰ ६-१४-१५. 'देविकाहवींषि निर्वपति । धात्रे पुरोळाशं द्वादशकपालमिति पञ्च' इति आप॰ श्रौ॰ सू॰ १३-२४-१, २.

॥ या सिनीवाली सा जगती ॥

तृतीयसवनभाक् ॥

॥ कुह्वै चरुम् ॥

निर्वपेत् ॥

॥ या कुहूः सानुष्टुप्[*] ॥

सवनत्रयमुखभाक् ॥

श्रुतिप्रसिद्धधात्रादिवषडार्थैक्यमुच्यते—

॥ एतानि वात्र सर्वाणि च्छन्दांसि गायत्रं त्रैष्टुभं जागतमानुष्टुभम् ॥

[†]'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थे उपसंख्यानम्' इत्यण् ॥

ननु,

छन्दश्च हि यज्ञे कस्य (?) कथं सर्वत्वमुच्यते—

॥ अन्वन्यानि ॥

कर्मप्रवचनीयोऽनुर्हीने[‡] इत्येव तद्यथा ।
शब्दविद्याकारिणोऽन्ये अनु पाणिनिमञ्जसा ॥

कथम्,

॥ एतानि हि यज्ञे प्रतमामिव क्रियन्ते ॥

प्रक्रियन्तेतमाम् ॥

---

* 'गायत्री वा अनुमतिस्त्रिष्टुप् राका जगती सिनीवाल्यनुष्टुप् कुहूर्धाता वषट्कारः' इति तै० सं० ३-४-९. † पा० सू० वा० ४-२-५५. ‡ पा० सू० १-४-८६.

॥ एतैर्हवा अस्य च्छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति ॥

अस्य अनेन ॥

॥ य एवं वेद ॥

तेनापि ॥

पुनः स्तौति—

॥ तद्वै यदिदमाहुः सुधायां ह वै वाजी सुहितो दधातीति ॥

*उक्तार्थम् ॥

कथं,

॥ छन्दांसि वै तत् ॥

तत् सर्वम् ॥

॥ सुधायां ह वा एनं छन्दांसि दधति ॥

स्वर्ग एनं स्थापयन्ति ॥

॥ अननुध्यायिनं लोकं जयति य एवं वेद ॥

सः ।

वेदिता मनसा ध्यातुमशक्यं पदमाप्नुयात् ॥

॥ तद्धैक आहुर्धातारमेव सर्वासां पुरस्तात् पुरस्तादाज्येन परियजेत् तदासु सर्वासु मिथुनं दधातीति ॥

---

* page 588.

धातारमाज्येन यजेत् प्रत्येकं त्वग्रतश्चतुः ।
प्रत्येकमभिसंश्लेषा(द्) धातुश्च मिथुनं भवेत् ॥
इति केचिद्वदन्त्यन्ये नैवमित्येवमूचिरे—

॥ तदु वा आहुः ॥

(उ वा आहुः । ?) तत् तत्र ॥

॥ जामि वा एतद् यज्ञे क्रियते यत्र समानीभ्यामृग्भ्यां समानेऽहन् यजतीति ॥

(जामि) अश्रद्धा आलस्यम् । अहन् अहनि । समानी तुल्या । *'केवलमामक—' इति ङीप् ।

†धातादधातुधाताप्रयुगले चतुरीरिते ।
अश्रद्धा स्यादतो धाता चतुर्भ्यः प्राक् सकृद्भवेत् ॥

सदृष्टान्तमाह—

॥ यदि ह वा अपि बह्व्य इव जायाः पतिर्वाव तासां मिथुनं तद् यदासां धातारं पुरस्ताद् यजति तदासु सर्वासु मिथुनं दधाति ॥

पुरुषो बहुभार्योऽपि करोत्यासु हि मैथुनम् ।
तद्वद्धातानुमत्यादिचतुष्के मैथुनं चरेत् ॥

---

* पा० सू० ४-१-३०. † तै० सं० ३-३-११.

प्रागेकधातृपक्षं तु सूत्रकारोऽप्यसूत्रयत्* ।
तद्वावानुमती राका सिनीवाली कुहूरिति ॥

॥ इति नु देविकानाम् ॥

देवीनां देविकाख्यानामेवं कर्म समीरितम् ॥

तृतीयः खण्डः ।

---

॥ अथ देवीनाम् ॥

†अनूबन्ध्यायाः पशुपुरोळाशमनु हवींषि निर्वपेदिति शेषः ।

देव्यो नाम देवताः स्युः सूर्यश्च द्यौरुषा अपि ।
गौश्चैव पृथिवी चैव हवींष्यासां तु निर्वपेत् ॥

विविच्याह—

॥ सूर्याय पुरोळाशमेककपालम् ॥

निर्वपेत् ॥

देविकाभिः समा देवीरुक्त्वा छन्दस्त्वमुच्यते—

॥ ‡यः सूर्यः स धाता । स उ एव वषट्कारः ॥

उ खलु ।

---

* आ० श्रौ० सू० ६-१४-१५. † 'देवीनां चेत् सूर्यो द्यौरुषा गौः पृथिवी' इति आ० श्रौ० सू० ६-१४-१७. ‡ 'स वः स धाताथो स आदित्यः' इति शत० ब्रा० ९-५-१-३७.

ऐक्यं चासां श्रुतौ* सम्यक् प्रसिद्धमिति गृह्यताम् ॥

॥ दिवे चरुम् ॥

निर्वपेत् ॥

॥ या द्यौः सानुमतिः । सो एव गायत्री ॥

सा उ सो । †'ओत्' इति प्रगृह्यत्वम् ॥

॥ उषसे चरुम् ॥

निर्वपेत् ॥

॥ योषाः सा राका सो एव त्रिष्टुप् ।
गवे चरुम् ॥

निर्वपेत् ॥

॥ या गौः सा सिनीवाली । सो एव जगती ।
पृथिव्यै चरुम् ॥

निर्वपेत् ॥

॥ या पृथिवी सा कुहूः सो एवानुष्टुप् । एतानि वाव सर्वाणि च्छन्दांसि गायत्रं त्रैष्टुभं जागतमानुष्टुभमन्वन्यान्येतानि हि यज्ञे प्रतमामिव क्रियन्ते । एतैर्ह वा अस्य च्छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद । तद्वै यदिदमाहुः सुधायां ह वै वाजी सुहितो दधातीति। छन्दांसि वै तत् सुधायां ह वा

---

* तथाच शत० ब्रा०—'ता वा एता देव्यो दिशो चैताश्छन्दांसि वै दिशश्छन्दांसि देव्योऽथ कः प्रजापतिस्तयद् देव्यश्च कश्च तस्माद् देविकाः' इति ९-५-१-३९. † पा० सू० १-१-१५.

एनं छन्दांसि दधत्यननुध्यायिनं लोकं जयति य एवं वेद । तद्धैक आहुः सूर्यमेव सर्वासां पुरस्तात् पुरस्तादाज्येन परियजेत् तदासु सर्वासु मिथुनं दधातीति तदु वा आहुर्जामि वा एतद्यज्ञे क्रियते यत्र समानीभ्यामृग्भ्यां समानेऽहन् यजतीति यदि ह वा अपि बह्व्य इव जायाः पतिर्वाव तासां मिथुनं तद्यदासां सूर्यं पुरस्ताद्यजति तदासु सर्वासु मिथुनं दधाति ॥

उक्तार्थानि* ॥

॥ ता या इमास्ता अमूः ॥

देविकाः अमूः । इमाः देव्यः ॥

॥ या अमूस्ता इमाः ॥

व्यत्यस्तोक्तिरादरात् ॥

ततश्च,

॥ अन्यतराभिर्वाव तं काममाप्नोति य एतासूभयीषु ॥

देवीनां देविकानां च विकल्पः स्यात् फलैक्यतः ॥

॥ ता उभयीर्गतश्रियः प्रजातिकामस्य संनिर्वपेत् ॥

†'त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यः' इति यजुर्वेदे गतश्रियः श्रुताः ।

---

* pages 623, 624, 625. † तै० सं० २-५-४.

साङ्गोपाङ्गचतुर्वेदयुक्तो विप्रस्तु शुश्रुवान् ।
वृत्तवान् कोटिसारश्च ग्रामणीर्वैश्यजातिकः ॥
नृपोऽभिषिक्तो निर्लोभो राजन्य इति ते त्रयः ॥

सं सह । उभयीर्दैविका दैवीश्च । प्रजातिः प्रतिष्ठा सन्ततिश्च ॥

॥ न त्वेषिष्यमाणस्य ॥

उभयीः संनिर्वपेदित्येव ।

एषिष्यमाणः संतोषरहितो धनवानपि ।

इषेर्लृट् । शतुश्शानच् लुक् । स्य इट् । गुणः । (एवं स निन्दति ?) ॥

॥ यदेना एषिष्यमाणस्य संनिर्वपेदीश्वरो हास्य वित्ते
देवा अरन्तोर्यद्वा अयमात्मनेऽलममंस्तेति ॥

एनाः उभयीः । सं सह । जसस्तु , ईश्वराः । वित्ते धने । अरन्तोः रतिमकर्तुम् । *'ईश्वरे तोसुन्—' ।

क्रोधाभिभूतचित्ताय सत्ये चासत्यवादिने ।
सन्तोषगुणहीनाय देवा दद्युर्धनं नहि ॥

अत्रेतिहासमाह—

॥ ता ह शुचिवृक्षो गौपालायनो वृद्धद्युम्नस्याभिप्रतारिणस्यो-
भयीर्यज्ञे सं निरुवाप ॥

---

* पा० सू० ३-४-१३.

गोपायनाम्नो युवापत्यं फक्। (?) शुचिवृक्षो नाम ऋषिः। वृद्धद्युम्नस्य राज्ञः *आभिप्रतारिणस्य अभिप्रतारी सः। णिनिः। स्वार्थेऽणि †'इनण्यनपत्ये'। युद्धेषु सर्वसेना(वि)भवयुक्तस्य। ता उभयीः सं सह निः सम्यग् उवाप।

वपेर्लिण्णल् द्वित्ववृद्धिरभ्यासस्य प्रसारणम्।

सह निर्वापं कृतवान्॥

॥ तस्य ह रथगृत्सं गाहमानं दृष्ट्वोवाचेत्थम्॥

रथगृत्सं नाम कुमारं ज्ञानदृष्ट्या दृष्ट्वा उक्तवानित्थं शुचिवृक्षः॥ कथम्,

॥ अहमस्य राजन्यस्य देविकाश्च देवीश्चोभयीर्यज्ञे
समामादयं यदस्येत्थं रथगृत्सो गाहत इति॥

यत् यः। सं सह अमादयम्।

कृतवानस्मि मत्तास्ता मदेर्ण्यन्ताल्लङो मिपोऽम्।
‡तस्मादयं मातृकुक्षौ रथगृत्सस्तु वर्धते॥

शुचिवृक्षोक्तमित्थमिति पदं स्पष्टयति—

॥ चतुःषष्टिं कवचिनः शश्वद्धास्य ते पुत्रनप्तार आसुः॥

सोरम्। चतुरधिका षष्टिः। अस्य रथगृत्सस्य। शश्वदिति प्रसिद्धम्। ते ये प्रथिताः।

---

* 'अभितः शत्रून् प्रकर्षेण तरति निराकरोतीत्यभिप्रतारी कश्चिद्राजा तस्य पुत्र आभिप्रतारिणः पूर्वोक्तो वृद्धद्युम्नः' इति सायणः. † पा० सू० ६-४-१६४.
‡ 'समामादयं समुचित्य मादितवानस्मि सम्यगनुष्ठानेन तत्तद्देवता हर्षितवानस्मि, तत्प्रसादादयं रथगृत्सो राजपुत्रः क्रीडार्थं जले गाहते' इति सायणः.

पुत्रनप्तृगृहे त्वच्छामद्धे पौत्रापि (?) गृह्यते ।
*क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ यथा खलु ॥

आसुः बभूवुः ॥

अनूबन्ध्यापुरोळाशगान्वायत्या इतीरिताः ।
अग्निष्टोमान्त इत्युक्तो ज्योतिष्टोमः सपुच्छकः ॥

चतुर्थः खण्डः ।

---

अथोक्थ्यसंस्थामाख्यातु[1]मितिहासं ब्रवीति ह—

॥ अग्निष्टोमं वै देवा अश्रयन्त ॥

अग्निष्टोममिति यज्ञायज्ञीयसामनाम ॥

॥ उक्थान्यसुराः ॥

अश्रयन्तेत्येव । उक्थानि नाम साकमश्वसौभरनार्मेधानि सामानि ॥

॥ ते समावद्वीर्या एवासन्न व्यावर्तन्त ॥

†उक्तार्थम् ॥

॥ तान् भरद्वाज ऋषीणामपश्यत् ॥

उक्थाश्रितांस्तानसुरान् भरद्वाजो ददर्श ह ।
ऋषीणां मध्ये ॥

---

1. संस्था व्याख्यातुम्' क. पाठः.

---

* ऋक्सं० ८-२-२८-२. † Page 356.

कथम्,

॥ इमे वा असुरा उक्थेषु श्रितास्तानेषां न कश्चन पश्यतीति ॥

एषां देवानां मध्ये न कश्चिदपीति ज्ञात्वा ॥

॥ सोऽग्निमुदह्वयत ॥

उत् उच्चैः अह्वयदाहूतवानग्निम् ॥

कथम्,

॥ *एह्यू षु ब्रवाणि ते अग्न इत्थेतरा गिर इति ॥

अनेनार्धर्चेन ॥

व्याचष्टे—

॥ असुर्या ह वा इतरा गिरः ॥

†'असुरस्य स्वम्' इति यत् । आ इहि आगच्छ । उ पुनः । सु साधु ब्रवाणि ते । हे अग्ने ‡इत्था सत्यम् । इतराः अन्याः गिरः वाचः वर्तन्त इति शेषः । इति ह्यर्थः ॥

॥ सोऽग्निरुपोत्तिष्ठन्नब्रवीत् ॥

आहूतः सोऽग्निः । §उप किञ्चित् ॥

कथं,

॥ किंस्विदेव मह्यं कृशो दीर्घः पलितो वक्ष्यतीति ॥

* ऋक्सं०४-५-२४-१. † पा० सू० ४-४-१२३. ‡ 'इत्था इत्यमनेन प्रकारेण श्रुत्यन्तरादिति शेषः। इतरा देववाक्यार्थव्यतिरिक्ता गिरोऽसुरवाचः', § 'तत्समीपं प्रत्यागन्तुम्' इति सायणः.

मह्यं ममार्थाय । स्विदित्यज्ञाने । कृशस्तपसा क्लिष्टतनुः दीर्घः प्रकृत्यै-वोच्चैर्भूतः पलितः जरान्वितः ॥

उपपादयति—

॥ भरद्वाजो ह वै कृशो दीर्घः पलित आस ॥

बभूव ॥

॥ सोऽब्रवीत् ॥

लब्धाभिमुख्यः स ऋषिरग्निं प्रत्यब्रवीदिदम् ॥

॥ इमे वा असुरा उक्थेषु श्रितास्तान् वो न कश्चन पश्यतीति ॥

वो युष्माकं मध्ये ॥

अथ,

॥ तानग्निरश्वो भूत्वाभ्यत्यद्रवत् ॥

तानसुरान् । अभि प्रति अति सुष्ठु ॥

॥ यदग्निरश्वो भूत्वाभ्यत्यद्रवत् तत् साकमश्वं सामाभवत् ॥

सामविदां प्रसिद्धम् *' एहृषु ' इत्युत्पन्नम् ॥

॥ तत् साकमश्वस्य साकमश्वत्वम् ।

तदाहुः साकमश्वेनोक्थानि प्रणयेदप्रणीतानि वाव तान्युक्थानि यान्यन्यत्र साकमश्वादिति ॥

---

* ऋसं० ४-५-२४-१.

प्रणयेदारभेत । दार्थे त्रह्, अन्येन आरब्धानि अनारब्धान्येवेति ॥

॥ *प्रमंहिष्ठीयेन प्रणयेदित्याहुः ॥

उक्थानीत्येव ॥

कुतः,

॥ प्रमंहिष्ठीयेन वै देवा असुरानुक्थेभ्यः प्राणुदन्त ॥

प्रणोदो द्रावणम् ॥

॥ तत् प्राहैव प्रमंहिष्ठीयेन नयेत् प्र साकमश्वेन ॥

अह वेत्यर्थः ।

उक्थानि साकमश्वेन प्रमंहिष्ठीयतोऽपिवा ।
आरभेत होत्रकाणां स्तोत्राणीति विनिर्णयः ॥

पञ्चमः खण्डः ।

---

अथ होत्रकशस्त्राणि त्रीणि† चोक्थ्ये ब्रवीति ह—

॥ ते वा असुरा मैत्रावरुणस्योक्थमश्रयन्त ।
सोऽब्रवीदिन्द्रः कश्चाहं चेमानितोऽसुरान् नोत्स्यावहा इति ॥

---

* 'प्रमंहिष्ठाय गायत:' (ऋक्सं० ६-७-१४-३) इत्यस्यामृच्युत्पन्नं साम प्रमंहिष्ठीयम्. † तथाचापस्तम्बः— 'उक्थ्येदमिष्टोमवमसानुवषट्त्रिन्ववमस्तगोभ्यो राज्ञानमतिरेचयति' इति श्रौ० सू० १४-१-६.

इतः मैत्रावरुणस्योक्थात् । नोत्स्यावहै । वसो वदि, नोत्स्यावः ।

निश्चित्यात्मानमकरोत् सहायान्वेषणं पुनः ।

इत्यर्थः ॥

॥ अहं चेत्यब्रवीद् वरुणः ॥

नोत्स्यावहा इत्येव । अहं च त्वं च ॥

॥ तस्मादैन्द्रावरुणं मैत्रावरुणस्तृतीयसवने शंसति ॥

*'इन्द्रावरुणा युवम्' इति ॥

॥ इन्द्रश्च हि तान् वरुणश्च ततोऽनुदेताम् ॥

तस आताम् । †अनुदताम् । ततः प्रशास्तुरुक्थात् ॥

॥ ते वै ततोऽपहता असुरा ब्राह्मणाच्छंसिन उक्थमश्रयन्त । सोऽब्रवीदिन्द्रः कश्चाहं चेमानितोऽसुरान् नोत्स्यावहा इति । अहं चेत्यब्रवीद् बृहस्पतिः । तस्मादैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसी तृतीयसवने शंसति ॥

(प्रगंहिष्ठायी) ‡'उदप्रुत' इति ॥

॥ इन्द्रश्च हि तान् बृहस्पतिश्च ततोऽनुदेताम् ।
ते वै ततोऽपहता असुरा अच्छावाकस्योक्थमश्रयन्त ।

---

* ऋक्सं० ५-६-२-१. 'इन्द्रावरुणा दशैन्द्रावरुणं जागतं तु' इति सर्वानुक्रमणी म० ७. सू० ८२. † 'अपनुदेताम्' इति सायणः ‡ ऋक्सं० ८-२-१७-१.

सोऽब्रवीदिन्द्रः कश्चाहं चेमानितोऽसुरान्नोत्स्यावहा इति। अहं चेत्यब्रवीद्विष्णुः । तस्मादैन्द्रावैष्णवमच्छावाकस्तृतीयसवने शंसति ॥

*'सं वां कर्मणा' इति ॥

॥ इन्द्रश्च हि तान् विष्णुश्च ततोऽनुदेताम् ॥

एवं,

॥ द्वन्द्वमिन्द्रेण देवताः शस्यन्ते ॥

देवता इन्द्रसहिताः शस्यन्ते तिस्र एषु हि ।
वरुणो वाक्पतिर्विष्णुर्द्वन्द्वं सहितमुच्यते ॥

॥ द्वन्द्वं वै मिथुनम् ॥

मिथुनं मैथुनं द्वौ हि कुरुतः स्त्री पुमानिति ॥

॥ तस्माद् द्वन्द्वान्मिथुनं प्रजायते ॥

मिथुनं जायते द्वन्द्वाद्दुहिता स्त्री सुतः पुमान् ॥

॥ प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद ॥

सः ॥

शस्त्रत्रयं होत्रकाणामुक्थाख्यं त्वेवमीरितम् ।
अथ पोतुश्च नेष्टुश्च प्रसङ्गात् किञ्चिदुच्यते—

॥ अथ हैते पोत्रीयाश्च नेष्ट्रीयाश्च चत्वार
ऋतुयाजाः षळृचः ॥

---

* ऋक्सं० ५-३-१३-१. 'सं वामष्टावैन्द्रावैष्णवम्' इति सर्वानुक्रमणी म० ६ सू० ६९.

भवन्तीति शेषः ।

पोतुर्नेष्टुश्चेदमित्थं *होत्राभ्यस्त्वस्तु याज्जसि ।
ऋतुयाजद्वादशके द्वौ द्वितीयाष्टमौ तु यौ ।
पोतुस्तौ नेष्टुरेतौ हि तृतीयो नवमश्च यः ॥

ते 'होता यक्षन्मरुतः पोत्राद्' 'देवं द्रविणोदाम्' इति च । 'ग्रावो नेष्ट्राद्' 'देवं द्रविणोदाम्' इति च ।

द्वयोः प्रस्थितयाज्याः षट् तिस्रस्तिस्र ऋचस्त्विति ।

†'मरुतो यस्य हि क्षये' ‡'अर्वाङेहि सोमकामं त्वाहुः' §'आ वो वहन्तु' इति पोतुः । ¶'अग्ने पत्नीरिहावह' $'तवायं सोमः' ‖'अमेव नः सुहवा' इति नेष्टुः‡ ॥

ततः किं,

## ॥ सा विराड् दशिनी ॥

दशत्वयुक्ता दशिनी विराड् श्रीश्चादिश्रीविनेः (?) ॥

---

* पा० सू० ५-१-१३५. † ऋक्सं० १-६-११-१. ‡ ऋक्सं० १-७-१६-४. § ऋक्सं० १-६-५-६. ¶ ऋक्सं० १-२-५-४. $ ऋक्सं० ३-२-१८-१. ‖ ऋक्सं० २-७-२१-३. ‡ तथाच आ० श्रौ० सू०—'मरुतो यस्य हि क्षयेऽग्ने पत्नीरिहावह ................इति प्रातस्सवननिकषः प्रस्थितयाज्याः' 'अर्वाङेहि सोमकामं त्वाहुस्तवायं सोमस्त्वमेह्यर्वाङ् ....................इति माध्यंदिन्यः' 'आवो वहन्तु सप्तयो रघुष्यदोऽमेव नः सुहवा आहिगन्तन.......................इति तार्तीयसवनिकषः' इति ५-५-१८, १९. 'मरुतो यस्य हि क्षये इति पोता यजति अग्ने पत्नीरिहावहेति नेष्टा' 'अर्वाङेहि सोमकामं त्वाहुरिति पोता तवायं सोमस्त्वमेह्यर्वाङिति नेष्टा' 'आ वो वहन्तु सप्तयो रघुष्यद इति पोता यजति अमेव नः सुहवा आहि गन्तनेति नेष्टा यजति' इति गो० ब्रा० २-२-२०, २१, २२.

॥ तद् विराजि यज्ञं दशिन्यां प्रतिष्ठापयन्ति
प्रतिष्ठापयन्ति ॥

पोत्रा नेष्ट्रा च सम्बद्धैश्चतुर्भिः षड्भिरेव च ।
दशत्वसंख्यायोगेन विराड्येवं महाध्वरम् ।
सर्वे प्रतिष्ठापयन्ति मन्त्रा अप्यृत्विजोऽपि वा ॥

*द्विरुक्तिरुक्तार्था ॥

षष्ठः खण्डः ।

इति षड्गुरुशिष्यविरचितायां महिदासैतरेयब्राह्मणवृत्तौ
सुखप्रदायां पञ्चदशोऽध्यायः[1] ॥

## तृतीयपञ्चिका समाप्ता ।

---

प्रथमः संपुटः समाप्तः ॥

॥ शुभं भूयात् ॥



---

१. 'इति ब्राह्मणवृत्तौ पञ्चदशोऽध्यायः' ब. पाठः.

---

* page 44.

## Travancore University Publications.

---

*IN THE PRESS:*

1. AITAREYA BRAHMANA with the Vritti of SADGURUSISYA. Vol II.
2. SARASVATIKANTHABHARANA by BHOJADEVA with the Vritti of NARAYANA DANDANATHA. Part IV.
3. PRAKRIYASARVASVA by NARAYANA BHATTA. Part III.
4. TANTRASAMUCCAYAVIVARANA.
5. MIMAMSASLOKAVARTIKA with the commentary kasika of SUCARITAMISRA.

*UNDER PREPARATION:*

1. VADHULA SRAUTA VYAKHYA by ARYADASA.
2. UKARA by NAYANASUKHOPADHYAYA.
3. HARITADHARMA SASTRA.
4. SANKARSAKANDABHASYA by DEVASWAMIN.

---

